# ॥ विद्वदभ्यर्थनम् ॥

सुरपूजा—नामावलिहारं वध्वार्पये हरेः कंठे ॥ तुष्यत्वनेन देवोऽर्चयतां हार्द सदैव पूरयतु ॥ १ ॥

ग्रंथारंभे मंगलरूपेण नुतो यः शिष्टैर्निष्प्रत्यूहसमाप्तिप्रचयार्थम् ॥ श्रौतैः स्मार्तैः कर्मभिराराध्यमनंतं भक्त्या देवं साजलिरीशं प्रणतोऽस्मि ॥ १ ॥ अर्चनं भगवतः करणीयं नाम तस्य मुहुरुच्चरणीयम् ॥ वेदशास्त्रसुपथाचरणीयं प्राप्नुयात्फलमतो रमणीयम् ॥ २ ॥ क्वचित्कलिविजृंभणे सुकृतिनोऽधुनाप्यादराद्यजंत्यनिशमीश्वरं मखजपार्चनैर्ये मुहुः ॥ त्रिवर्गफलभागिनो भगवतः कृपावीक्षणाद्भवंति जगतीतलेऽतिसुखिनः परत्रापि ते ॥ ३ ॥ कलौ पाखंडाः स्युर्द्विजिननिरता धर्मविमुखा जनाः प्रायः सत्या मुनिभणितिरेषा नहि मृषा ॥ परं त्वेतावंतं हरिगुणकथार्चादिनिरता विराजंते धन्या जगति बहुमान्याः किमु न ते ॥ ४ ॥ सदाचारासक्ताः क्वचन सुतसंस्कारनिरताः परे शांत्युद्युक्ता व्रतनियमरक्ताः कतिपये ॥ निवापार्थे सक्ताः क्वचन यतिदीक्षैकनिरता विराजंते तेषां परिचरणमीशार्हणमिव ॥ ५ ॥ सदाचारादियत्नंतश्रुतिमार्गानुवर्तिनाम् ॥ ब्राह्मणानां यथाशक्ति साहाय्यं करवाण्यहम् ॥ ६ ॥ इति स्वांते समारूढा लोकसेवा चिरं

मम ॥ पूर्णासीदीशकृपया ब्रह्मकर्मसमुच्चयात् ॥ ७ ॥ आलोच्य ग्रथजातं सरणिमपि विदां नैकशो याज्ञिकानां संदर्भेण प्रयत्नाद्ग्रथितवति यथाज्ञानमुक्तं समूहम् ॥ आयातं मत्पुरस्तादहमहमिकयैकत्र सर्वं कथं नु संगृह्णीयामितीवोर्वरितमिह निवध्नामि पूजासमूहम् ॥ ८ ॥ विविधसुरपूजास्तस्मिन्नो मया विनिवेशिताः पुरुषमहिला यामिर्देवान्यजंति दिवानिशम् ॥ इति विकलतां दूरीकर्तुं सुहृद्धितसूचनात्कृतप-रिकरोऽगुम्फं पूजासमुच्चयमादरात् ॥ ९ ॥ ग्रहणं कृतमत्र पूजनानां शरदंतः सुधियामवश्यकानाम् ॥ रविसंक्रमपातदानधर्माप्लवनामाव-लिसंचयस्य यत्नात् ॥ १० ॥ काश्चिद्ग्रंथांतर्गता एव पूजाः कृत्वा न्यूनाधिक्यमस्मिन्गृहीताः ॥ काश्चिच्छ्रद्धावद्भिरूरीकृतास्तास्तेभ्यः संपाद्येह संयोजिताश्च ॥ ११ ॥ ग्रंथैः पुरातनैरेव गतार्थाः स्मः कुतो न्वयम् ॥ आडंवरो वृथास्येति मा कुर्वत्वरतिं वुधाः ॥ १२ ॥ न सर्वलभ्या अखिला निवंधा लाभेपि चेष्टोद्धरणेऽस्ति यत्नः ॥ महानिवंधाल्लघुमार्गणं नो भूयाद्गिरेर्मूपकलाभवत्किम् ॥ १३ ॥ निंदंतु नाम कुशला अथवा स्तुवंतु कुर्वंत्वनेन यजनं सुलभीकृतेन ॥ इत्थं विचार्य निरमायि समुच्चयोऽयं तुष्यंति वालचरितैः सुहृदोऽनवद्यैः ॥ १४ ॥ निंदाभिया किमु सदाचरणं न कार्यं गेहं किमुंदुरुभिया विदधीत नैव ॥ नो दूपणं भवति शक्त्यनुरूपकार्ये खे नित्यमात्मसदृशं विहगाः पतंति ॥ १५ ॥ गीतास्वर्जुनमावभाण भगवान्दोपैः समारंभका धूमेनाग्निरिवावृता इति जनानुद्बोधयंश्चेद्दतम् ॥ नाश्चर्यं लघुशे-मुषीविरचिते ग्रंथेऽस्मदीये क्वचिद्दोपाः स्युः परिमार्जयंत्विति सतस्तानन्वहं प्रार्थये ॥ १६ ॥ शैवल-तुप-मलयुञ्ज्यपि जल-कण-वासांसि यत्नतो निपुणाः ॥ किं नो गालन-संहति-संक्षालनसंस्कृतानि सेवंते ॥ १७ ॥ दोपमेवमपमार्ज्य कृतज्ञा आदरेयुरिममल्पविलासम् ॥

लक्ष्मणांगजनिरर्थयते तान्

वासुदेवपणशीकरशर्मा ॥ १८ ॥

# ग्रंथार्पणम्

अयं ग्रंथः कर्त्राखिलसुरसपर्यादिविषयो निबंधेभ्यः सारं ललिततरमुद्धृत्य रचितः ।
विपश्चित्किंचिज्ज्ञोभयविधमहीदेवपरिषत्कृपापांगावाप्त्यै स च तदुपहाराय भवतु ॥ १ ॥

ब्राह्माचारैकसाध्यं परफलमपवर्गांतमुद्घोषितं चेत्
सोऽप्यासीद्वेदशास्त्रस्मृतिनिखिलपुराणैकमूलोत्थितश्चेत् ।
तेषां भूदेवसंघादपरमनुगुणं नैव सद्भाजनं चेत्
तं मुक्त्वा ग्रंथमेनं क नु तदसदृशेऽपात्रभूतेऽर्पयेयम् ॥ २ ॥

# पूजासमुच्चयस्थविषयानुक्रमणिका ।

## मध्येमध्येपूजांतर्गताविषयाः ॥



समाप्तेयंपूजासमुच्चयानुक्रमणिका ।

॥ १ ॥ मंगलाचरणम् ॥ श्रीगणेशायनमः ॥ यंनिर्जरासुरनराअखिलार्थसिद्ध्यैभूयंतरायहतयेनुदिनंनमंति ॥ तंभक्तकामपरिपूरणकल्पवृक्षंभक्त्यागणेशमखिलार्थदमानतोस्मि ॥ १ ॥ प्राक्कृप्तसर्वसंग्राह्यब्रह्मकर्मसमुच्चये ॥ नकृतोविस्तरभियानानापूजादिसंग्रहः ॥ २ ॥ अतोऽसावारब्धःसुरनिकरपूजासमुदयोनृणांनित्याःकाम्याअनियतनिमित्तादिविषयाः ॥ सपर्यादेवानांपुरुषमहिलासंघविहितास्तथानामावल्योऽवसरमनुलक्ष्यात्ररचिताः ॥ ३ ॥ पूजाव्रतादिविषयावहवोनिबंधाःसंत्येवयद्यपिनतेऽखिललोकलभ्याः ॥ निष्कृष्यसारमखिलार्थमिहार्पितेभ्यःपूजासमुच्चयममुंलघुमातनोमि ॥ ४ ॥

॥ २ ॥ ध्वजारोपणंपंचांगश्रवणंच ॥ श्रीगणेशायनमः ॥ संवत्सरप्रतिपदिप्रातर्गृहांगणाद्युपलिप्यरंगवल्लीतोरणादिभिरलंकृत्य सपरिवारस्तैलाभ्यंगंकृत्वामांगलिकस्नानंविधायकृतनित्यक्रियोवस्त्रालंकारभूषितोगृहद्वारदेशेसुशोभितंपुष्पमालादिविभूषितमारक्तवस्त्रनिर्मितंध्वजमुच्छ्रित्य आचम्यप्राणानायम्यदेशकालोत्कीर्तनांतेअस्मिन्प्राप्तनूतनवत्सरेस्मद्गृहेऽब्दांतनित्यमंगलावाप्तयेध्वजारोपणपूर्वकंपूजनंतथाआरोग्यावाप्तयेनिंबपत्रभक्षणंचकरिष्ये ॥ गणपतिंसंपूज्यन्यासादिविधायॐब्रह्मध्वजायनमःइतिषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ ब्रह्मध्वजनमस्तेस्तुसर्वाभीष्टफलप्रद ॥ प्राप्तेऽस्मिन्वत्सरेनित्यंमद्गृहेमंगलंकुरु ॥ ततोमरीचहिंग्वादिसंस्कृतंनिंबपत्रंभक्षयेत् ॥ ततोदेशकालौनिर्दिश्यपंचांगश्रवणकल्पोक्तफलावाप्तयेज्योतिर्विन्मुखात्पंचांगश्रवणंकरिष्ये ॥ गणपतिंज्योतिर्विदंचसंपूज्यतन्मुखात्पंचांगस्थराजावल्यादिश्रुत्वातंवस्त्रदक्षिणादिभिःसंतोष्यपंचांगदानंकृत्वाविप्रसुहृद्युतोमिष्टान्नंभुंजीत ॥ इतिसंवत्सरप्रतिपद्विधिः ॥ ॥ छ ॥ ॥ छ ॥

॥ ३ ॥ आसनविधिर्भूशुद्धिः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुककर्मपूजांवाकरिष्ये ॥ तत्रादौशरीरशुद्धये भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठांतर्मातृकावहिर्मातृकान्यासांश्चकरिष्ये ॥ इतिसंकल्प्य ॥ उत्पतंत्विहभूतानिपृथिव्यंतरवासिनः ॥ आसनादौनमस्कृत्यब्रह्मकर्मसमारभे ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अप क्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायन मस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिवामपादपार्ष्णिनाभूमिंत्रिस्ताडयेत् ॥ समुद्रवसनेदेविपर्वतस्तनमंडिते ॥ विष्णुपत्निनमस्तुभ्यं पादस्पर्शंक्षमस्वमे ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसनेविनियोगः ॥ पृथ्वित्वयाधृतालोकादेवित्वंवि ष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अनंतासनाय० विमलासनाय० योगासनाय० कूर्मासनाय० आधारशक्त्यै० दुष्टविद्राविणनृसिंहाय० मध्येपरमसुखाय० ॐ भूर्भुवःस्वः इत्यासनेउपविश्य ॥ अंगुष्ठाग्रेतुगोविंदंतर्जन्यांतुमहीधरं ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥ कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येतुमाधवं ॥ एवंचकरविन्यासंसर्वपापप्रणाशनं ॥ (ॐकारःसर्वत्रादौ ) ॐ भूःपादाभ्यांनमः भुवःजानुभ्यां० स्वःकटिभ्यां० महःनाभ्यै० जनःहृदयाय० तपःकंठाय० सत्यंललाटाय० परब्रह्मशिरसेस्वाहा ॥ स्वशिरसि गुंगुरुभ्यो० पंपरमगुरुभ्यो० पंपरात्परगुरुभ्यो० पंपरमेष्ठिगुरुभ्यो० ॥ दक्षिणभुजे गंगणपतये० ॥ वामभुजे दुंदुर्गायै० ॥ दक्षिणजानुनि क्षंक्षेत्रपालाय० ॥ वामजानुनि संसरस्वत्यै० ॥ हृदये अंआत्मने० पंपरमात्मने० संसत्त्वात्मने० रंरजआत्मने० तंतमआत्मने० ॥ नमोस्त्वनंतायनमोस्तुवेधसेनमोवसिष्ठायनमोस्तुशक्तये॥पराशरा

याथनमोस्तुसात्वतेनमोस्तुतेसत्यवतीसुताय ॥ नमोगुरुभ्योगुरुपादुकाभ्योनमःपरेभ्यःपरपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादु
काभ्योनमोस्तुलक्ष्मीपतिपादुकाभ्यः ॥ ॐ नमोमुहद्भ्योनमो० सर्वभूतनिवारणायसशरायहःसशार्ङ्गायसुदर्शनायास्त्रराजायहुं
फट् इतिछोटिकाबंधंकृत्वा उदकोपस्पर्शः प्राणायामः ॥ धर्मकंदसमुद्भूतंज्ञाननालंसुशोभितं ॥ ऐश्वर्याष्टदलोपेतंपरंवैराग्यक
र्णिकं ॥ अधोमुखंतुहृत्पद्मंप्रणवेनोर्ध्वमुन्नयेत् ॥ ॐ इतिप्रणवेनविकसितंकृत्वातत्रत्यजीवात्मानंहंसइतिमंत्रेणांकुशमुद्रयासुषु
म्नानाडीमार्गेणब्रह्मरंध्रंनीत्वा तत्रत्यसहस्रदलपद्मकर्णिकांतर्गतेनपरमात्मनासहैक्यभावमापादयेत् हंसःसोहं ॥ ब्रह्महत्याशिर
स्कंचस्वर्णस्तेयभुजद्वयं ॥ सुरापानहृदायुक्तंगुरुतल्पकटिद्वयं ॥ तत्संसर्गिपदद्वंद्वमंगप्रत्यंगपातकं ॥ उपपातकरोमाणंरक्तश्म
श्रुविलोचनं ॥ अधोमुखंकृष्णवर्णमंगुष्ठपरिमाणकं ॥ खड्गचर्मधरंपापंवामकुक्षौविचिंतयेत् ॥ एवंलक्षणंपापपुरुषंवामकुक्षौवि
चिंत्य यमितिवायुबीजेन १६ षोडशवारंवामनासापुटेनसंशोष्य रमित्यग्निबीजेन ६४ चतुःषष्टिवारंकुंभकेनसंदह्य पुनर्यमिति
बीजेन ३२ द्वात्रिंशद्वारंतद्भस्मदक्षिणनासापुटेनबहिर्निःसार्य वमित्यमृतबीजेन १६ षोडशवारममृतीकुर्यात् ॥ इतिभूशुद्धिः ॥

॥ ४ ॥ भूतशुद्धिः ॥ पादादिजानुपर्यंतंपृथिवीस्थानंचतुरस्रंचतुर्दिक्षुलांछितंतन्मध्येपीतवर्णलंबीजयुक्तंध्यायेत् ॐस्योना
पृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ लंभूम्यैनमः जान्वादिनाभिपर्यंतमपांस्थानंधनुराकारमुभयोःकच्योःश्वेतप
द्मलांछितंतन्मध्येश्वेतवर्णंवंबीजयुक्तंध्यायेत् ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभेष
जीः ॥ वंअद्भ्योनमः नाभ्यादिहृदयपर्यंतमग्निस्थानंत्रिकोणंस्वस्तिकलांछितंतन्मध्येरक्तवर्णंरंबीजयुक्तंध्यायेत् ॐअग्निंदूतंवृणीम

हेहोतारंविश्ववेदसं ॥अस्ययज्ञस्यसुक्रतुं॥ रंअग्नयेनमः हृदयादिभ्रूमध्यपर्यंतंवायुस्थानंषट्कोणंषड्विंदुलांछितंतन्मध्येधूम्रवर्णं यंवीजयुक्तंध्यायेत् ॐवायोशुतंहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपाजसा॥ यंवायवेनमः भ्रूमध्यादिब्रह्मरंध्रपर्यंतमाकाशस्थानंवृत्ताकारंध्वजलांछितंनीलवर्णंहंवीजयुक्तंध्यायेत्ॐआदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं॥परोयदिध्यतेदिवा॥ हंआकाशायनमः ॥ पृथिवींपंचगुणांलंवीजेनषडुद्धातप्रयोगेणाप्सुप्रविलापयामि लंलंलंलंलंलं ॥ चतुर्गुणाअपःवंवीजेनपंचोद्धातप्रयोगेणाग्नौप्रविलापयामि वंवंवंवंवं ॥ त्रिगुणंवह्निंरंवीजेनचतुरुद्धातप्रयोगेणवायौप्रविलापयामि रंरंरंरं ॥द्विगुणंवायुंयंवीजेनत्रिरुद्धातप्रयोगेणाकाशेप्रविलापयामि यंयंयं ॥ एकगुणमाकाशंहंवीजेनद्विरुद्धातप्रयोगेणाहंकारेप्रविलापयामि हंहं॥ तमहंकारंमहत्तत्त्वेप्रविलापयामि तन्महत्तत्त्वंप्रकृतौप्रविलापयामि तांप्रकृतिंपरब्रह्मणिप्रविलापयामि इतिप्रविलाप्यशुद्धोहंमुक्तोहंसच्चिदानंदस्वरूपोहंब्रह्माहमस्मीतिचिरंभावयेत्॥ तस्मात्सर्वज्ञात्सर्वशक्तेःपरब्रह्मणःसकाशात्प्रकृतिःप्रकृतेर्महान्महतोहंकारःअहंकारादाकाशःआकाशाद्वायुःवायोरग्निःअग्नेरापःअद्भ्यःपृथिवीपृथिव्याओषधयःओषधीभ्योन्नंअन्नाद्रेतःरेतसःपुरुषःसवाएषपुरुषोन्नरसमयःइतिदेहोत्पत्तिंविभाव्यपुनर्जीवात्मानंहंसइतिमंत्रेणांकुशमुद्रयासुषुम्नानाडीमार्गेणब्रह्मरंध्रादानीयहृदिप्रतिष्ठापयेत् ॥ हंसःसोहं ॥ इतिभूतशुद्धिः ॥

॥ छ ॥ ॥ छ ॥

॥ ५ ॥ प्राणप्रतिष्ठा॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामाथर्वाणिछंदांसि पराप्राणशक्तिर्देवता आंवीजं ह्रींशक्तिः क्रोंकीलकं स्वशरीरेप्राणप्रतिष्ठापनेविनियोगः॥ तत्रऋष्यादिन्यासः ॥ ब्रह्मविष्णुमहेश्वरऋषिभ्यो

नमःशिरसि ऋग्यजुःसामाथर्वछंदोभ्योनमःमुखे पराप्राणशक्तिदेवतायैनमःहृदये आंबीजायनमः गुह्ये ह्रींशक्तयेनमःपादयोः क्रोंकीलकायनमःसर्वांगे प्राणप्रतिष्ठापनेविनियोगः ॥ ॐ आंह्रींक्रोंअंकंखंगंघंङंआंक्रोंह्रींआं पृथिव्यप्तेजोवाय्वाकाशात्मने अंगुष्ठाभ्यांनमःहृदयायनमः ॥ ॐआंह्रींक्रोंइंचंछंजंझंञंईक्रोंह्रींआं शब्दस्पर्शरूपरसगंधात्मनेतर्जनीभ्यांनमःशिरसेस्वाहा॥ॐआं ह्रींक्रोंउंटंठंडंढंणंऊंक्रोंह्रींआं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेमध्यमाभ्यांनमःशिखायैवषट् ॥ ॐआंह्रींक्रोंएंतंथंदंधंनंऐंक्रोंह्रींआं वाक्पाणिपादपायूपस्थात्मनेअनामिकाभ्यांनमःकवचायहुं ॥ ॐआंह्रींक्रों ओंपंफंबंभंमंऔंक्रोंह्रींआं वक्तव्यादानगमनविसर्गानंदात्मनेकनिष्ठिकाभ्यांनमःनेत्रत्रयायवौषट् ॥ ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआं मनोबुध्यहंकारचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यांनमःअस्त्रायफट्॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशं पंचबाणान्॥बिभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः॥ चत्वारिंवाकृ०इतिजप्त्वा ॐ लं पृथिव्यात्मकंप्राणशक्त्यैगंधंकल्पयामि ॐ हं आकाशात्मकंप्राणशक्त्यैपुष्पंक०ॐ यं वाय्वात्मकंप्राणशक्त्यैधूपं क० ॐरं वह्न्यात्मकंप्राणशक्त्यैदीपं०ॐवं अमृतात्मकंप्राणशक्त्यैनैवेद्यंक० ॐसंसर्वात्मकान्प्राणशक्त्यैसर्वोपचारान्क०ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआं हंसःसोहं ममप्राणाइहप्राणाः॥ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआंहंसः सोहंममजीवइहस्थितः ॥ ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआंहंसःसोहंममसर्वेंद्रियाणि॥ॐआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षं अःक्रोंह्रींआंहंसःसोहंममवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहागत्यस्वस्तयेसुखेनसुचिरंतिष्ठंतुस्वाहा इतिशिरसिहृदिवाकरंद

त्वात्रिःसकृद्वाजस्वा ॥ ॐ असुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानःस्वस्ति ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॐ कारंपंचदशवारंजपेत् ॥ इतिप्राणप्रतिष्ठा ॥ ॥

॥ ६ अंतर्मातृकान्यासः ॥ अस्यश्रीअंतर्मातृकासरस्वतीमंत्रस्य ब्रह्माऋषिः गायत्रीछंदः अंतर्मातृकासरस्वतीदेवता हलोबीजानि स्वराःशक्तयः विंदवःकीलकं मातृकान्यासेविनियोगः ॥ तत्रऋष्यादिन्यासः ॥ ब्रह्मर्षयेनमःशिरसि गायत्रीछंदसेनमोमुखे अंतर्मातृकासरस्वतीदेवतायैनमोहृदये हल्बीजेभ्योनमोगुह्ये स्वरशक्तिभ्योनमःपादयोः त्रिंदुकीलकायनमःसर्वांगे मातृकान्यासेविनियोगः ॥ ॐ अंकंखंगंघंङंआंअंगुष्ठाभ्यांनमः ॥ ॐइंचंछंजंझंञंईंतर्जनीभ्यांनमः ॥ ॐ उंटंठंडंढंणंऊंमध्यमाभ्यांनमः ॥ ॐ एंतंथंदंधंनंऐंअनामिकाभ्यांनमः ॥ ॐ ओंपंफंबंभंमंऔंकनिष्ठिकाभ्यांनमः ॥ ॐ अंयंरंलंवंशंषंसंहंक्षंअःकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिन्यासः ॥ आधारेलिंगनाभौहृदयसरसिजेतालुमूलेललाटेद्वेपत्रेषोडशारेद्विदशदशदलेद्वादशार्धेचतुष्के ॥ वासांतेबालमध्येडफकठसहितेकंठदेशेस्वराणांहंक्षंतत्त्वार्थयुक्तंसकलवुधनुतंवर्णचक्रंनमामि ॥ चत्वारिवाक् ० ऋ० १ अग्रेसर्वत्रादौप्रणवःअंतेहंसःसोहंएवंसर्वत्रयथा ॥ ॐ अंनमःहंसःसोहं आंनमःहंसःसोहं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः एतांस्तत्त्वार्थयुक्तान्षोडशस्वरान्कंठस्थानगतपद्मेषोडशदलेषुविन्यसामि ॥ कंनमः खं गं घं ङं चं छं जं झं ञं टं ठं एतांस्तत्त्वार्थयुक्तान्द्वादशवर्णान्हृदयस्थानगतपद्मेद्वादशदलेषुविन्यसामि ॥ डं ढं णं तं थं दं धं नं पं फं एतांस्तत्त्वार्थयुक्तान्दशवर्णान्नाभिस्थानगतपद्मेदशदलेषुविन्यसामि ॥ बं भं मं यं रं लं एतांस्तत्त्वार्थमध्यान्षड्वर्णांल्लिंगस्थानगतप

ङ्मेपड्दलेपुविन्यसामि॥ वं शं षं सं एतास्तत्त्वार्थयुतांश्चतुर्वर्णानाधारस्थानगतपद्मेचतुर्दलेषुविन्यसामि ॥ हं क्षं एतत्तत्त्वार्थयु क्तंवर्णद्वयंभ्रूमध्यगतपद्मेद्विदलयोर्न्यसामि ॥ इत्यंतर्मातृकान्यासः ॥ ॥ छ ॥ ॥ छ ॥

॥ ७ ॥ अथवहिर्मातृकान्यासः ॥ अस्यश्रीवहिर्मातृकासरस्वतीमंत्रस्य ब्रह्माऋषिः गायत्रीछंदः वहिर्मातृकासरस्वतीदेवता हलोवीजानि स्वराःशक्तयः विंदवःकीलकं वहिर्मातृकान्यासेविनियोगः॥ तत्रऋष्यादिन्यासः ॥ ब्रह्मर्षयेनमःशिरसि गायत्रीछंदसेनमोमुखे वहिर्मातृकासरस्वतीदेवतायैनमोहृदि हल्वीजेभ्योनमोगुह्ये स्वरशक्तिभ्योनमःपादयोःविंदुकीलकाय नमःसर्वांगे वहिर्मातृकान्यासेविनियोगः ॥ पंचाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशांभास्वत्कपर्दाकलितशशिकला मिंदुकुंदावदातां ॥ अक्षस्रक्कुंभचिंतालिखितवरकरांत्रीक्षणांपद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरांभारतींतांनमामि ॥ ॐ चत्वारिवाक्परिमिता० अंनमःशिरसि आंनमोमुखे इं.दक्षिणनेत्रे ईं.वामनेत्रे उं. दक्षिणकर्णे ऊं. वामकर्णे ऋं. दक्षनासापुटे ॠं. वामनासापुटे ऌं. दक्षकपोले ॡं. वामकपोले एं. ऊर्ध्वोष्ठे ऐं. अधरोष्ठे ओं. ऊर्ध्वदंतपंक्तौ औं. अधोदंतपंक्तौ अं. जिह्वायां अः. कंठे कं खं गं घं ङं दक्षिणहस्तसंध्यग्रेषु.॥ चं छं जं झं ञं वामहस्तसंध्यग्रेषु.॥ टं ठं डं ढं णं दक्षिणपादसंध्यग्रेषु. ॥ तं थं दं धं नं वामपादसंध्यग्रेषु. ॥ पं. दक्षिणकुक्षौ फं. वामकुक्षौ वं. पृष्ठे भं. नाभौ मं. उदरे यं. हृदि रंनमःकंठे लंनमः ककुदि वंनमः स्कंधयोः शंनमः हृदादिदक्षिणकरे षंनमः हृदादिवामकरे संनमःहृदादिदक्षिणपादे हंनमःहृदादिवामपादे ळंक्षं व्यापकं ॥ इतिवहिर्मातृकान्यासः ॥ ॥ छ ॥ ॥ छ ॥

॥ ८ ॥ सामान्यतःपंचायतनपूजा ॥ तत्रोदयात्पूर्वंनिर्माल्यमपसार्ययथाकालेपूजारंभः ॥ येभ्योमातेत्यस्यगयःप्लातो विश्वेदेवाजगती एवापित्रइत्यस्यवामदेवोबृहस्पतिर्विश्वेदेवास्त्रिष्टुप् मनुष्यगंधनिवारणेवि०॥ ॐ येभ्योमातामधुमत्पिन्वतेप यःपीयूषंद्यौरदितिरद्रिबर्हाः॥उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँआदित्याँअनुमदास्वस्तये ॥ एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेम नमसाहविर्भिः॥ बृहस्पतेसुप्रजावीरवंतोवयंस्यामपतयोरयीणां ॥ इतिपठन्घंटानादंकृत्वाआचम्यप्राणानायम्यदेशकालादिकी र्तनांतेममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्रीमहाविष्णुपूजांकरिष्यइतिपंचायतनपक्षेश्रीरुद्रविनायकसूर्यशक्तिपरिवृत श्रीमहाविष्णुपूजांकरिष्ये ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिःकूर्मोदेवतासुतलंछंदःआसनेविनियोगः ॥ ॐ पृथ्वित्वयाधृतालोकादे वित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनम् ॥ अपसर्पंतुवामदेवोभूतान्यनुष्टुप् भूतोत्सादनेविनियोगः ॥ ॐ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशम् ॥ सर्वेषामवरोधेनपूजाकर्मसमारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिभैरवं नमस्कृत्यवामपादतलपार्श्वेनभूमिंत्रिःप्रहृत्य देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंरक्षस्व भूमौप्रादेशंकुर्यात्॥ सहस्र शीर्षेतिषोडशर्चस्यसूक्तस्यनारायणःपुरुषोनुष्टुबंत्यात्रिष्टुप् न्यासेपूजायांचविनियोगः ॥ ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपा त् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ वामकरे ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोह ति ॥ दक्षिणकरे ॥ एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ वामपादे ॥ त्रिपादू

र्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः॥ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ दक्षिणपादे ॥ तस्माद्विराळजायतविराजोऽअ
धिपूरुषः॥सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥वामजानुनि ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोऽअस्यासीदाज्यं
ग्रीष्मइध्मःशरद्धविः ॥ दक्षिणजानुनि ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजंतसाध्याऋषयश्चये॥वामकट्यां ॥
तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं ॥ पशूंस्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ दक्षिणकट्यां ॥ तस्माद्यज्ञात्सर्वहुतऋचःसा
मानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ नाभ्यां ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मा
त्तस्माज्जाताऽअजावयः ॥ हृदये ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ कंठे ॥
ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽअजायत ॥ वामभुजे ॥ चंद्रमामनसोजातश्चक्षोःसू
र्योऽअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ दक्षभुजे ॥ नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमि
र्दिशःश्रोत्रात्तथालोकाँऽअकल्पयन् ॥ मुखे ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंप
शुं ॥ नेत्रयोः ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥
शिरसि ॥ पंचांगन्यासः ॥ ॐ ब्राह्मणोस्यमुख० हृदयायनमः ॥ चंद्रमामनसोजात० शिरसेस्वाहा ॥ नाभ्याऽआसी० शिखा
यैवषट् ॥ सप्तास्यासन्० कवचायहुं॥यज्ञेनयज्ञमयजंत० अस्त्रायफट् इतिदिग्बंधः ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः॥
मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥

अंगैश्चसहिताःसर्वेकलशांबुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुदेवपूजार्थंदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधोकावेरिजलेस्मिन्संनिधिंकुरु ॥ कलशेवरुणमावाहयामिचंदनंपुष्पंस० ॥ प्रक्षालितंशंखंप्रणवेनापूर्य ॥ शंखादौचंद्रदैवत्यंकुक्षौवरुणदेवता ॥ पृष्ठेप्रजापतिश्चैवअग्रेगंगासरस्वती ॥ त्रैलोक्येयानितीर्थानिवासुदेवस्यचाज्ञया॥शंखेतिष्ठंतिविप्रेंद्रतस्माच्छंखंप्रपूजयेत् ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे॥ नमितःसर्वदेवैश्चपांचजन्यनमोस्तुते ॥ पांचजन्यायविद्महेपावमानायधीमहि ॥ तन्नःशंखःप्रचोदयात् ॥ शंखायचंदनंपुष्पं० ॥ आगमार्थंतुदेवानांगमनार्थंचरक्षसां ॥ कुर्वेघंटारवंतत्रदेवताह्वानलक्षणं ॥ घंटायैचंदनंपुष्पं० ॥ शंखोदकेनात्मानंप्रोक्ष्यपूजासंभारंप्रोक्षेत् ॥ कलशंशंखघंटेचपाद्यार्घ्याचमनीयकं ॥ संपूज्यप्रोक्ष्यचात्मानंपूजासंभारमेवच ॥ ध्यायेदभिमतांविष्णुमूर्तिंसंपूजयेत्ततः ॥ शांताकारं इत्यादिध्यात्वा सहस्रशीर्षा०आवाहयामि॥ (शालग्रामादावावाहनाभावान्मंत्रपुष्पं ऋगंतेश्रीमहाविष्णवेश्रीकृष्णायेत्येवमभिमतमूर्तिचतुर्थ्योद्दिश्यसर्वोपचारार्पणं पंचायतनेतुश्रीविष्णवेशिवविनायकसूर्यशक्तिभ्यश्चेत्येवंयथोपास्यमुच्चारः नैवेद्यादौपार्थक्याभावेयथांशतइतिवदेत् ) पुरुषएवेदं० आसनं ॥ एतावानस्य० पाद्यं ॥ त्रिपादूर्ध्वं० अर्घ्यं ॥ तस्माद्विराळ० आचमनीयं ॥ यत्पुरुषेण० स्नानं ॥ संभवेपंचामृतस्नानान्याप्यायस्वेत्यादिमंत्रैः चंदनोशीरकर्पूरकुंकुमागरुवासितजलैःसुवर्णघर्मानुवाकमहापुरुषविद्यापुरुषसूक्तराजनसामभिरभिषेकः ॥ आचम० ॥ तंयज्ञंबर्हिषि० ॥ वस्त्रं ॥ आचम० ॥ तस्माद्यज्ञात्०यज्ञोपवीतं ॥ तस्माद्यज्ञात्सर्वहुतऋचः० गंधं० ॥ अहिरिव० परिमलद्रव्याणि ॥ तस्मादश्वा० पुष्पाणि ॥ यत्पुरुषं० धूपं० ॥

ब्राह्मणोस्य० दीपं॥स्नानेधूपेचदीपेचघंटादेर्नादमाचरेत् ॥ चंद्रमामनसो० नैवेद्यं॥ आचम० संभवेतांबूलंदक्षिणांश्रियेजातइ
तिनीराजनंच॥नाभ्याआ०नमस्कारः॥सप्ता०प्रदक्षिणाः ॥ यज्ञेनयज्ञ० विसर्जनंपुष्पांजलिर्वा॥दत्वाषोडशभिर्ऋग्भिःषोडशा
न्नस्यचाहुतीः ॥ सूक्तेनप्रत्यृचंपुष्पंदत्वासूक्तेनसंस्तुयात् ॥ ततःपौराणैःप्राकृतैश्चस्तुत्वा ॥ शिरोमत्पादयोःकृत्वाबाहुभ्यांचप
रस्परं ॥ प्रपन्नपाहिमामीशभीतंमृत्युग्रहार्णवात् ॥ इतिवदन्नमेत् ॥ निर्माल्यंदेवदत्तंभावयित्वाशिरसिधारयेत् ॥ विष्णुमू
र्ध्निस्थितंपुष्पंशिरसानवहेन्नरः ॥ शंखोदकंशिरसिधृत्वादेवतीर्थंपूजांतेवैश्वदेवांतेवाशिरसिधार्यपेयंचतत्रक्रमः॥ विप्रपादोदकं
पीत्वाविष्णुपादोदकंपिबेत् ॥ शालग्रामशिलातोयमपीत्वायस्तुमस्तके ॥ प्रक्षेपणंचकुरुतेब्रह्महासनिगद्यते ॥ पात्रांतरेणैवग्रा
ह्यंनकरेणकदाचनेतिकमलाकरःक्षालनेनएकस्यैववस्त्रस्यप्रतिदिनंदानेदोषोन ॥ स्वर्णादिभूषणानामप्येवमाचारः॥इतिपूजा॥

॥ ९ ॥ सर्वसामान्यपूजा ॥ आचमनादिदेशकालकीर्तनांतेममेहजन्मनिजन्मांतरेचाखिलसौभाग्यपुत्रपौत्रधनधान्यादि
समस्तमंगलावाप्त्यर्थंसमस्तदुरितोपशांत्यर्थंसमस्ताभ्युदयार्थंचअमुकदेवतापूजनंकरिष्ये ॥ तदंगत्वेनकलशाद्यर्चनंनिर्विघ्नता
सिद्ध्येगणपतिपूजनंस्मरणंवाकरिष्ये ॥ वक्रतुंडमहाकायकोटिसूर्यसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ मंगलमूर्तये
नमः ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधोकावेरिजलेस्मिन्संनिधिंकुरु ॥ अस्मिन्कलशेगंगादिनदीःवरुणंचावाह
यामि गंधाक्षतपुष्पंसमर्पयामि ॥ अगमार्थंतुदेवानांगमनार्थंचरक्षसां ॥ कुर्वेघंटारवंतत्रदेवताह्वानलक्षणं ॥ घंटायैनमःगंधा
क्षत० ॥ भोदीपब्रह्मरूपस्त्वंज्योतिषांप्रभुरव्ययः ॥ अतस्त्वांस्थापयाम्यत्रममशांतिप्रदोभव ॥ दीपदेवतायैगंधाक्षत० ॥ अप

वित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरः शुचिः ॥ कलशोदकेनात्मानंपूजाद्रव्याणिचप्रोक्षेत् ॥
अथध्यानं ॥ ध्यायेत्पद्मासनारूढंसायुधंसुचतुर्भुजं ॥ नानालंकारशोभाढ्यंदिव्यमाल्यांबरान्वितं ॥ ध्यानं० ॥ आवाहयामिभ
क्त्यात्वांशिबिकाभिर्हयैर्गजैः ॥ पूजार्थमंडपेनानामणिहाटकनिर्मिते ॥ आवाहनं० ॥ आसनंस्वर्णरत्नाढ्यंमृदुतूलपरिच्छदं ॥
ददामिभक्त्यास्थित्वास्मिन्नुपचारान्गृहाणभोः ॥ आसनं०॥पाद्यंस्वीकुरुमद्दत्तंचरणांबुरुहद्वये ॥ युक्तंसुगंधपुष्पाब्जमणिहेम
नवांकुरैः ॥ पाद्यं० ॥ अर्घ्यंहस्तद्वयेदत्तंचंदनोशीरवासितं ॥ यवदूर्वांकुरफलंपुष्परत्नान्वितंमुदा ॥ अर्घ्यं० ॥ आचम्यतांतो
यमिदंवस्त्रपूतंसुगंधितं ॥ आनीतंयमुनागंगातीर्थेभ्योतिप्रयत्नतः ॥ आचमनीयं० ॥ दुग्धंकामदुघोत्पन्नंदेवानांप्रीतिकारकं ॥
स्नानार्थंतेमयानीतंगृहाणघटसंभृतं ॥ पयःस्नानं० ॥ दधिस्नातुंददाम्येतदानीतंदधिसागरात् ॥ गृहाणमसृणंस्वर्णघटस्थंचा
रुशीतलं ॥ दधिस्नानं० ॥ घृतंपितृमनुष्याणांदेवानांप्रीतिकारणं ॥ स्नातुंगृहाणतत्कालंप्रतप्तनवनीतजं ॥ घृतस्नानं० ॥ मधु
भ्रमरसंघुष्टंनानापुष्परसोद्भवं ॥ भक्त्यामयाहृतंशुद्धंस्नानार्थंप्रतिगृह्यतां ॥ मधुस्नानं० ॥ शर्करांगुडसंभूतांशुभ्रांमलनिवारि
णीं ॥ तुभ्यंददामिस्नानार्थंस्वादुस्वादुतरामहं ॥ शर्करास्नानं० ॥ मधुपर्कंगृहाणेमंकांस्यसंपुटसंस्थितं ॥ मध्वाज्यदधिरूपं
त्वंविधिपूर्वकमर्पितं ॥ मधुपर्कं० ॥ तैलंपुष्पसुगंधाढ्यंभ्रमद्भ्रमरनादितं ॥ विलेपयामिसर्वांगेसुवर्णचषकस्थितं ॥ तैलाभ्यंगं ॥
उन्मर्दनंतवांगेस्मिन्लेपयामिसुभक्तितः ॥ काश्मीरागरुकर्पूरमृगनाभिविनिर्मितं ॥ उन्मर्दनं० ॥ स्नानार्थंजलमानीतंशीतमु
ष्णंयथारुचि ॥ सुगंधितंसर्वनदीतीर्थेभ्यःप्रतिगृह्यतां ॥ स्नानं० ॥ पूर्वपूजांसमाप्य ॥ अभिषेकंकुर्यात् ॥ ततः ॥ वस्त्रयुग्मं

गृहाणेदंरत्नकिंकिणिकायुतं ॥ श्वेतंपीतंतथारक्तंनीलंचित्रंयथारुचि ॥ वस्त्रोपवस्त्रे० ॥ यज्ञसूत्रंत्रिवृत्सौत्रंराजतंकांचनंनवं ॥ रत्नग्रंथियुतंशुद्धंमंत्रितंप्रतिगृह्यतां ॥ यज्ञोपवीतंस० ॥ कंचुकींसूचिकावेधरहितांविश्वकर्मणा ॥ निर्मितांविलसन्मुक्तागुच्छां स्वीकुरुमंगले ॥ कंचुकीं० ॥ हरिद्रांमंगलेकार्येगृहीतांमुनिदैवतैः ॥ मातर्गृहाणसुस्निग्धांमुखचंद्रानुरंजनीं ॥ हरिद्रां० ॥ कुंकुमंसर्वसौभाग्यसूचकंभालभूषणं ॥ स्वीकुरुष्वजगन्मातर्जपाकुसुमभास्वरं ॥ कुंकुमंस० ॥ कज्जलंनवनीताढ्यंशुद्धकर्पूरमिश्रितं ॥ गृहाणनेत्रभूषार्थंदत्तंस्वर्णशलाकया ॥ कज्जलं० ॥ कंठसूत्रंकंकणानिताटंकेमौक्तिकंतथा ॥ मंजीरपदकादीनिस्वीकुरुत्वं जगन्मये ॥ सौभाग्यालंकारान्० ॥ अलंकारान्कंठकर्णशिरोहस्तनिवेशितान् ॥ गृहाणस्वर्णरत्नाढ्यान्बहुकौशल्यनिर्मितान् ॥ शेषालंकारान्० ॥ सिंदूरंनागसंभूतंस्त्रीणांसीमंतभूषणं ॥ मातर्ददामितेप्रीत्यैगृहाणजगदंबिके ॥ सिंदूरं० ॥ चंदनंमलयोद्भूतंकुंकुमागरुमिश्रितं ॥ अष्टगंधसमायुक्तमंगेभालेविलेपय ॥ चंदनं० ॥ अक्षतान्हीरकनिभान्रक्तान्पीतान्यथारुचि ॥ शोभार्थंसंप्रदास्यामिगृहाणसुमनोहरान् ॥ अक्षतान्० ॥ सुगंधचूर्णंकाश्मीरकस्तूरीचंद्रगंधितं ॥ पटवासाभिधंमुस्तासंभूतमुररीकुरु ॥ सुगंधद्रव्यं० ॥ मालतीचंपकजपाबकुलाशोकदाडिमीः ॥ यथाप्रीतिसिताःपीताःपुष्पजातीर्गृहाणभोः ॥ नानाविधपुष्पाणि० ॥ तुलसीबिल्वदूर्वाश्चशमीबकुलपल्लवान् ॥ मयादत्तान्गृहाणेमान्सहस्रपरिसंमितान् ॥ पत्राणि० ॥ अंगपूजा ॥ पूज्यपादायनमः पादौपूजयामि ॥ सुगुल्फाय० गुल्फौ० ॥ अनघाय० जंघे० ॥ अजाय० जानुनी० ॥ व्यापकाय० ऊरू० ॥ स्वंगाय० कटी० ॥ पूज्याय० नाभिं० ॥ विश्वभृते० उदरं० ॥ कृपावते० हृदयं० ॥ विश्वधात्रे० स्तनौ० ॥ चारुभूपाय०

कंठं० ॥ नानायुधाय० बाहू० ॥ सुमुखाय० मुखं० ॥ पद्मनेत्राय० नेत्रे० ॥ सुश्रुताय० कर्णौ० ॥ भक्तिप्रियाय० ललाटं० ॥ सर्वेशाय० शिरःपूजयामि ॥ धूपंनानापरिमलंयक्षकर्दममिश्रितं ॥ दशांगद्रव्यसंयुक्तमंगीकुरुमयार्पितं ॥ धूपं० ॥ दीपंकांचनपात्रस्थंनवगोघृतसाधितं ॥ अर्पयामिमहाध्वांतगजपंचास्यसन्निभं ॥ दीपं० ॥ नैवेद्यमन्नसूपाज्यशाकपक्वान्नसंयुतं ॥ स्वर्णपात्रस्थितंस्वादुभुक्त्वात्वंतृप्तिमाप्नुहि ॥ नैवेद्यं० ॥ फलानिजंबूनारिंगनिंवाम्रकदलानिच ॥ गृहाणबदरीद्राक्षानारिकेलानिभक्षितुं ॥ फलानि० ॥ तांबूलंमुखरागार्थंलवंगैलादिसंयुतं ॥ पर्णक्रमुककर्पूरमुक्ताचूर्णान्वितंमुदा ॥ तांबूलं० ॥ दक्षिणांनवरत्नाढ्यांस्वर्णरौप्यपरिष्कृतां ॥ विपुलांबहुतोषार्थंस्थापयामितवाग्रतः ॥ दक्षिणां० ॥ आरातिक्यंतवपुरःकरोम्युज्ज्वलदीपकैः ॥ मणिकर्पूरतैलाज्यसंभवैर्लक्षसंमितैः ॥ नीराजनं० ॥ मंत्रपुष्पांजलिंपूजान्यूनत्वाधिक्यपूरणं ॥ ददामितंत्रपौराणमंत्रोच्चारणपूर्वकं ॥ मंत्रपुष्पांजलिंसमर्प० ॥ पदेपदेऽश्वमेधस्यफलंभवतिकुर्वतां ॥ ताःकरोमितवप्रीत्यैध्यानपूर्वंप्रदक्षिणाः ॥ प्रदक्षिणाः० ॥ नमस्कारान्प्रकुर्वेहंमनसावचसादृशा ॥ भूमिसंलग्नहृत्पादललाटकरजानुकान् ॥ नमस्कारान्० ॥ गंधरत्नसुवर्णाब्जदूर्वाक्षतफलान्वितं ॥ विशेषार्घ्यंमयादत्तंव्रतसंपूर्तिहेतवे ॥ इतिविशेषार्घ्यंदत्वाप्रार्थयेत् ॥ आवाहनंनजानामिनजानामिविसर्जनं ॥ पूजांचैवनजानामिक्षम्यतांपरमेश्वर ॥ यस्यस्मृत्याचनामोक्त्यातपःपूजाक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ अनेनयथाशक्तियथाज्ञानतःकृतपूजनेन

॥ ७ ॥

परमेश्वरःप्रीयतां ॥ ब्राह्मणंसंपूज्य ॥ वायनंवंशपात्रस्थंसवस्त्रंदक्षिणान्वितं ॥ ददामिद्विजमुख्यायव्रतसांगत्वसिद्धये ॥ इति
वायनंदक्षिणांचदत्वाशिषोगृह्णीयात् ॥ इतिसामान्यपूजाविधिः ॥ ॥ छ ॥ ॥ छ ॥

॥ १० ॥ रामनवमीपूजा ॥ आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्यश्रीप० त्यर्थंममसमस्तपापक्षयद्वाराश्रीरामप्रीतयेराम
नवमीव्रतांगत्वेनयथामिलितोपचारैः रामपूजांकरिष्ये ॥ तत्रादौनिर्विघ्न० गणपतिपू० पंचशब्दैःपुण्याहवाचनं तथाराममंत्रे
णषडंगन्यासंकलशाद्यर्चनंचकरिष्ये ॥ गणपतिपूजनंपुण्याहवाचनादिचकृत्वा ॥ ततःफलपुष्पाक्षतसहितंजलपूर्णताम्रपात्रंगृ
हीत्वा ॥ उपोष्यनवमींत्वद्ययामेष्वष्टसुराघव ॥ तेनप्रीतोभवत्वंमेसंसारात्त्राहिमांहरे ॥ इतिमंत्रेणपात्रस्थंजलंक्षिपेत् ॥ अथध्या
नं ॥ कोमलांगंविशालाक्षमिंद्रनीलसमप्रभं ॥ दक्षिणांगेदशरथंपुत्रावेक्षणतत्परं ॥ पृष्ठतोलक्ष्मणंदेवंसच्छत्रंकनकप्रभं ॥ पार्श्वे
भरतशत्रुघ्नौचामरव्यजनान्वितौ॥अग्रेऽव्यग्रंहनूमंतंरामानुग्रहकांक्षिणं॥ इतिध्यायेत्॥सहस्रशीर्षा० ॥ आवाहयामिविश्वेशंजा
नकीवल्लभंप्रभुं ॥ कौसल्यातनयंविष्णुंश्रीरामंप्रकृतेःपरं ॥ इत्यावाहनं ॥ श्रीरामागच्छभगवन्रघुवीरनृपोत्तम ॥ जानक्यासह
राजेंद्रसुस्थिरोभवसर्वदा ॥ रामचंद्रमहेष्वासरावणांतकराघव ॥ यावत्पूजांसमाप्येहंतावत्त्वंसन्निधौभव ॥ इतिसन्निधापनं ॥
रघुनायकराजर्षेनमोराजीवलोचन ॥ रघुनंदनमेदेवश्रीरामाभिमुखोभव ॥ इतिसंमुखीकरणं ॥ पुरुषएवेदं० राजाधिराजराजें
द्ररामचंद्रमहीपते ॥ रत्नसिंहासनंतुभ्यंदास्यामिस्वीकुरुप्रभो ॥ आसनं०॥एतावानस्य०॥त्रैलोक्यपावनानंतनमस्तेरघुनायक ॥
पाद्यंगृहाणराजर्षेनमोराजीवलोचन॥पाद्यं॥त्रिपादूर्ध्व०॥परिपूर्णपरानंदनमोरामायवेधसे ॥ गृहाणार्घ्यंमयादत्तंकृष्णविष्णोज

नार्दन॥अर्घ्यं॥तस्माद्विराळ०॥नमःसत्यायशुद्धायनित्यायज्ञानरूपिणे ॥ गृहाणाचमनंनाथसर्वलोकैकनायक ॥ आचमनीयं ॥
यत्पुरुषेण० ॥ ब्रह्मांडोदरमध्यस्थैस्तीर्थैश्चरघुनंदन ॥ स्नापयिष्याम्यहंभक्त्यात्वंगृहाणजनार्दन ॥ स्नानं ॥ मधुवाता० ॥ नमः
श्रीवासुदेवायतत्वज्ञानस्वरूपिणे ॥ मधुपर्कंगृहाणेमंजानकीपतयेनमः ॥ मधुपर्कं॥आप्यायस्वेत्यादिपंचमंत्रैःपंचामृतं ॥ पंचामृ
तंमयानीतंपयोदधिघृतंमधु ॥ शर्करासहितंचैवरामत्वंप्रतिगृह्यतां ॥ शुद्धोदकस्नानं ॥ चंदनं पुष्पं धूपं दीपं नैवेद्यं समर्प्य सं
प्रार्थ्यनिर्माल्यंविसृज्य ॥ पुरुषसूक्तेनविष्णुसूक्तैश्चाभिषिंचेत् ॥ आचमनीयं ॥ तंयज्ञंबर्हि०॥तप्तकांचनसंकाशंपीतांबरमिदंह
रे ॥ संगृहाणजगन्नाथरामचंद्रनमोस्तुते ॥ वस्त्रोपवस्त्रे ॥ तस्माद्यज्ञात्०॥श्रीरामाच्युतयज्ञेशश्रीधरानंतराघव ॥ ब्रह्मसूत्रंसोत्त
रीयंगृहाणरघुनंदन ॥ यज्ञोपवीतं ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥ कुंकुमागरुकस्तूरीकर्पूरंचंदनंतथा ॥ तुभ्यंदास्यामिराजेंद्र
श्रीरामस्वीकुरुप्रभो ॥ गंधं ॥ अक्षताःपरमादिव्याःकुं० ॥ अलंकारार्थेअक्षतान् ॥ तस्मादश्वा० ॥ तुलसीकुंदमंदारजातीपु
न्नागचंपकैः॥कदंवकरवीरैश्चकुसुमैःशतपत्रकैः ॥ नीलांबुजैर्बिल्वपत्रैश्चंपकैराघवंविभुं ॥ पूजयिष्याम्यहंभक्त्यासंगृहाणजनार्द
न॥पुष्पपत्राणि० ॥ तुलसीकुंदमंदारपारिजातांबुजैर्युतां ॥ वनमालांप्रदास्यामिगृहाणजगदीश्वर ॥ वनमालांस० ॥ अथांग
पूजा ॥ श्रीरामचंद्रायनमः पादौपू० ॥ राजीवलोचनाय० गुल्फौ० ॥ रावणांतकाय० जानुनी० ॥ वाचस्पतये० ऊरू० ॥
विश्वरूपाय० जंघे० ॥ लक्ष्मणाग्रजाय० कटी० ॥ विश्वमूर्तये० मेढ्रं० ॥ विश्वामित्रप्रियाय० नाभिं० ॥ परमात्मने० हृदयं० ॥
श्रीकंठाय० कंठं० ॥ सर्वास्त्रधारिणे० वाहू ॥ रघूद्वहाय० मुखं० ॥ पद्मनाभाय० जिह्वां ॥ दामोदराय० दंतान्० ॥ सी

तापतये० ललाटं ॥ ज्ञानगम्याय० शिरः० ॥ सर्वात्मने सर्वांगंपूजयामि ॥ अत्रशक्तौसहस्रतुलसीसमर्पणंकार्यं ॥यत्पुरुषं०॥
वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ रामचंद्रमहीपालधूपोयंप्रतिगृह्यतां ॥ धूपं॥ब्राह्मणोस्य० ॥ ज्योतिषांपतयेतुभ्यंनमोरा
मायवेधसे॥गृहाणदीपकंचैवत्रैलोक्यतिमिरापहं ॥ दीपं॥चंद्रमामनसो० ॥ इदंदिव्यान्नममृतंरसैःषड्भिःसमन्वितं ॥ लेह्यंपेयंच
नैवेद्यंसीतेशप्रतिगृह्यतां ॥ नैवेद्यं ॥ मध्येपानीयं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनार्थेचंदनं० ॥ना
गवल्लीदलैर्युक्तंपूगीफलसमन्वितं ॥ तांबूलंगृह्यतांरामकर्पूरादिसमन्वितं ॥ तांबूलं ॥ इदंफलमितिफलं ॥ हिरण्यगर्भेतिदक्षि
णां ॥ मंगलार्थंमहीपालनीराजनमिदंहरे ॥ संगृहाणजगन्नाथरामचंद्रनमोस्तुते ॥ नीराजनं ॥ कर्पूरगौरमितिकर्पूरार्तिक्यं ॥
नाभ्याआसी० ॥ नमोदेवाधिदेवायरघुनाथायशार्ङ्गिणे ॥ चिन्मयानंतरूपायसीतायाःपतयेनमः ॥ नमस्कारः॥सप्तास्यासन्०
यानिकानिच० प्रदक्षिणाः ॥ यज्ञेनयज्ञ० कोमलांगं० ॥ पुष्पांजलिं ॥ नृत्यैर्गीतैश्चवाद्यैश्चपुराणपठनादिभिः ॥ पूजोपचारैर
खिलैःसंतुष्टोभवराघव ॥ समस्तराजोपचारार्थेअक्षतान् ॥ अशोककुसुमैर्युक्तंरामायार्घ्यंसमर्पयेत् ॥ दशाननवधार्थायधर्मसं
स्थापनायच ॥ राक्षसानांवधार्थायदैत्यानानिधनायच ॥ परित्राणायसाधूनांजातोरामःस्वयंहरिः॥गृहाणार्घ्यंमयादत्तंभ्रातृभिः
सहितोनघ ॥ श्रीरामचंद्रायसांगायसपरिवारायनमःइदमर्घ्यंसमर्पयामि ॥ यस्यस्मृत्या० आवाहनंनजा० मंत्रहीनं० ॥ अने
नयथाज्ञानेनकृतपूर्वोत्तराराधनेनभगवान्श्रीरामचंद्रःप्रीयतां ॥ इतिरामनवम्यांश्रीरामपूजासमाप्ता ॥ ॥ छ ॥

॥ ११ ॥ दमनपूजा ॥ चैत्रशुक्लद्वादश्यांविष्णोर्दमनोत्सवः ॥ सचपारणाहे ॥ पारणाहेनलभ्येतद्वादशीघटिकापिचेत् ॥

तदात्रयोदशीग्राह्यापवित्रदमनार्पणे ॥ इत्युक्तेः ॥ शिवस्यतुचतुर्दश्यांकार्यः ॥ अथप्रयोगः ॥ उपवासदिनेनित्यपूजांकृत्वादम
नकस्थानंगत्वाक्रयेणतमादायचंदनादिनासंपूज्यश्रीकृष्णपूजार्थंत्वांनेष्येइतिप्रार्थ्यप्रणमेत् ॥ अन्यदेवतासुयथादैवतमूहः ॥
ततोदमनकंगृहमानीयपंचगव्येनशुद्धोदकेनचप्रक्षाल्यदेवाग्रेस्थापयित्वा तस्मिन्दमनकेअशोककालवसंतकामान्काममात्रंवा
गंधादिभिःपूजयेत्॥तत्र नमोस्तुपुष्पबाणायजगदाह्लादकारिणे॥मन्मथायजगन्नेत्रेरतिप्रीतिप्रियायते ॥ इतिकामावाहनमंत्रः ॥
कायभस्मसमुद्भूतरतिबाष्पपरिप्लुत ॥ ऋषिगंधर्वदेवादिविमोहकनमोस्तुते ॥ इतिदमनकमुपस्थाय ॥ ॐ कामायनमइतिमंत्रेण
सपरिवारायकामरूपिणेदमनकायगंधाद्युपचारान्दद्यात् ॥ ततोरात्रौदेवंसंपूज्याधिवासनंकुर्यात् ॥ तदित्थं ॥ देवाग्रेसर्वतो
भद्रंसंपाद्यतत्रकलशंसंस्थाप्यतत्रधौतवस्त्राच्छन्नंदमनकंवैणवपटलेस्थापितंनिधाय ॥ पूजार्थंदेवदेवस्यविष्णोर्लक्ष्मीपतेःप्रभो ॥
दमनत्वमिहागच्छसान्निध्यंकुरुतेनमः ॥ इतिदमनकदेवतामावाह्यप्रागाद्यष्टदिक्षुक्लींकामदेवायनमोह्रींरत्यैनमः १ क्लींभस्मश
रीरायनमोह्रींरत्यैनमः २ क्लींअनंगायनमोह्रींरत्यै० ३ क्लींमन्मथायनमोह्रींरत्यै० ४ क्लींवसंतसखायनमोह्रींरत्यै० ५ क्लींस्मरा
यनमोह्रींरत्यै० ६ क्लींइक्षुचापायनमोह्रींरत्यै० ७ क्लींपुष्पबाणास्त्रायनमोह्रींरत्यै० ८ इतिपूजयेत् ॥ तत्पुरुषायविद्महेकामदे
वायधीमहि ॥ तन्नोऽनंगःप्रचोदयात् ॥ इतिगायत्र्यादमनकमष्टोत्तरशतमभिमंत्र्यगंधादिभिःसंपूज्य ॥ ह्रींनमइतिपुष्पांजलिं
दत्वा नमोस्तुपुष्पबाणायेतिपूर्वोक्तावाहनमंत्रेणनमेत् ॥ क्षीरोदधिमहानागशय्यावस्थितविग्रह ॥ प्रातस्त्वांपूजयिष्यामिसन्नि
धौभवतेनमइतिदेवंप्राथ्र्यपुष्पांजलिंदत्वातस्यामेकादश्यांरात्रौजागरणंकुर्यात् ॥ प्रातर्नित्यपूजांकृत्वापुनर्देवंसंपूज्यदूर्वागंधाक्ष

तयुतांदमनकमंजरीमादायमूलमंत्रंपठित्वा।।देवदेवजगन्नाथवांछितार्थप्रदायक।।हृत्स्थान्पूरयमेविष्णोकामान्कामेश्वरीप्रिय ॥
इदंदमनकंदेवगृहाणमदनुग्रहात् ॥ इमांसांवत्सरींपूजांभगवन्परिपूरय ॥ पुनर्मूलंजह्वांदेवेदमनमर्पयेत् ॥ ततोयथाशोभंद
त्वांगदेवताभ्योदत्वादेवंप्रार्थयेत् ॥ मणिविद्रुममालाभिर्मंदारकुसुमादिभिः ॥ इयंसांवत्सरीपूजातवास्तुगरुडध्वज ॥ वनमा
लांयथादेवकौस्तुभंसंततेहृदि ॥ तद्वद्दामनकींमालांपूजांचहृदयेवह ॥ जानताजानतावापिनकृतंयत्तवार्चनं ॥ तत्सर्वंपूर्णतांया
तुत्वत्प्रसादाद्रमापते ॥ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन ॥ हृषीकेशनमस्तेस्तुमहापुरुषपूर्वज ॥ मंत्रहीनंक्रियाहीनमित्यादि
चसंप्रार्थ्यपंचोपचारैर्देवंसंपूज्यनीराज्यब्राह्मणेभ्योदमनंदत्वास्वयंशेषंसंधार्यसुहृद्युतःपारणांकुर्यात् ॥ मंत्रदीक्षारहितैर्नाम्नार्पणी
यं ॥ अस्यगौणकालःश्रावणमासावधिः ॥ नेदंमलमासेभवति ॥ शुक्रास्तादौतुकर्तव्यं ॥ इतिदमनारोपणविधिः॥अस्यामेव
भारते ॥ अहोरात्रेणद्वादश्यांचैत्रेविष्णुरितिस्मरन् ॥ पुंडरीकमवाप्नोतिदेवलोकंचगच्छतीति ॥ इतिदमनपूजा ॥ ॥ छ ॥
॥ १२ ॥ हनूमज्जयंतीपूजा ॥ आचमनादिदेशकालकीर्तनांतेऽस्माकमित्यादिआचरितहनूमज्जयंतीव्रतकल्पोक्तफलावा
प्तयेश्रीरुद्रस्वरूपिहनूमत्प्रीत्यर्थंपोडशोपचारैःपूजनंकरिष्ये ॥ आसनविधिंन्यासान्कलशाद्यर्चनंचविधायपीठदेवताआवाहये
त् ॥ ॐ विमलायैनमः उत्कर्षिण्यै० ज्ञानायै० योगायै० प्रह्वायै० ईशान्यै० सरस्वत्यै० अनुग्रहायै० ॥ तद्बाह्ये पूर्वादिषुराम
भक्ताय० महातेजसे० कपिराजाय० महावलाय० द्रोणाद्रिहारकाय० मेरुपीठिकार्चनकारकाय० दक्षिणाशाभास्कराय०
सर्वविघ्ननिवारकाय० ॥ तद्बाह्ये सुग्रीवाय० अंगदाय० नीलाय० जांववते० नलाय० सुषेणाय० द्विविदाय० मैंदाय०

इत्यावाह्यपीठदेवताभ्योनमइतिसंपूज्यध्यायेत् ॥ वालार्कायुततेजसंत्रिभुवनप्रक्षोभकंसुंदरंसुग्रीवाद्यखिलप्लवंगनिकरैराराधितं सांजलिं ॥ नादेनैवसमस्तराक्षसगणान्संत्रासयंतंप्रभुंश्रीमद्रामपदांबुजस्मृतिरतंध्यायामिवातात्मजं ॥ इतिध्यात्वापुरुषसूक्तेन श्रीरुद्रस्वरूपिणेहनूमतेनमइतिषोडशोपचारैःपूजयेत् ॥ अस्यरुद्रांशत्वाद्रुद्राभिषेकःकार्यः ॥ गोष्पदीकृतवारीशं० ॥ मनोज वंमारुततुल्येत्यादिप्रार्थना ॥ इतिहनूमज्जयंतीपूजासंक्षेपः ॥ ॥ छ ॥ ॥ छ ॥

॥ १३ ॥ सोमवतीपूजा ॥ आचम्यदेशकालौसंकीर्त्यममेहजन्मनिजन्मांतरेचसकलपापक्षयार्थं पुत्रपौत्राद्यभिवृद्ध्यासंतति चिरजीवितपरमसौभाग्यप्राप्तिकामा अस्यांसोमवत्यमायांब्रह्मविष्णुशिवात्मकाश्वत्थवृक्षेयथामिलितोपचारैःलक्ष्मीनारायण पूजनमहंकरिष्ये ॥ तदादौनिर्विघ्नकामोगणपतिपूजनंकलशाद्यर्चनंचकरिष्येइ० सं० गणपतिंकलशंघंटांदीपंचसंपूज्य ॥ अप वित्रःपवित्रइतिकलशोदकेनपूजाद्रव्याणिप्रोक्ष्यात्मानंप्रोक्षेत् ॥ अश्वत्थमूलेउदकसिंचनंकृत्वादेवंध्यायेत् ॥ शांताकारं० सर्व लोकैकनाथं ॥ मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे ॥ अग्रतःशिवरूपायअश्वत्थायनमोनमः ॥ अश्वत्थवृक्षेश्रीलक्ष्मीनाराय णाभ्यांनमः ध्यानं ॥ विश्वव्यापकविश्वेशकृपयादीनवत्सल ॥ मयोपपादितांपूजांगृहाणेमांहिमाधव ॥ आवाहनं ॥ मूलानि ब्रह्मणोयस्यऋग्वेदांगानिपल्लवाः ॥ फलानियज्ञशाखाश्चनारायणदयांकुरु ॥ सूर्यकोटिप्रभानाथसर्वव्यापिन्रमापते ॥ आसनं कल्पितंभक्त्यागृहाणपुरुषोत्तम ॥ आसनं ॥ नारायणजगद्व्यापिन्जगदानंदकारक ॥ विष्णुक्रांतादिसंयुक्तंगृह्णपाद्यंमयार्पि तं ॥ पाद्यं ॥ फलगंधाक्षतैर्युक्तंपुष्पपूगसमन्वितं ॥ अर्घ्यंगृहाणभगवन्विष्णोसर्वफलप्रद ॥ अर्घ्यं ॥ कर्पूरैलालवंगादिशीतलं

सलिलंप्रभो ॥ रमारमणदेवेशाचमनंप्रतिगृह्यतां ॥ आचमनीयं ॥ पंचामृतंमयानीतंपयोदधिघृतंमधु ॥ शर्करादिसमायुक्तं
स्नानार्थंप्रतिगृह्यतां ॥ पंचामृतस्नानं ॥ गंगाकृष्णागौतमीचकावेरीचशतद्रुदा ॥ ताभ्यआनीतमुदकंस्नानार्थंप्रतिगृह्यतां ॥
स्नानं ॥ गंधादिपूर्वपूजांसमाप्य अभिषेकंकुर्यात् ॥ ततः ॥ पीतवासस्त्वयिविभोमयान्यत्समुदाहृतं ॥ वासःप्रीत्यागृहाणेदंपुरु
षोत्तमकेशव ॥ वस्त्रं ॥ उपवीतंसोत्तरीयंमयादत्तंसुशोभनं ॥ विश्वमूर्तेगृहाणेदंनारायणजगत्पते ॥ उपवीतं ॥ अश्वत्थहुतभु
ग्वासगोविंदस्यसदाश्रय ॥ अशेषंहरमेपापंवृक्षराजनमोस्तुते ॥ अलंकारान् ॥ सूत्रवेष्टनं ॥ मलयाचलसंभूतंघनसारंमनोहरं॥
विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां ॥ गंधं ॥ अक्षताश्चसुरश्रेष्ठकुं० परमेश्वर ॥ अक्षतान् ॥ तुलसीजातिकमलमल्लिकाचंपका
निच ॥ पुष्पाणिहरगोविंदगृहाणपरमेश्वर ॥ पुष्पाणि ॥ वनस्पतिरसो० धूपं ॥ आज्यंच० दीपं ॥ भक्ष्यंभोज्यंलेह्यपेयंचोष्यं
खाद्यंमयाहृतं ॥ प्रीतयेपरमेशस्यदत्तंमेस्वीकुरुप्रभो ॥ नैवेद्यं ॥ प्राणापानव्यानोदानसमानाः ॥ मध्येपानीयं उत्तरापोश
नं हस्तप्रक्षालनं मुखप्रक्षालनंच करोद्वर्तनार्थेचंदनं इदंफलमितिफलानि पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां ॥ त्व
द्भासाभासतेलोकःकोटिसूर्यसमप्रभ ॥ नीराजयिष्येत्वांविष्णोकृपांकुरुममप्रभो ॥नीराजनं ॥ चक्षुर्दंसर्वलोकानांतिमिरस्यनि
वारणं ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वर ॥ कर्पूरगौरं० कर्पूरार्तिक्यदीपं ॥ मयाकायेनमनसावाचाजन्मशतार्जितं॥
पापंप्रशमयश्रीशप्रदक्षिणपदेपदे ॥ प्रदक्षिणां ॥ व्यक्ताव्यक्तस्वरूपायसृष्टिस्थित्यंतकारिणे ॥ आदिमध्यांतहीनायविष्टरश्रवसे
नमः ॥ नमस्कारं ॥ मूलतोब्रह्म० अश्वत्थायनमोनमः ॥ मंत्रपुष्पांजलिं ॥ अमासोमपूजा ॥ अमायैचनमस्तुभ्यंसोमायचन

मोस्तुते ॥ उभयोःसंगमेविष्णुपूजाफलमवाप्नुयात् ॥ अमायैसोमायचनमः सर्वोपचारार्थेगंधाक्षतपुष्पं० ॥ अनेनमंत्रेणषोड
शोपचारैःपंचोपचारैर्वापूजयेत् ॥ इत्यमासोमपूजा ॥ आवाहनं०तदस्तुमे ॥ यन्मयामनसावाचानियमात्पूजनंकृतं ॥ सर्वं
संपूर्णतांयातुतद्विष्णोश्चप्रसादतः ॥ इतिप्रार्थना ॥ अनेनकृतपूजनेनश्रीलक्ष्मीनारायणौप्रीयेतां ॥ अद्येत्यादिपुराणोक्तफलप्रा
प्त्यर्थंश्रीलक्ष्मीनारायणप्रीत्यर्थंअश्वत्थमूले अमुकद्रव्येणाष्टोत्तरशतप्रदक्षिणाख्यंकर्मकरिष्येइतिसंकल्प्य उक्तद्रव्यंप्रतिप्रदक्षि
णंवृक्षस्याग्रेस्थाप्यैवमष्टोत्तरशतप्रदक्षिणाःकार्याः ॥ तद्द्रव्यंब्राह्मणायदद्यात् ॥ इतिसोमवतीपूजा ॥ ॥ छ ॥

॥ १४ ॥ समुद्रस्नानविधिः ॥ कृतनित्यक्रियःआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ममसर्वपापक्षयद्वाराश्रीअपांपति
विष्णुप्रीतये अद्यामुकपर्वणिसर्वतीर्थेसागरेस्नानमहंकरिष्ये ॥ पिप्पलादसमुत्पन्नेकृत्येलोकभयंकरे ॥ पाषाणस्तेमयादत्तआहा
रार्थंप्रकल्प्यतां ॥ इतिसागरेपाषाणंवालुकापिंडंवाप्रक्षिप्यप्रार्थयेत् ॥ विश्वाचीचघृताचीचविश्वयोनेविशांपते ॥ सान्निध्यंकुरु
मेदेवसागरेलवणांभसि ॥ नमस्तेविश्वगुप्तायनमोविष्णोअपांपते ॥ नमोजलधिरूपायनदीनांपतयेनमः ॥ समस्तजगदाधारशं
खचक्रगदाधर ॥ देवदेहिममानुज्ञांतवतीर्थनिषेवणे ॥ त्रितत्वात्मकमीशानंनमोविष्णुमुमापतिं ॥ सान्निध्यंकुरुदेवेशसागरेल
वणांभसि ॥ अग्निश्चयोनिरनिलश्चदेहोरेतोधाविष्णुरमृतस्यनाभिः ॥ एतद्ब्रुवन्पांडवसत्यवाक्यंततोवगाहेतपतिंनदीनां ॥ इति
भारतोक्तमंत्रान्पठित्वासागरंसंपूज्यविधिवत्स्नात्वा ॥ सर्वरत्नोभवान्श्रीमान्सर्वरत्नाकरोयतः ॥ सर्वरत्नप्रधानस्त्वंगृहाणार्घ्यंम
होदधे॥इत्यर्घ्यंदत्वापिप्पलादादींस्तर्पयेत् ॥ यथोक्तंपृथ्वीचंद्रोदयेस्कांदे अद्येत्यादि० स्नानांगत्वेनपिप्पलादादितर्पणंकरिष्ये

इ० सं० सव्येनदेवतीर्थेनयवाक्षतैस्तर्पणंकुर्यात्॥पिप्पलादंतर्पयामि विकण्वं० कृतांतं० जीवकेश्वरं० वसिष्ठं० वामदेवं० पराशरं० उमापतिं० वाल्मीकिं० नारदं० वालखिल्यांस्त० नलं० नीलं० गवाक्षं० गवयं० गंधमादनं० जांबवंतं० हनूमंतं० सुग्रीवं० अंगदं० मैंदं० द्विविदं० ऋषभं० शरभं० रामं० लक्ष्मणं० सीतां० ॥ एतांस्तुतर्पयेद्विद्वान्जलमध्येविशेषतः ॥ आब्रह्मस्तंबपर्यंतंयत्किंचित्सचराचरं ॥ मयादत्तेनतोयेनतृप्तिमेवाभिगच्छतु ॥ इतिप्रार्थ्य ॥ अनेनसागरस्नानाख्येनकर्मणा परमेश्वरःप्रीयतां ॥ अयमेवविधिर्महोदयार्धोदयग्रहणाद्यन्यतमपर्वसुज्ञेयः ॥ इतिसमुद्रस्नानम् ॥ ॥ ७ ॥

॥ १५ ॥ अक्षय्यतृतीयोदकुंभदानम् ॥ अस्यांश्राद्धमत्यावश्यकं तच्चपितृत्रयंमातामहादित्रयंचसपत्नीकमुद्दिश्यषड्दैवत्यमपिंडकंकुर्यात् ॥ तत्रोदकुंभदानंविहितं श्राद्धासंभवेतत्स्थानेवोदकुंभदानं ॥ आचम्यदेशकालौसंकीर्त्यपितृणामाब्दमक्षय्यतृप्त्यर्थंउदकुंभदानंकरिष्ये ॥ तदंगमुदकुंभपूजनंब्राह्मणपूजनंचकरिष्यइतिसंकल्प्यकृत्वा ॥ दानमंत्रौ ॥ एषधर्मघटोदत्तो ब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्तृप्यंतुपितरोपिपितामहाः ॥ गंधोदकतिलैर्मिश्रंसान्नंकुंभंफलान्वितं ॥ पितृभ्यःसंप्रदास्यामिह्यक्षय्यमुपतिष्ठतु ॥ श्राद्धासंभवेतिलतर्पणमपिकार्यं ॥ पानीयमप्यत्रतिलैर्विमिश्रंदद्यात्पितृभ्यःप्रयतोमनुष्यः ॥ श्राद्धंकृतंतेनसमाःसहस्रंरहस्यमेतन्मुनयोवदंति ॥ इतिकौस्तुभेविष्णुपुराणवचनात् ॥ अस्यांमाधवोद्देशेनापिउदकुंभदानंकार्यं ॥ तत्रसंकल्पः ॥ आचम्यदेशकालकीर्तनांतेश्रीवसंतमाधवप्रीतयेऽक्षय्यतृतीयाप्रयुक्तंब्राह्मणायोदकुंभदानंकरिष्ये ॥ तदंगमुदकुंभपूजनंब्राह्मणपूजनंचसंकल्प्यकृत्वासूत्रवेष्टितगंधफलयवाद्युपेतमुदकुंभंपंचोपचारैःसंपूज्यब्राह्मणंसंपूज्य ॥ एषधर्मघटोद

त्तोब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्सकलाममसंतुमनोरथाः ॥ इमंउदकुंभंदक्षिणातांबूलसहितंमाधवप्रीतयेऽमुकशर्मणे ब्राह्मणायतुभ्यमहंसंप्रददे ॥ तेनश्रीवसंतमाधवःप्रीयतां ॥ अत्रवसंतपूजामग्रिमप्रयोगानुसारेणकृत्वोशीरचंदनव्यजनवाता दिभिर्विप्रान्संतोपयेत् ॥ इत्यक्षय्यतृतीया ॥ ॥ छ ॥ ॥ छ ॥

॥ १६ ॥ परशुरामजयंती ॥ अत्रप्रदोपेपरशुरामंविधिनासंपूज्यार्घ्यंदद्यात् ॥ तत्रमंत्रः ॥ जमदग्निसुतोवीरक्षत्रियांतक रप्रभो ॥ गृहाणार्घ्यंमयादत्तंकृपयापरमेश्वरेति ॥ पूजादितुसामान्यविष्णुपूजावत् ॥ इतिपरशुरामजयंती ॥ ॥ छ ॥

॥ १७ ॥ नृसिंहजयंती ॥ त्रयोदश्यांकृतैकभक्तःचतुर्दश्यांमध्याह्नेतिलामलकैःस्नात्वा ॥ उपोष्येहंनारसिंहभुक्तिमुक्तिफ लप्रद ॥ शरणंत्वांप्रपन्नोस्मिभक्तिंमेनृहरेदिश ॥ इतिमंत्रेणव्रतंसंकल्प्यआचार्यंवृत्वासायंकालेधान्यस्थोदकुंभपूर्णपात्रेसौवर्णप्र तिमायांपोडशोपचारैःनृसिंहंदेवंसंपूज्यअर्घ्यंदद्यात् ॥ तत्रमंत्रः ॥ परित्राणायसाधूनांजातोविष्णुर्नृकेसरी ॥ गृहाणार्घ्यंमयाद त्तंसलक्ष्मीर्नृहरिःस्वयं ॥ रात्रौजागरणंकृत्वा प्रातर्देवंसंपूज्यविसृज्यआचार्यायधेनुयुतांप्रतिमांदद्यात् ॥ मंत्रः ॥ नृसिंहाच्युत गोविंदलक्ष्मीकांतजगत्पते ॥ अनेनार्चाप्रदानेनसफलाःस्युर्मनोरथाः ॥ अथप्रार्थना ॥ मद्वंशेयेनराजातायेजनिष्यंतिचापरे ॥ तास्त्वमुद्धरदेवेशदुःसहाद्भवसागरात् ॥ पातकार्णवमग्नस्यव्याधिदुःखांबुवारिधेः ॥ नीचैश्चपरिभूतस्यमहादुःखगतस्यमे ॥ क रावलंवनंदेहिशेषशायिन्जगत्पते ॥ श्रीनृसिंहरमाकांतभक्तानांभयनाशन ॥ क्षीरांबुधिनिवासत्वंचक्रपाणेजनार्दन ॥ व्रतेनानेन देवेशभुक्तिमुक्तिप्रदोभवेति ॥ ततोब्राह्मणैःसहतिथ्यंतेपारणंकुर्यात् ॥ यामत्रयोर्ध्वगामिन्यांचतुर्दश्यांतुपूर्वाह्णएवपारणं ॥ इति

॥ १८ ॥ वसंतपूजा ॥ ब्राह्मणानुपवेश्याचमनादिदेशकालोत्कीर्तनांतेऽस्माकमित्यादिश्रीवसंतमाधवप्रीत्यर्थंनानानामगोत्रान्ब्राह्मणान्पाद्यादिभिःपूजयिष्येइतिसंकल्प्यगणपतिंसंपूज्यस्मृत्वावा ॥ श्रीमहाविष्णुस्वरूपिणेब्राह्मणायनमः इदमासनं ॥ इदंपाद्यमित्युक्त्वापत्नीसिक्तजलेनस्वयंवाविप्रदक्षिणसव्यपादौप्रक्षालयेत् ॥ तत्रमंत्राः ॥ अस्मिन्राष्ट्रेश्रियमावेशयाम्यथोदेवीः प्रतिपश्याम्यापः ॥ दक्षिणंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंदधामि ॥ सव्यंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंवर्धयामि ॥ पूर्वमन्यमपरमन्यंपादाववनेनिजे ॥ देवाराष्ट्रस्यगुप्त्याअभयस्यावरुध्यै ॥ आपःपादावनेजनीर्द्विषंतंनिर्दहंतुमे ॥ इति ॥ ततः इदमर्घ्यं इत्यर्घ्यंदत्वा गंधाःपांतु अक्षताःपांतु पुष्पंपातु तांबूलंपातु दक्षिणाःपांतु सकलाराधनैः स्वर्चितमस्तु ॥ इत्युपचारान्समर्प्यसुरभिचंदनपुष्पमालादिभिरलंकृत्य ॥ नमोस्त्वनंतायेतिप्रत्येकंप्रणमेत् ॥ ततोयथासंभवमुपहारदक्षिणादिदद्यादिति ॥ ॥ छ ॥

॥ १९ ॥ दशहराविधिः ॥ आचम्यदेशाद्युक्त्वा ममैतज्जन्मजन्मांतरसमुद्भूतत्रिविधकायिकचतुर्विधवाचिकत्रिविधमानसिकेतिस्कांदोक्तदशविधपापनिरासत्रयस्त्रिंशच्छतपित्रुद्धारब्रह्मलोकावाप्त्यादिफलप्राप्त्यर्थं ज्येष्ठसितदशम्यांदशहरापर्वण्यस्यांअमुकनद्यांस्नानंगंगापूजनंचकरिष्ये इतिसंकल्प्ययथाविधिस्नानंदशवारंकृत्वा गंगेचयमुने० कुरु ॥ इतिप्रकृतजलेगंगादितीर्थानिभावयित्वा ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ गंगाद्वारेकुशावर्तेबिल्वकेनीलपर्वते ॥ स्नात्वाकनखलेतीर्थेपुनर्जन्मनविद्यते ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयागंगेसर्वपापहराभव ॥ इतिप्रार्थ्यतूष्णींस्नात्वाअर्घ्यंदद्यात् ॥ नमःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेऽस्तुहृषीकेशगृहाणार्घ्यंनमोस्तुते ॥

जलशायिनेइदमर्घ्यंसमर्पयामि ॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमोस्तुते ॥ सूर्यायइ दमर्घ्यं० ॥ महाबलजटोद्भूतेकृष्णेउभयतोमुखि ॥ वेदेनप्रार्थितेगंगेगृहाणार्घ्यंनमोस्तुते ॥ कृष्णावेण्यैनमः इदमर्घ्यं० ॥ पुनः दशवारंस्नात्वावस्त्रोपवस्त्रेपरिधायगंगापूजांकुर्यात् ॥ ततः ॥ गंगातटेपूगफले—नमोभगवत्यैदशपापहरायैगंगायैनारायण्यैरेव त्यैशिवायैदक्षायैअमृतायैविश्वरूपिण्यैनंदिन्यैतेनमोनमः ॥ इत्यावाह्यषोडशोपचारैःपंचोपचारैर्वासंपूज्यदशविधपुष्पंधूपंदीपं नैवेद्यंचसमर्प्य ॥ तांबूलदक्षिणादिदत्वा ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतां ॥ इतिमंत्रपुष्पं० ॥ आवाहनंन०॥अनेनकृतपूजनेनगंगाप्रीयतां ॥ एवंपूजांकृत्वागृहमागत्यशक्तश्चेद्दशब्राह्मणान्सुवासिनीश्चभो जयेत् ॥ प्रतिपद्दिनमारभ्यस्नानादिपूजांतोविधिःकार्यइतिकेचित् ॥ यांकांचित्सरितंप्राप्यदद्यादर्घ्यंतिलोदकं ॥ मुच्यतेदश भिःपापैःसमहापातकैरपीति इतिदशहराविधिः ॥ अत्रविशेषःगंगास्तोत्रसहितोब्रह्मकर्मसमुच्चयेस्तितत्तोग्राह्यः ॥ ॥ छ ॥

॥ २० ॥ वटसावित्रीपूजा ॥ स्नानादिनित्यनियमंनिर्वर्त्यवटवृक्षंगत्वा ॥ वटमूलेस्थितोब्रह्मावटमध्येजनार्दनः ॥ वटा ग्रेतुशिवोदेवःसावित्रीवटसंश्रिता ॥ वटंसिंचामितेमूलंसलिलैरमृतोपमैः॥सूत्रेणवेष्टयेभक्त्यागंधपुष्पाक्षतैःशुभैः ॥ नमोवटा यसावित्र्यैभ्रामयेचप्रदक्षिणां ॥ सावित्रींचवटंसम्यगेभिर्मंत्रैःप्रपूजयेत् ॥ एवंविधिंवहिःकृत्वासम्यग्वैगृहमागता ॥ हरिद्राचंद नेनैवगृहमध्येलिखेद्वटं ॥ तत्रोपविश्यसंकल्प्यपूजाकार्याप्रयत्नतः ॥ नियममंत्रः ॥ त्रिरात्रंलंघयित्वातुचतुर्थेदिवसेत्वहं ॥ चंद्रा यार्घ्यंप्रदत्वाचपूजयित्वाकृतांसतीं॥मिष्टान्नानियथाशक्त्याभोजयित्वाद्विजोत्तमान्॥भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे ॥

इतिनियममंत्रः ॥ अथपूजाविधिः ॥ तत्रकुड्यादिपुचंदनादिनावटवृक्षंब्रह्मसावित्र्यादींश्चचित्ररूपेणविलिख्यतत्राथवोद्यापना
दिनासंस्कृतवटमूलेपूजांकुर्यात् यथा ॥ त्रयोदश्यांनित्यविधिंसंपाद्य देशकालौसंकीर्त्यममेहजन्मनिजन्मांतरेचाखंडितसौभा
ग्यसिद्धिपूर्वकंपुत्रपौत्रभर्त्रायुरारोग्यैश्वर्यादिसुखप्राप्तयेश्रीब्रह्मसावित्र्यादिदेवताप्रीत्यर्थंयथामिलितोपचारैः पूजनमहंकरिष्ये
तदादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकलशाद्यर्चनंचकरिष्येइतिसंकल्प्यगणपतिंसंपूज्यकलशादींश्चपूजयित्वाध्यायेत् ॥ अथ
ध्यानं ॥ पद्मपत्रासनस्थश्चब्रह्माकार्यश्चतुर्मुखः ॥ सावित्रीतस्यकर्तव्यावामोत्संगगतातथा ॥ आदित्यवर्णाधर्मज्ञासाक्षमालाक
रातथा ॥ एवंध्यात्वा ॥ ब्रह्मणासहितांदेवींसावित्रींलोकमातरं ॥ सत्यव्रतंचसावित्रींयमंचावाहयाम्यहं ॥ चकारान्नारदंच ॥
ब्रह्मसावित्रीसत्यवत्सावित्रीयमनारदेभ्योनमः ॥ आवाहनं ॥ ब्रह्मणासहसावित्रिसत्यवत्सहितेप्रिये ॥ हेमासनंगृहाणेदंधर्मरा
जसुरेश्वर ॥ आसनं ॥ गंगाजलसमानीतंपाद्यार्थंब्रह्मणःप्रिये ॥ भक्त्यादत्तंधर्मराजसावित्रिप्रतिगृह्यतां ॥ पाद्यं ॥ भक्त्यास
माहृतंतोयंफलपुष्पसमन्वितं ॥ अर्घ्यंगृहाणसावित्रिममसत्यवतःप्रिये ॥ अर्घ्यं ॥ सुगंधिसहकर्पूरंसुरभिस्वादुशीतलं ॥ ब्रह्म
णासहसावित्रिकुरुष्वाचमनीयकं ॥ आचमनीयं ॥ पयोदधिघृतंचैवशर्करामधुसंयुतं ॥ पंचामृतेनस्नपनंप्रीयतांपरमेश्वरी ॥
पंचामृतस्नानं ॥ मंदाकिन्याःसमानीतंहेमांभोरुहवासितं ॥ सावित्रिब्रह्मराजेनस्नानार्थंप्रतिगृह्यतां ॥ स्नानं ॥ गंधादिपंचोप
चारैःसंपूज्यसुरास्त्वेत्याद्यभिषेकंकुर्यात् ॥ सूक्ष्मतंतुमयंवस्त्रयुग्मंकार्पाससंभवं ॥ सावित्रीसत्यवद्भ्यांचभक्त्यादत्तंप्रगृह्यतां ॥
वस्त्रं ॥ सावित्रीसत्यवत्कातेधर्मराजसुरेश्वरी ॥ सावित्रिब्रह्मणासार्धमुपवीतंप्रगृह्यतां ॥ उपवीतं ॥ भूषणानिचदिव्यानिमुक्ता

हारयुतानिच ॥ त्वदर्थमुपक्लृप्तानिगृहाणशुभलोचने ॥ भूषणानि ॥ कुंकुमागरुकर्पूरकस्तूरीरोचनायुतं॥चंदनंतेमयादत्तंसावि
त्रिप्रतिगृह्यतां ॥ चंदनं ॥ अक्षताश्चसुरश्रेष्ठेकुंकुमाक्ताःसुशोभनाः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वरि ॥ अक्षतान् ॥ हरि
द्रांकुंकुमंचैवसिंदूरंकज्जलान्वितं ॥ सौभाग्यद्रव्यसंयुक्तंसावित्रिप्रतिगृह्यतां ॥ सौभाग्यद्रव्याणि॥माल्यादीनिसुगंधीनिमालत्या
दीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ पुष्पाणि ॥ अथांगपूजा ॥ सावित्र्यैनमःपादौपूजयामि ॥ वटप्रियायै०
जंघे० ॥ कमलपत्राक्ष्यै० कटी० ॥ भूतधारिण्यै० उदरं० ॥ गायत्र्यै० कंठं०॥ब्रह्मणःप्रियायै० मुखं॥सौभाग्यदात्र्यै०शिरः०॥
अथब्रह्मसत्यवत्पूजा ॥ धात्रे० पादौ०॥विधात्रे० जंघे० ॥ स्रष्ट्रे० ऊरू० ॥ प्रजापतये० ॥ मेढ्रं० ॥ परमेष्ठिने० कटी० ॥ अग्निरू
पाय० नाभिं०॥पद्मनाभाय० हृदयं ॥ वेधसे० वाहू०॥विधये० कंठं॥हिरण्यगर्भाय० मुखं ॥ ब्रह्मणे० शिरःपू० ॥ विष्णवे०
सर्वांगं० ॥ इत्यंगपूजा ॥ देवद्रुमरसोद्भूतःकालागरुसमन्वितः ॥ आघ्राणार्थमयंधूपःसावित्रिप्रतिगृह्यतां ॥ धूपं ॥ चक्षुर्दंसर्वलो
कानां०दीपं ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ मयानिवेदितंभक्त्यानैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं॥मध्येपानीयं उत्तरापो
शनं हस्तप्रक्षालनं मुखप्रक्षालनं करोद्वर्तनार्थेचंदनं मुखवासार्थेपूगीफलमितितांवूलं हिरण्यगर्भेतिदक्षिणां इदंफलमितिफलं
यानिकानिचेतिप्रदक्षिणां नमोस्त्वनंताय०नमस्कारं०आर्तिक्यंकृत्वा॥नमोब्रह्मण्यदेवित्वंसततंब्रह्मणःप्रिये॥पूजितासिद्विजैः
सर्वैःस्त्रीभिर्मुनिगणैःसदा ॥ त्रिसंध्यंदेविभूतानांवंदनीयासुशोभने ॥ मयादत्ताचपूजेयंत्वंगृहाणनमोस्तुते ॥ पुष्पांजलिं॥ततो
र्घ्याणिदद्यात्॥ॐकारपूर्वकेदेविसर्वदुःखनिवारिणि ॥ वेदमातर्नमस्तुभ्यंसौभाग्यंचप्रयच्छमे ॥ इदमर्घ्यं० ॥ पतिव्रतेमहाभागे

ब्रह्माणिचशुचिस्मिते ॥ दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि ॥ अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते॥पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोस्तुते ॥ इदमर्घ्यं॥ब्रह्मसत्यवतोः ॥ त्वयादृष्टंजगत्सर्वंसदेवासुरमानुषं ॥ सत्यव्रतधरोदेवब्रह्मरूपनमोस्तुते ॥ इदमर्घ्यं ॥यमाय॥त्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत् ॥ वैवस्वतगृहाणार्घ्यंधर्मराजनमोस्तुते ॥ इदमर्घ्यं ॥ नारदाय ॥ नारदायनमस्तुभ्यंसुरेशाद्यभिवंदित ॥ गृहाणार्घ्यंमयादत्तमवैधव्यंप्रयच्छमे ॥ इदमर्घ्यं ॥ सावित्रिब्रह्मसावित्रिसर्वदाप्रियभाषिणि॥तेनसत्येनमांपाहिदुःखसंसारसागरात् ॥ त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले ॥ त्वमेवचजगन्मातात्वमुद्धरवरानने ॥ यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि ॥ भस्मीभवतुतत्सर्वमवैधव्यंचदेहिमे॥अवियोगोयथादेवसावित्र्यासहितस्यते॥अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि ॥ इतिप्रार्थना ॥ सुवासिन्यस्तथापूज्यादिवसेदिवसेगते ॥ सिंदूरंकुंकुमंचैवतांबूलंचपवित्रकम् ॥ तथादद्याच्चशूर्पाणिभक्ष्यभोज्यादिकंसदा ॥ माहात्म्यंचैवसावित्र्याःश्रोतव्यंमुनिसत्तम ॥ पुराणश्रवणंकार्यंसतीनांचरितंशुभं ॥ अनेनकृतपूजनेनब्रह्मसावित्र्यादिदेवताःप्रीयंतां ॥एतत्कर्मसांगतासिध्यर्थंब्राह्मणायसौभाग्यवायनदानंब्राह्मणपूजनंचकरिष्येइतिसंकल्प्यवायनंब्राह्मणंचसंपूज्य ॥ फलवस्त्रसमायुक्तंसौभाग्यद्रव्यसंयुतं ॥ वंशपात्रेनिधायादौब्राह्मणायनिवेदयेत् ॥ उपायनमिदंदेविइतिवायनदानंसदक्षिणंदत्वादंपतीभोजनंसंकल्प्याशिषोग्राह्याः ॥ इतिवटसावित्रीपूजाविधिः ॥ ॥ छ ॥

॥ २१ ॥ विष्णुशयनोत्सवः ॥ तत्रसंध्यायांसोपस्करेमंचकेसुप्तांश्रीविष्णुप्रतिमांशंखचक्रगदापद्मयुतांलक्ष्मीसंवाहितचरणांनानाविधोपचारैःपूजयेत्॥तद्यथा॥आचम्यदेशकालौसंकीर्त्य ममममहापातकाद्यशेषपातकनिवृत्तिपूर्वकश्रीमहाविष्णुप्रसा

दसिद्धिद्वाराश्रीलक्ष्मीनायकपरमेश्वरप्रीत्यर्थंआषाढशुक्लैकादश्यांविष्णुशयनोत्सवंकरिष्येइतिसंकल्प्य (अनूराधाप्रथमपादा
दिपारणदिनपर्यंतंयदापूजाकरणंतदातत्कालविशिष्टःसंकल्पेऊहःकर्तव्यः) तदंगंगणपतिपूजनंकलशाद्यर्चनंशरीरशुद्ध्यर्थंन्या
सांश्चकरिष्येइतिसंकल्प्यकृत्वा अपवित्रःपवित्रोवा इतिपूजाद्रव्याणिप्रोक्ष्यात्मानंप्रोक्षयित्वादेवंजातीकुसुममालादिभिर्विवि
धोपचारैःसंपूजयेत्॥शांताकारमित्यादिध्यात्वा घंटादिमंगलवाद्यघोषपुरःसरंस्वास्तृतेसोपधानेशुक्लवस्त्राच्छादितेरम्येपर्यंकेदे
वंशाययित्वाप्रार्थयेत् ॥ वासुदेवजगद्योनेप्राप्तेयंद्वादशीतव ॥ भुजंगशयनेऽब्धौचसुखंस्वपिहिमाधव॥१॥ इयंतुद्वादशीदेवशय
नार्थंविनिर्मिता ॥ अस्यांसुप्तेजगन्नाथेजगत्सुप्तंभवेदिदं ॥ २ ॥ सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदं ॥ विबुद्धेत्वयिबुध्येतसर्व
मेतच्चराचरं ॥३॥ इतिसंप्रार्थ्यपुष्पांजलिंदद्यात् ॥ अनेनविष्णुशयनोत्सवाख्येनकर्मणाश्रीमहाविष्णुःप्रीयतां ॥ ततश्चपुरा
णश्रवणादिनारात्रौजागरणंकुर्यादिति ॥ इदंचमलमासेनकार्यं ॥ अस्तादौतुभवत्येव ॥ इतिशयनोत्सवः ॥ ॥ छ ॥

॥ २२ ॥ चातुर्मास्यव्रतारंभः ॥ तत्राषाढशुक्लैकादशीद्वादशीपौर्णमासीकर्कसंक्रमणदिनमितिकालचतुष्टयं ॥ एषामन्य
तमदिनेविष्णोर्महापूजांकृत्वाप्रार्थयेत्॥ श्वेतद्वीपेभोगितल्पेस्थितेत्वयिजनार्दन ॥ चातुर्मास्यव्रतेनुज्ञांदेहिलक्ष्मीपतेमम ॥ त
तोदेशकालौसंकीर्त्यममसर्वपापक्षयपूर्वकविष्णुप्रीतिद्वाराश्रीपरमेश्वरप्रीत्यर्थं आषाढशुक्लैकादशीमारभ्यकार्तिकशुक्लैकादशीप
र्यंतंप्रत्यहंताम्रपात्रदानमहंकरिष्ये॥ एवंरीत्या अमुकदानव्रतं अमुकवर्जनव्रतं अमुकभक्षणव्रतं अमुकदेवताप्रीतिकामोऽहमा
चरिष्ये ॥ ततःकृतांजलिपुटोदेवमीक्षमाणोमंत्रान्पठेत् ॥ चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि ॥ श्रावणेवर्जयेशाकंद

धिभाद्रपदेतथा ॥ दुग्धमाश्वयुजेमासिकार्तिकेद्विदलंतथा ॥ एतानिनित्यव्रतानि ॥ व्रतांतरचिकीर्षायांश्रावणेवर्जयेशाकमि
तिश्लोकस्थानेयथायथमूहःकार्यः॥ हविष्यान्नभक्षणे॥ हविष्यान्नंभक्षयिष्येदेवाहंप्रीतयेतव॥ इति। शाकव्रतेव्रतांतरेच समुच्च
येनकर्तव्ये॥ आदौश्रावणेवर्जयेशाकमितिश्लोकंपठित्वाव्रतांतरमंत्रंवदेत्॥ एवंगुडवर्जनादिव्रतेषु चतुरोवार्षिकान्मासान्देव
स्योत्थापनावधि॥ वर्जयिष्येगुडंदेवमधुरस्वरसिद्धये॥एवंरीत्या ॥ चतुरोवार्षिकान्मासानितिपूर्वार्धंपठित्वाउत्तरार्धेतुकरिष्य
माणव्रतनिर्देशःकार्यः॥ वर्जयिष्येतैलमहंसुंदरांगत्वसिद्धये ॥ चतुरोवा॰ पनावधि ॥ मौनव्रतीभविष्यामिस्वाज्ञापालनसिद्ध
ये॥ चतुरो॰ एकांतरोपवासंचप्राप्तुंब्रह्मपदंपरं ॥ निषिद्धपदार्थमात्रवर्जनेच्छायां ॥ चतुरो॰ वृंताकादिनिषिद्धानिहरेसर्वाणि
वर्जये ॥ तिथिपालनेप्रतिपदादिषुक्रमेणवर्ज्यानि॥ कूष्मांडंबृहतीफलानिलवणंवर्ज्यंतिलाम्लंतथातैलंचामलकंदिवंप्रवसतांशी
र्षंकपालांत्रकं॥ निष्पावाश्चमसूरिकाःफलमथोवृंताकसंज्ञंमधुद्यूतंस्त्रीगमनंक्रमात्प्रतिपदादिष्वेवमाषोडश ॥इति॥ अन्यानपि
यथासंभवंनियमान्कृत्वासर्वाभावेयंकंचिदपिनियमंदेवपुरतःकृत्वादेवंप्रार्थयेत्॥चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि ॥
इमंकरिष्येनियमंनिर्विघ्नंकुरुमेच्युत ॥ इदंव्रतंमयादेवगृहीतंपुरतस्तव ॥ निर्विघ्नंसिद्धिमायातुप्रसादात्तवकेशव॥गृहीतेऽस्मि

१ प्रतिपदि कूष्माडं, द्वितीयायां बृहतीफलं ( डोरली ), तृतीयायां लवणं, चतुर्थ्यां मूलक, पंचम्यां पनसफलं, षष्ठ्यां तैलं, सप्तम्यां आमलकं, अष्टम्यां शीर्षं ( नारिकेलं ), नवम्यां कपालं ( भोपळा ), दशम्यां अंत्र (पडवळ), एकादश्या निष्पावाः (पावटे-वाल), द्वादश्यां मसूरिका., त्रयोदश्यां वृंताकं, चतुर्दश्यां मधु, पौर्णमास्यां द्यूतं, अमायां स्त्रीगमनं वर्ज्यं ।

न्व्रतेदेवपंचत्वंयदिमेभवेत् ॥ तदाभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दन ॥ व्रतानांवहुत्वे ॥ गृहीतेषुव्रतेष्वेषु ॥ तदाभवंतुपूर्णानि ॥ इतिपठेत् ॥ शाकव्रतधारणापारणानक्तद्विदलवर्जनादिसिंध्वादावालोचनीयं ॥ ॥ छ ॥ ॥ छ ॥

॥ २३ ॥ अथव्यासपूजा ॥ आचम्यदेशकालौसंकीर्त्यचातुर्मास्यावासंकर्तुंश्रीकृष्णव्यासभाष्यकाराणांसपरिवाराणांपूजनंकरिष्येइतिसंकल्प्य ॥ मध्येश्रीकृष्णं तत्पूर्वतःप्रादक्षिण्येनवासुदेवसंकर्षणप्रद्युम्नानिरुद्धानावाह्य श्रीकृष्णपंचकदक्षिणभागे व्यासं तत्पूर्वतःप्रादक्षिण्येन सुमंतुजैमिनिवैशंपायनपैलानितिव्यासपंचकमावाह्यश्रीकृष्णादिवामेभाष्यकारंश्रीशंकरंतत्पूर्वतः प्रादक्षिण्येन पद्मपादविश्वरूपत्रोटकहस्तामलकाचार्यानावाह्य ॥ श्रीकृष्णपंचकेश्रीकृष्णपार्श्वयोःब्रह्मरुद्रौ पूर्वादिचतुर्दिक्षु ॥ सनकसनंदनसनातनसनत्कुमारानावाह्य कृष्णपंचकात्पुरतःगुरुपरमगुरुपरमेष्ठीगुरुपरात्परगुरून् ॥ ब्रह्मवसिष्ठशक्तिपराशरव्यासशुकगौडपादगोविंदपादशंकराचार्यान्ब्रह्मनिष्ठांश्चावाह्य ॥ पंचकत्रयस्याग्नेयकोणे गणेशं ईशान्यां क्षेत्रपालं वायव्ये दुर्गां नैर्ऋत्ये सरस्वतीं प्रागाद्यष्टदिक्षुलोकपालांश्चावाह्य पूजयेत् ॥ तत्रनारायणाष्टाक्षरेणश्रीकृष्णपूजा ॥ अन्येषांप्रणवादिनमोंतैस्तत्तन्नाममंत्रैःपूजाकार्या॥पूजांते असतिप्रतिवंधे चतुरोवार्षिकान्मासानिहवसामीतिमनसासंकल्प्य ॥ अहंतावन्निवत्स्यामिसर्वभूतहितायवै ॥ प्रायेणप्रावृषिप्राणिसंकुलंवर्त्मदृश्यते ॥ अतस्तेषामहिंसार्थंपक्षान्वैश्रुतिसंश्रयान् ॥ स्थास्यामश्चतुरोमासानत्रैवासतिवाधके ॥ इतिवाचिकसंकल्पंकुर्यात् ॥ ततोगृहस्थाःप्रतिब्रूयुः ॥ निवसंतुसुखेनात्रगमिष्यामःकृतार्थतां ॥ यथाशक्तिचशुश्रूषांकरिष्यामोवयंमुदेति॥ततोवृद्धानुक्रमेणयतीन्गृहस्थायतयश्चअन्योन्यंनमस्कुर्युः ॥ एतद्विधिःपौर्णमास्यामसं

भवेद्वादश्यांकार्यः॥इयंसंन्यासिकर्तृकपूजा ॥ अथगृहस्थाद्यैरुपासकैरध्येतृभिश्चात्रस्वस्वगुरुपूजनंकार्यं ॥ तत्रोपासकैरधिका
रानुसारेणाम्नायोक्तगुरुमंडलपूजाकार्यासाचविस्तरभयात्सर्वानुपयोगान्नात्रसंगृहीता ॥ सर्वेषामुपदेष्टृपूजाआवश्यकीसंक्षेपतो
लिख्यते ॥ देशकालकीर्तनांतेममगृहीतामुकदेवतामंत्रोपासनासाफल्यसिद्धिद्वाराश्रीसद्गुरुनाथदेवताप्रीत्यर्थंसद्गुरुपादुकापूज
नंकरिष्येइतिसंकल्प्यआसनेगुरुंपश्चिमाभिमुखमुपवेश्यतत्पुरतःप्राङ्मुखःस्वगुरुंध्यायेत् ॥आनंदमानंदकरंप्रसन्नंज्ञानस्वरूपंनि
जबोधरूपं॥योगींद्रमीड्यंभवरोगवैद्यंश्रीमद्गुरुंनित्यमहंनमामि ॥ इति अथवानमोगुरुभ्योगुरुपादुकाभ्यःइतिध्यात्वाब्राह्मणैः ॥
योनोअग्नेअररिवाँअघायोररातीवामर्चयंतिद्वयेन ॥ मंत्रोगुरुःपुनरस्तुसोऽअस्माअनुमृक्षीष्टतन्वंदुरुक्तैः ॥ इतिमंत्रेणषोडशोप
चारैःपूजयेत् ॥ स्त्रीशूद्रादिभिस्तु गुरुर्ब्रह्मागुरुर्विष्णुरितिमंत्रेणयथाविभवंपूजयेत् ॥ इति ॥ ॥ छ ॥

॥२४॥ कोकिलापूजादि ॥ आचमनादिदेशकालकीर्तनांतेममेहजन्मजन्मांतरस्थसर्वपापक्षयार्थंपुत्रपौत्रलक्ष्मीवृद्धिसौ
भाग्यवृद्धिद्वाराअवैधव्यसपत्ननाशायकोकिलारूपगौरीप्रीत्यर्थंकोकिलाव्रतंकरिष्ये इतिसंकल्प्य॥ आषाढपौर्णमास्यांतुसंध्या
कालेह्युपस्थिते ॥ संकल्पयेन्मासमेकंश्रावणेप्रत्यहंह्यहं ॥ स्नानंकरिष्येनियमाद्ब्रह्मचर्यस्थितासती॥ भोक्ष्यामिनक्तंभूशय्यांक
रिष्येप्राणिनांदयाम् ॥ इत्युक्त्वा ॥ स्नानंकरोमिदेवेशिकोकिलेप्रीतयेतव ॥ जलेस्मिन्पावनेपुण्येसर्वदेवजलाशये ॥ इतिमंत्रेण
अष्टौदिनानितिलामलककल्केन ततःसर्वौषधिजलेनाष्टौदिनानि ततोवचापिष्टेनाष्टौदिनानि ततःसर्वद्रव्यैःषड्दिनानि एवंमा
सावधिस्नानेक्रमः ॥ एवंस्नात्वारविंध्यात्वातस्माअर्घ्यंचदापयेत् ॥ आदित्यभास्कररवेअर्कसूर्यदिवाकर ॥ प्रभाकरनमस्तुभ्य

रंजितेदेविकंठसूत्रंसमर्पितं ॥ कोकिलेसुभगेदेविवरदाभवचांबिके ॥ कंठसूत्रं ॥ यानिरत्नानिसर्वाणिगंधर्वेपूरगेषुच ॥ तैर्युक्तं
भूषणंहैमंकोकिलेप्रतिगृह्यतां ॥ भूषणानि ॥ श्रीखंडंचंदनं० गंधं० ॥ अक्षताश्च० अक्षतान् ॥ कुंकुमालक्तकंदिव्यंकामिनीभूष
णास्पदं ॥ सौभाग्यदंगृहाणेदंप्रसीदहरवल्लभे ॥ हरिद्रांकुंकुमंचैवासिंदूरंकज्जलान्वितं ॥ सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि ॥
सौभाग्यद्रव्यं ॥ करवीरैर्जातिकुसुमैः०पुष्पाणि ॥ वनस्पतिरसो० धूपं ॥ आज्यंचेतिदीपं ॥ शर्कराखंडखाद्यानिदधिक्षीरघृ
तानिच ॥ आहारार्थंमयादत्तंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं ॥ पाटलोशीरकर्पूरसुरभिस्वादुशीतलं ॥ तोयमेतत्सुखस्पर्शंकोकिले
प्रतिगृह्यतां ॥ आचमनीयं ॥ चंदनागरुकर्पूरकस्तूरीकेसरान्वितं ॥ करोद्वर्तनकंदेविगृह्यतांहरवल्लभे ॥ करोद्वर्तनं ॥ कूष्मां
डंनारिकेरंचपनसंकदलीफलं ॥ जंबीरंमातुलिंगंचफलंगृह्णनमोस्तुते ॥ फलानि ॥ पूगीफलमितितांबूलं ॥ हिरण्यगर्भेतिदक्षि
णां ॥ कोकिलेकृष्णवर्णेत्वंसदावससिकानने ॥ भवानीहरकांतासिकोकिलायैनमोनमः ॥ नीराजनं ॥ पूजितापरयाभक्त्याको
किलागिरिशप्रिया ॥ पुष्पैर्नानाविधैःश्रेष्ठैर्वरदास्तुसदामम ॥ पुष्पांजलिं ॥ यानिकानिचेतिप्रदक्षिणां ॥ नमोदेव्याइतिनम
स्कारं ॥ कोकिलारूपधारिण्यैजगन्मात्रेनमोस्तुते ॥ शरणागतदीनानांत्राहिदेविसदांबिके ॥ गंधपुष्पाक्षतैर्युक्तंतोयंहेमफला
न्वितं ॥ अर्घ्यंगृहाणदेवेशिवांछितार्थंप्रयच्छमे ॥ आषाढस्यसितेपक्षेमेपर्वणेहरिप्रिये ॥ कोकिलेत्वंजगन्मातर्गृहाणार्घ्यंनमो
स्तुते ॥ पुनरर्घ्यंतिलस्नेहे० रूपंदेहिजयंदेहि० प्रार्थना ॥ व्रतांतेहैमींतिलपिष्टजांवाकोकिलांकृत्वाविप्रायदद्यात् ॥ देविचैत्रर
थोत्पन्नेविंध्यपर्वतवासिनि ॥ अर्चितापूजितासित्वंकोकिलेहरवल्लभे ॥ कोकिलेकलकंठासिमाधवेमधुरस्वरे ॥ वसंतेदेविगच्छ

त्वंदेवानांनंदनेवने ॥ इतिविसर्जनं ॥ अनेनकृतपूजनेनश्रीकोकिलास्वरूपिणीगौरीप्रीयतां ॥ इत्थंकरणाशक्तौ अंत्यत्रिदिनंव्रतं कार्यं तिलपिष्टमूर्तेःप्रत्यहंविसर्जनं धातुमय्यावैकल्पिकं ॥ रम्यंवनंसमागत्यश्रुत्वाकोकिलकूजितं ॥ यदानश्रूयतेशब्दउपवासश्चतद्दिने ॥ इतिकोकिलापूजा ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ २५ ॥ अथमलमासव्रतपूजादि ॥ प्रातःसंकल्पपूर्वकंविधिवत्स्नात्वालक्ष्मीयुतंपुरुषोत्तमंषोडशोपचारैःसंपूज्यअर्घ्यं निवेदयेत् ॥ देवदेवमहादेवप्रलयोत्पत्तिकारक ॥ गृहाणार्घ्यंमयादत्तंकृपांकृत्वाममोपरि ॥ व्रतार्केतु–पुराणपुरुषेशानसर्वशोकनिकृंतन ॥ अधिमासव्रतप्रीतोगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदत्वा ॥ स्वयंभुवेनमस्तुभ्यंब्रह्मणेमिततेजसे ॥ नमोस्तुतेश्रियानंतदयांकुरुममोपरि ॥ इतिप्रार्थयेत् ॥ अथापूपदानप्रयोगः॥आचम्यदेशका० ममत्रयस्त्रिंशदेवतांतर्यामिविष्णुरूपीसहस्रांशुप्रीतिद्वारानिखिलपापप्रशमपूर्वंपुत्रपौत्रयुतधनधान्यक्षेमसमृद्धिलोकद्वयसुखहेतुपृथ्वीदानफलप्राप्त्यापूपच्छिद्रसमसंख्यवर्षसहस्रावधिस्वर्लोकनिवासादिकल्पोक्तफलसिद्ध्यर्थं मलमासप्रयुक्तमपूपदानंक० ॥ ब्राह्मणंसंपूज्य विष्णुरूपीसहस्रांशुःसर्वपापप्रणाशनः ॥ अपूपान्नप्रदानेनममपापंव्यपोहतु ॥ नारायणजगद्बीजभास्करप्रतिरूपक ॥ व्रतेनानेनपुत्रांश्चसंपदंचाभिवर्धय ॥ इमानपूपान्कांस्यपात्रस्थान् गुडहिरण्याज्यच्छत्रोपानत्सहितान् अमुकगोत्राय अमुकशर्मणेब्राह्मणायतुभ्य०द्वादश्यादिदिनविशेषएवचिकीर्षायांमंत्रेषुविशेषः ॥ यस्यहस्तेगदाचक्रेगरुडोयस्यवाहनं ॥ शंखःकरतलेयस्यसमेविष्णुःप्रसीदतु ॥ कलाकाष्ठादिरूपेणनिमेषघटिकादिना ॥ योवंचयतिभूतानितस्मैकालात्मनेनमः ॥ कुरुक्षेत्रमयोदेशःकालःपर्वद्विजोहरिः ॥ पृथ्वीसममि

दंदानंगृहाणपुरुषोत्तम ॥ मलानांचविशुद्ध्यर्थंपापप्रशमनायच ॥ पुत्रपौत्राभिवृद्ध्यर्थंतवदास्यामिभास्कर ॥ अन्येमलमास नियमाविशेषतःस्नानदानादिचान्यव्रतग्रंथेभ्योवगंतव्यंविस्तरभियानात्रलिख्यते ॥ ॥ छ ॥ ॥ छ ॥

॥ २६ ॥ अथगोपद्मपूजा ॥ प्रारंभदिनेमासपक्षाद्युल्लिख्य ममेहजन्मनीत्यादिपंचवर्षावधिगोपद्मव्रतंकरिष्येतदंगंलक्ष्मी सहितवालकृष्णपूजांकरिष्येइतिसंकल्प्य गणेशंकलशंचसंपूज्यध्यायेत् ॥ चतुर्भुजंमहाकायंजांवूनदसमप्रभं ॥ शंखचक्रगदाप द्मरमागरुडशोभितं ॥ सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः ॥ एवंविधंहरिंध्यात्वाततोयजनमारभेत् ॥ ध्यानं ॥ आत्राहयामिदे वेशंभक्तानामभयप्रदं ॥ स्निग्धकोमलकेशंचमनसावाहयेहरिं ॥ रमासहितश्रीवालकृष्णायनमः॥आवाहनं॥सुवर्णमणिभिर्दिव्यै रचितेदेवनिर्मिते ॥ दिव्यसिंहासनेकृष्णउपविश्यप्रसीदमे ॥ आसनं ॥ पादोदकंसुरश्रेष्ठसुवर्णकलशेस्थितं ॥ गंधपुष्पाक्षतैर्यु क्तंपाद्यंमेप्रतिगृह्यतां ॥ पाद्यं ॥ अष्टद्रव्यसमायुक्तंस्वर्णपात्रोदकंशुभं ॥ भोऽभयंकरभक्तानांगृहाणार्घ्यंजगत्पते ॥ अर्घ्यं ॥ क र्पूरेणसमायुक्तमुशीरेणसुवासितं ॥ दत्तमाचमनीयार्थंनीरंस्वीक्रियतांविभो ॥ आचमनीयं ॥ गंगागोदावरीचैवयमुनाचस

१ आषाढपौर्णमास्यांवातथाष्टम्याहरेर्दिने।प्रारभेद्व्रतमेतच्चकार्तिकावधितत्तिथौ ॥ तिलामलकादिभिः स्नानंविधायनदीतीरेगोष्ठेशिवालयेवि ष्णुमंदिरेवृंदावनेवाहरिद्रादिनात्रयस्त्रिंशद्गोपद्मानिलिखित्वातत्रलक्ष्म्यासहवालकृष्णंध्यात्वागंधाद्युपचारैःप्रत्यहंपूजयेत्। अर्घ्याणिप्रदक्षिणाश्चत्रय स्त्रिंशत्संख्याकाःकार्याः। प्रथमवर्षेसमाप्तिदिनेनित्यवत्संपूज्यत्रयस्त्रिंशद्वटकवायनंदद्यात्। एवंद्वितीयवर्षे ३३ अपूपानां। तृतीयेशालिपिष्टान्न संभवस्य। चतुर्थेपूरिकादिभिः। पंचमेपरमान्नैः। एवंद्वितीयादिवर्षेभिन्नपदार्थैर्वायनंदेयम् ॥

रस्वती ॥ नर्मदासिंधुकावेरीताभ्यःस्नानार्थमाहृतं ॥ स्नानं ॥ पंचामृतस्नानादिअभिषेकांतंकुर्यात्॥वस्त्रयुग्मंसमानीतंपट्टसूत्रेण निर्मितं॥सुवर्णखचितंदिव्यंगृहाणत्वंसुरेश्वर ॥ वस्त्रं ॥ कार्पासतंतुभिर्युक्तंब्रह्मणानिर्मितंपुरा ॥ अनेकरत्नखचितमुपवीतंगृहाणभोः ॥ उपवीतं ॥ चंदनंमलयोद्भूतंकस्तूरीचारुचंदनं ॥ कर्पूरेणचसंयुक्तंस्वीकुरुष्वानुलेपनं ॥ चंदनं ॥ हरिद्रादिसौभाग्यद्रव्यंभूषणानि॥शतपत्रैश्चकह्लारैश्चंपकैर्मल्लिकादिभिः ॥ तुलसीयुक्तपुष्पाणिगृहाणपुरुषोत्तम॥ पुष्पाणि ॥ दशांगंगुग्गुलोद्भूतंसुगंधंचमनोहरं ॥ कृष्णागरुसमायुक्तंधूपंदेवगृहाणमे ॥ धूपं ॥ आज्यंचवर्तिं० दीपं ॥ अन्नंचतुर्विधं० ॥ नैवेद्यं० ॥ मध्ये पानीयं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनं० ॥ इदंफलमितिफलं ॥ पूगीफलमितितांबूलं ॥ हिरण्यगर्भेतिदक्षिणां॥यानिकानिचेतिप्रदक्षिणां ॥ नमोस्त्वनंतायेतिनमस्कारं ॥ चंद्रादित्यौचधरणिर्वि० आर्तिक्यदीपं० ॥ देवदेवजगन्नाथगोपालप्रतिपालक॥गोपदैःकृतसंत्राणगृहाणकुसुमांजलिं॥मंत्रपुष्पांजलिं० ॥ मंत्रहीनंक्रियाहीनं० प्रार्थनां ॥ अनेन कृतपूजनेनश्रीगोपालकृष्णःप्रीयतां ॥ ब्राह्मणंसंपूज्य तद्वर्षोक्तवायनं ॥ वायनंतेद्विजश्रेष्ठददामिव्रतपूर्तये ॥ दक्षिणाभिश्चसंयुक्तंगोपालःप्रीयतामिति ॥ इदंयथाशक्तिसोपस्करंवायनदानंगोपद्मपूजासांगतासिद्ध्येतुभ्यमहंसंप्रददे ॥ इति ॥ ॥

॥ २७ ॥ नागपंचमीपूजा ॥ चतुर्थ्यांकृतैकभक्तः पंचम्यांप्रातःकृतनित्यक्रियः हरिद्रामिश्रितचंदनेनभित्त्यांपीठेवानव नागान्नागपत्नीश्चमृन्मयान्वागोमयेनद्वारस्योभयतोवायथाचारंलिखित्वापूजयेत् ॥ आचम्यदेशकालौसंकीर्त्य ममसकुटुंबस्य सपरिवारस्यसर्वदासर्वतःसर्पभयनिवृत्तिपूर्वकंसर्पप्रसादसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं श्रावणशुक्लपंचम्यांयथामिलितोपचारैः

नागपूजांकरिष्येइतिसंकल्प्यआसनादिन्यासांश्चविधायकलशादिसंपूज्यनागादीनावाहयेत्॥ ॐअनंतायनमः अनंतंआवाहया
मि॥वासुकये०एवंवासुकिं० शेषं० शंखं० पद्मं० कंबलं० कर्कोटकं० अश्वतरं० धृतराष्ट्रं० शंखपालं० तक्षकं०कालियं० क
पिलं० (नागपत्नीभ्योनमः नागपत्नीः आवाहयामि) इत्यावाह्य अथवा ॥ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः॥पितरंचप्रय
न्स्वः ॥ नमोअस्तुसर्पेभ्यो० इत्यावाह्य ॐ अनंतादिनागेभ्योनमः नागपत्नीभ्योनमः इतिमंत्राभ्यांपुरुषसूक्तादिवैदिकमंत्रैश्च
षोडशोपचारैःपूजयेत् ॥ नागपत्नीभ्योहरिद्राकुंकुमादिअलंकारांश्चसमर्प्य पुष्पसमर्पणोत्तरंसर्वेभ्योदध्यक्षतदूर्वांकुरान्समर्प्य
नैवेद्यंक्षीरदधिघृतशर्करापायसलाजान्समर्पयेत् ॥ श्रावणेशुक्लपंचम्यांयत्कृतंनागपूजनं ॥ तेनतृप्यंतुमेनागाभवंतुसुखदाःस
दा ॥ अज्ञानाज्ज्ञानतोवाऽपियन्मयापूजनंकृतं ॥ न्यूनातिरिक्तंतत्सर्वंभोनागाःक्षंतुमर्हथ ॥ युष्मत्प्रसादात्सफलाममसंतुमनो
रथाः ॥ सर्वदामत्कुलेमास्तुभयंसर्पविषोद्भवं ॥ इतिप्रार्थयेत् ॥ ततः वल्मीकेपूजयेन्नागान्दुग्धंचैवतुपाययेत् ॥ घृतयुक्तंशर्क
राढ्यंयथेष्टंपाययेद्बुधः ॥ लोहपात्रेपोलिकादिनकार्यंतद्दिनेनरैः ॥ तथाभूमेःकर्षणंचखननादिनकारयेत् ॥ भर्जितचणकयाव
नालव्रीहिलाजान्बालकैःसहभक्षयेत् तेनदृढदंताभवंति ॥ नागप्रीत्यर्थंयथाशक्तिपायसान्नेनब्राह्मणान्भोजयेत् ॥ ततः वल्मी
कस्यसमीपेतुगायनंवाद्यमेवच ॥ स्त्रीभिःकार्यंभूषिताभिःकार्यश्चैवोत्सवोमहान् ॥ एवंकृतेकदाचिच्चसर्पतोनभयंभवेत् ॥ एवं
प्रतिवर्षंकार्यं ॥ इतिनागपंचमीपूजा ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ २८ ॥ सोमवारशिवपूजा ॥ देशकालौनिर्दिश्यअस्माकमित्यादिश्रीशिवलोकप्राप्तिकामः सोमवारव्रतांगत्वेनश्रीसो

मेश्वरपूजनंकरिष्ये ॥ तदंगत्वेन आसनविधिंन्यासान्कलशाद्यर्चनंचकरिष्ये ॥ गणपतिपू० तंडुलैरष्टदलंकृत्वा तत्र ॥ ध्याये न्नित्यंमहेशं० बंधूकसन्निभंदेवंत्रिनेत्रंचंद्रशेखरं ॥ त्रिशूलधारिणंदेवंचारुहासंसुनिर्मलं ॥ कपालधारिणंदेववरदाभयहस्तकं॥ उमयासहितंशंभुंध्यायेसोमेश्वरंसदा ॥ ध्यानं ॥ सहस्रशीर्षा० ॥ आयाहिभगवन्शंभोसर्वत्रगिरिजापते॥ प्रसन्नोभवदेवेशनम स्तुभ्यंहिशंकर ॥ त्रिपुरांतकरंदेवंचंद्रचूडंमहाद्युतिं ॥ गजचर्मपरीधानंसोममावाहयाम्यहं ॥ सोमेश्वरायनमःआवाहनं ॥ पुरु षएवेदं०॥विश्वेश्वरमहादेवराजराजेश्वरप्रिय॥आसनंदिव्यमीशानदास्येहंतुभ्यमीश्वर ॥ आसनं ॥ एतावानस्य० ॥ महादेवम हेशानमहादेवपरात्पर ॥ पाद्यंगृहाणमद्दत्तंपार्वतीसहितेश्वर ॥ पाद्यं ॥ त्रिपादूर्ध्व० ॥ त्र्यंबकेशसदाचारजगदादिविधायक॥ अर्घ्यंगृहाणदेवेशसांबसर्वार्थदायक ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ त्रिपुरांतकदीनार्तिनाशश्रीकंठशाश्वत॥ गृहाणाचमनीयंचप वित्रोदककल्पितं ॥ आचमनीयं ॥ यत्पुरुषेण० गंगागोदावरीरेवापयोष्णीयमुनातथा ॥ सरस्वत्यादितीर्थानिस्नानार्थंप्रतिगृ ह्यतां ॥ स्नानं ॥ क्षीरमाज्यंदधिमधुशर्कराचामृतंपयः ॥ प्रकल्पितंमयोमेशगृहाणेदंजगत्पते ॥ पंचामृतं ॥ पंचोपचारैःसंपूज्य रुद्रमहिम्नादिभिः अभिषेकंकुर्यात् ॥ भवंदेवंतर्पयामि शर्वं० रुद्रं० पशुपतिं०उग्रं०महांतं०भीमं० ईशानं०८ तथा भवस्यदेवस्य पत्नीमित्यादितर्पयित्वा ॥ तंयज्ञंबर्हिषि० ॥ वस्त्राणिपट्टकूलानिविचित्राणिनवानिच ॥ मयानीतानिदेवेशप्रसन्नोभवशंकर ॥ वस्त्रं ॥ तस्माद्यज्ञात्स० ॥ सौवर्णराजतंताम्रंकार्पासस्यतथैवच ॥ उपवीतंमयादत्तंप्रीत्यर्थंप्रतिगृह्यतां ॥ उपवीतं ॥ तस्माद्यज्ञा त्सर्वहुतऋचः० ॥ सर्वेश्वरजगद्वंद्यदिव्यासनसमास्थित ॥ सौरभाढ्यंचदेवेशचंदनंप्रतिगृह्यतां॥गंधं ॥ गंधोपरिशुक्लाक्षतान् ॥

अक्षताश्चसुरश्रेष्ठशुभ्राधूताश्चनिर्मलाः॥मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ अक्षतान्॥ तस्मादश्वा० माल्यादीनि० पुष्पा
णि ॥ शर्वायनमःभवनाशनाय महादेवाय उग्राय उग्रनाभाय भवाय शशिमौलिने रुद्राय नीलकंठाय शिवाय भवहारिणे
इत्येकादशनामभिःपुष्पाणिसमर्प्यशक्तौसहस्रमष्टोत्तरशतंवाबिल्वदलार्पणं॥त्रिशाखैर्बिल्वपत्रैश्चअच्छिद्रैःकोमलैःशुभैः॥ तवपू
जांकरिष्यामिअर्पयामिसदाशिव ॥ यत्पुरुषं० वनस्पतीति० धूपं ॥ ब्राह्मणोस्य० आज्यंचेति दीपं ॥ चंद्रमामनसो० ॥ अपू
पानिचपक्वानिमंडकान्वटकादिच ॥ पायसंसूपमन्नंचनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं ॥ मध्येपानीयं उत्तरापोशनं हस्तप्रक्षालनं मुख
प्रक्षालनं करोद्वर्तनं ॥ कूष्माडंमातुलिंगंचनारिकेरफलानिच ॥ गृहाणपार्वतीकांतसोमेशप्रतिगृह्यतां ॥ फलानि ॥ पूगीफ
लमितितांबूलं ॥ हिरण्यगर्भेतिदक्षिणां ॥ अग्निर्ज्योतीरविर्ज्योतिर्ज्योतिर्नारायणोविभुः॥नीराजयामिदेवेशंपंचदीपैःसुरेश्वरं ॥
नीराजनं ॥ नाभ्याआसी० ॥ हेतवेजगतामेवसंसारार्णवसेतवे ॥ प्रभवेसर्वविद्यानांशंभवेगुरवेनमः ॥ नमस्कारं ॥ सप्तास्या
सन्० यानिकानिचेति०प्रदक्षिणाः ॥ यज्ञेनयज्ञमयजंत० ॥ हरविश्वाखिलाधारनिराधारनिराश्रय ॥ पुष्पांजलिंगृहाणेशसोमे
श्वरनमोस्तुते ॥ पुष्पांजलिं ॥ बिल्वपत्रंसुवर्णेनत्रिशूलाकारमेवच ॥ मयार्पितमिदंशंभोबिल्वपत्रंगृहाणभो ॥ बिल्वपत्रार्पणं ॥
आवाहनंनजा० ॥ नक्तंचसोमवारेणसोमनाथजगत्पते॥ अनंतकोटिसौभाग्यमनंतंकुरुशंकर॥इदमर्घ्यं॥ सोमवारव्रतंभक्त्या
कृतंकल्याणहेतवे॥प्रसीदपार्वतीनाथसायुज्यंदेहिमेप्रभो ॥ इदमर्घ्यं ॥ आकाशादिशरीराणिग्रहनक्षत्रमालिने ॥ सर्वसिद्धि

निवासार्थंदत्तमर्घ्यंसदाशिव ॥ इदमर्घ्यं ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥ वृषभायेदमर्घ्यं० ॥ अनेनयथाशक्तिषोडशोपचारैःपूजनेनभगवान्श्रीभवानीशंकरःप्रीयताम् ॥ ॥ ७ ॥

॥ २९ ॥ अथशिवमुष्टिव्रतं ॥ तच्चविवाहानंतरंपंचवर्षपर्यंतंश्रावणांतर्गतसोमवारेषुस्त्रीभिःकार्यं ॥ तत्रस्नानादिविधाय शिवालयंगत्वादेशकालौसंकीर्त्यममश्रीशिवप्रीतिद्वारासर्वोपद्रवनिरासपूर्वभर्तृस्नेहाभिवृद्धिस्थिरसौभाग्यपुत्रपौत्रधनधान्यसमृद्धिक्षेमायुःसुखसंपदादिमनोरथसिद्ध्यर्थंशिवमुष्टिव्रतंक० तदंगंशिवपूजनं० गणेशार्चादिकृत्वाशिवंपूजयेत्॥तत्रमंत्रपुष्पांते सार्धमुष्टिमितानितंडुलगोधूमतिलमुद्गधान्यानि रौप्यतंडुलसौवर्णगोधूमतिलमुद्गयुतानि नारिकेलमातुलुंगरंभाकर्कटीफलसहितानिक्रमेणचतुर्षुसोमवारेषुदद्यात् पंचमेत्वनंतरस्यैवावृत्तिः ॥ मंत्रस्तु ॥ नमःशिवायशांतायपंचवक्त्रायशूलिने ॥ शृंगिभृंगिमहाकालगणयुक्तायशंभवे ॥ ब्राह्मणंसंपूज्यइदंयथाशक्तिसोपस्करंवायनदानंशिवमुष्टिव्रतसांगतासिद्ध्यर्थंसंप्रददे ॥ ॥

॥ ३० ॥ मंगलागौरीपूजा ॥ आचमनादिदेशकालकीर्तनांते ममेहजन्मनिजन्मांतरेचसकलसौभाग्यपुत्रपौत्रधनधान्यभर्तुरारोग्यादिसकलकामनासिद्धिद्वाराश्रीशिवमंगलागौरीप्रीत्यर्थं(पंचवाष्टवर्षात्मकंमंगलागौरीव्रतंकरिष्ये)पंचवर्षात्मकमंगलागौरीव्रतांगत्वेनविहितं यथामिलितषोडशोपचारैःपूजनंकरिष्ये ॥ तदादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकलशाद्यर्चनंचकरिष्यइतिसंकल्प्यकृत्वादीपंसंपूज्यदेवींध्यायेत्॥कुंकुमागरुलिप्तांगांसर्वाभरणभूषितां॥नीलकंठप्रियांगौरींध्यायेहंमंगलाह्वयां ॥ श्रीशिवमंगलागौर्यैनमःध्यायामि ॥ अत्रागच्छमहादेविसर्वलोकसुखप्रदे ॥ यावद्व्रतमहंकुर्वेपुत्रपौत्रादिवृद्धये ॥ आवाहनं ॥

रौप्येणचासनंदिव्यंरत्नमाणिक्यशोभितं ॥ मयानीतंगृहाणत्वंगौरिकामारिवल्लभे ॥ आसनं ॥ गंधपुष्पाक्षतैर्युक्तंपाद्यंसंपादितं मया ॥ गृहाणमंगलागौरिसर्वान्कामांश्चपूरय ॥ पाद्यं ॥ गंधपुष्पाक्षतैर्युक्तमर्घ्यंसंपादितंमया ॥ गृहाणपुत्रपौत्रादीन्प्रसन्नादेहिसर्वदा ॥ अर्घ्यं ॥ कामारिवल्लभेदेविकुर्वाचमनमंबिके ॥ निरंतरमहंवंदेचरणौतवपार्वति ॥ आचमनीयं ॥ पयोदधिघृतंचैव मधुशर्करयासमं ॥ पंचामृतेनस्नपनात्प्रीयतांपरमेश्वरी ॥ पंचामृतं ॥ जाह्नवीतोयमानीतंशुभंकर्पूरसंयुतं ॥ स्नापयामिसुरश्रेष्ठेत्वांपुत्रादिफलप्रदां ॥ स्नानं ॥ पंचोपचारैःपूर्वपूजांसमाप्याभिषेकंकुर्यात् ॥ आचमनीयं ॥ ततः ॥ वस्त्रंचसोमदैवत्यंलज्जायास्तुनिवारणं ॥ मयानिवेदितंभक्त्यागृहाणपरमेश्वरि ॥ वस्त्रं ॥ कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितं ॥ गृहाणत्वंमयादत्तं पार्वतीजगदीश्वरि ॥ कंचुकीं ॥ कुंकुमागरुकर्पूरकस्तूरीचंदनंतथा ॥ विलेपनंमहादेविगंधंदास्यामिभक्तितः ॥ गंधं ॥ रंजिताःकुंकुमाद्येनअक्षताश्चातिशोभनाः ॥ ममैपांदेविदानेनप्रसन्नाभवपार्वति ॥ अक्षतान् ॥ हरिद्राकुंकुमंचैवसिं० सौभाग्यद्रव्याणि ॥ वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं ॥ पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां ॥ सौवर्णानिपिष्टमयानिचभूपणानि ॥ माल्यादीनि० ॥ सेवंतिकाबकुलचं० ॥ पुष्पाणि ॥ अपामार्गस्यपत्रैश्चदूर्वाधत्तूरसंज्ञकैः ॥ दूर्वांकुरैःपोडशभिर्बिल्वपत्राणिपंच च ॥ इतिमंत्रेणअपामार्गादिपत्राणिसमर्प्य ॥ अथांगपूजा ॥ उमायैनमः पादौपूजयामि ॥ गौर्यै० जंघे० ॥ पार्वत्यै० जानुनी० ॥ जगद्धात्र्यै० ऊरू० ॥ जगत्प्रतिष्ठायै० कटिं० ॥ शांतिरूपिण्यै० नाभिं० ॥ देव्यै० उदरं० ॥ लोकवंद्यायै० स्तनौ० ॥ काल्यै० कंठं० ॥ शिवायै० मुखं० ॥ भवान्यै० नेत्रे० ॥ रुद्राण्यै० कर्णौ० ॥ महादेव्यै० ललाटं० ॥ मंगलदात्र्यै०

शिरः० ॥ पुत्रदायिन्यै० सर्वांगंपूजयामि ॥ अथपत्रपूजा ॥ उमायैनमः विल्वपत्रंस० ॥ गौर्यै० अपामार्गं० ॥ पार्वत्यै० मालती० ॥ दुर्गायै० दूर्वां० ॥ काल्यै० चंपक०॥भवान्यै० करवीर०॥रुद्राण्यै०वदरी० ॥शर्वाण्यै०अर्क०॥चंडिकायै०तुलसी० ॥ ईश्वर्यै० मुनि० ॥ शिवायै० दाडिमी० ॥ अपर्णायै०धत्तूर० ॥ धात्र्यै० जाती०॥मृडान्यै० मरुवक० ॥ गिरिजायै०वकुल० ॥ अंबिकायै० अशोकपत्रं०॥ अत्र मुष्ट्यानानाविधधान्यानि शिवायैनमइतिसमर्पयंति ॥ देवद्रुमरसोद्भूतःकृष्णागरुसमन्वितः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां॥धूपं॥त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमं ॥ आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यतां ॥ दीपं ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां॥नैवेद्यं॥मध्येपानीयं उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं करोद्वर्तनं॥इदंफलमितिफलं॥पूगीफलमितितांबूलं ॥ हिरण्यगर्भेतिदक्षिणां ॥ चक्षुर्दमितिनीराजनं ॥ नमोदेव्यै० पुष्पांजलिं ॥ यानिकानिचेतिप्रदक्षिणा नमस्कारः ॥ पुत्रान्देहिधनंदेहिसौभाग्यंदेहिमंगले॥ अन्यांश्चसर्वकामांस्त्वं देहिदेविनमोस्तुते ॥ इतिप्रार्थना ॥ ततोवैणवपात्रेतुसौभाग्यद्रव्यमाक्षिपेत् ॥ अन्नंकूर्पाससंयुक्तंसवस्त्रंफलसंयुतं ॥ वायनंगौरिविप्रायददामिप्रीतयेतव ॥ सौभाग्यारोग्यकामानांसर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं ॥ इतिमंत्राभ्यांवायनंदद्यात् ॥ ततः ॥ ताम्रेवावैणवेपात्रेसौभाग्यद्रव्यमाक्षिपेत् ॥ लड्डुकंचुकिसंयुक्तंसवस्त्रफलदक्षिणं ॥ मात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमं ॥ जननींमातृसंबंधिस्त्रियःषोडशभोजयेत् ॥ नीराजनंततःकुर्याद्दीपैःषोडशसंख्यकैः ॥ भोक्तव्यादीपकाश्चाथस्त्रीभिःसहस्वयंततः॥अन्नंलवणवर्जंतुमौनेनभोजयेत्स्वयं ॥ सुवासिनीश्चापितथावस्त्रालंकारभूषणैः ॥ पूजयेच्चततः

पश्चात्कुर्याद्गौरीविसर्जनं ॥ विप्रायप्रतिमादेयारत्नवस्त्राणिभूरिशः ॥ एवंकृतेविधानेस्मिन्नार्यवैधव्यमाप्नुयात् ॥ अनेन०
इतिमंगलागौरीव्रतपूजाविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥३१॥ बुधबृहस्पतिपूजा ॥ प्रथमबुधबृहस्पतिवासरयोः प्रातर्नित्यकर्मनिर्वर्त्यभित्त्यांबुधबृहस्पतीलिखित्वास्त्रियापुरुषेणवापूजनात्मकंव्रतंकार्यं ॥ देशकालकीर्तनांते ममसकलकामनासिद्धिद्वाराश्रीबुधबृहस्पतिप्रीत्यर्थंश्रावणमासीयसौम्यगुरुवारनिमित्तंबुधबृहस्पतिपूजनंकरिष्ये ॥ बुधबृहस्पती प्रियंगुकलिकाश्यामं० देवानांचऋषीणांच० इत्यावाह्यबुधबृहस्पतिभ्यांनमःइत्युच्चार्यपूजांकुर्यात्॥ दधिभक्तंनैवेद्यं मुखरोचनार्थंमूलकंचदद्यात् ॥ एवंश्रावणगतबुधगुरुवारेषुसप्तवर्षपर्यंतंकृत्वोद्यापनंकुर्यात् दीर्घायुःपुत्रद्रव्यवृद्धिपाकवृद्धिबुधबृहस्पतिकृपादांपत्यप्रीतिधान्यवृद्धीनांमध्येयस्याःस्त्रियः पुरुषस्यवायायाकामनास्तितेन स्वीयधनागारपाकागारदेवागारशय्यागारधान्यागारेषुक्रमेणबुधबृहस्पतीलिखित्वापूजाकार्या॥ ॥ छ ॥

॥३२॥अथभृगुवारव्रतपूजा ॥ प्रथमभृगुवासरेप्रातर्नित्यकर्मनिर्वर्त्यभित्त्यांहरिद्रामिश्रितचंदनेनबहुबालसहितांजीवंतिकामूर्तिंविलिख्यपूजयेत्॥ देशकालौनिर्दिश्यममायुष्मत्पुत्रपौत्राभिवृद्धिसकलमनोरथावाप्तिद्वाराश्रीजराजीवंतिकादेवताप्रीत्यर्थंश्रावणमासीयभृगुवासरनिमित्तंपूजनंकरिष्ये॥ इतिसंकल्प्यकलशादिसंपूज्य॥ बालसहितजीवंतिकादेवतायैनमःश्रीजराजीवंतिकाभ्यांसबालकाभ्यांनमःइतिवापूजयेत्॥ ततःपुष्पार्पणकालेपुष्पमालांदेवतायागलेबध्वापूजांसमाप्य ततःगोधूमपिष्टसंभूतान्पंचदीपान्कृत्वाप्रज्वाल्यनीराजनंकार्यं॥ यत्रमेबालकोभवेज्जीवंतिकेतत्रत्वयारक्षणीयः ॥ इतिप्रार्थ्यसन्निहितस्वबाल

केष्वक्षतान्निक्षिपेत् ॥ भोजनसमयेतान्दीपान्भक्षयेत् ॥ एवंभृगुवारेषुप्रतिवर्षंश्रावणेकार्यं ॥ ययाजीवंतिकाव्रतंकृतंतयाया वज्जीवंहरिद्रवर्णवस्त्रकंचुकीकंकणादिधारणंहरिद्रवर्णमंडपाधःप्रवेशनंतंडुलोदकोल्लंघनंकारवल्लीशाकभक्षणंचनकार्यं ॥ ॥ छ ॥

॥२३॥अथशनिवारपूजादि ॥ श्रावणशनिवारेप्रातर्ब्राह्मणान्सुवासिनीश्चतिलतैलेनाभ्यज्यउष्णोदकेनस्नानंकारयित्वा सकुटुंबःस्वयंतैलेनाभ्यज्योष्णोदकेनस्नायात् ॥ ततस्तद्दिनेउपवासंकृत्वाहरिद्राचंदनेनभित्त्यांस्तंभेवालक्ष्म्यासहितंनृसिंहंलि खित्वासायंकालेयथाचारंप्रातःकालेवापूजयेत् ॥आचम्यदेशकालौसंकीर्त्यममधनधान्यसमृद्धिपुत्रपौत्रसुखाभिवृद्धिपूर्वकवैकुं ठप्राप्तिद्वाराश्रीलक्ष्मीनृसिंहप्रीत्यर्थंश्रावणमासीयशनिवारनिमित्तंषोडशोपचारैःपूजनंकरिष्ये इतिसंकल्प्यकलशादिसंपूज्यश्री लक्ष्मीनृसिंहाभ्यांनमःइतिपूजयेत् ॥ नीलरक्तपीतपुष्पाणितिलतैलपाचितान्खिच्चडिकुंजरसंज्ञकशाकमाषवटकान्तैलदीपंच समर्प्यनैवेद्यपदार्थैःसहान्नेनब्राह्मणसुवासिनीर्भोजयेत् ॥ स्वयंचापितदन्नेनभोजनंकार्यं ॥ ॥ अत्रैवशनैश्चरपूजा ॥ शनिवा रेखंजंब्राह्मणंतिलतैलेनाभ्यज्यस्वयंचाभ्यंगंकृत्वानित्यपूजनांतेलोहमयमूर्तौतिलमाषाक्षतैः तिलतैलाभिषेकपूर्वकंशनिपूजनंका र्यं ॥ नृसिंहपूजोक्तेनान्नेनब्राह्मणभोजनंनैवेद्यश्चकार्यः ॥ ममजन्मराशेःसकाशादनिष्टराशिस्थितस्यापिशनैश्चरस्यप्रसादसिद्ध्य र्थंश्रावणमासीयशनिवासरनिमित्तंशनैश्चरपूजनंकरिष्ये इतिसंकल्प्ययथाधिकारंशमग्निरितिवैदिकमंत्रेण नीलांजनसमाभास मितिवानाममंत्रेणवाशनिंसंपूज्यस्तोत्रेणस्तुवीत ॥ तद्दिनेमध्याह्नेहनुमत्पूजनंकार्यं ॥ ममाभीष्टसिद्धिद्वाराश्रीहनुमत्प्रीत्यर्थंषो डशोपचारैःपूजनंकरिष्ये इतिसंकल्प्यमनोजवंमारुत० प्रपद्ये ॥ इतिमंत्रेणहनूमतेनमःइतिपूजयेत् ॥ तैलमिश्रसिंदूरंजपार्कमं

दारकुसुमतैलपाचितमाषवटकमालांचार्पयेत् ॥ पूजांसमाप्य ॥ हनूमानंजनीसूनुर्वायुपुत्रोमहाबलः ॥ रामेष्टःफाल्गुनसखःपिंगाक्षोमितविक्रमः ॥ उदधिक्रमणश्चैवसीताशोकविनाशनः ॥ लक्ष्मणप्राणदाताचदशग्रीवस्यदर्पहा ॥ द्वादशैतानिनामानिकपींद्रस्यमहात्मनः ॥ स्वापकालेप्रबोधेचयात्राकालेचयःपठेत् ॥ तस्यसर्वभयंनास्तिरणेचविजयीभवेत् ॥ इतिस्तुवीत ॥ तेनवज्रतुल्यशरीरःअरोगोबलवान्धैर्यवान्बुद्धिमान्शत्रुक्षयकर्तामित्रवृद्धिकर्तावीर्यवान्कीर्तिमांश्चजायते ॥ आंजनेयालयेलक्षंहनूमत्कवचंजपेत् ॥ अणिमाद्यष्टसिद्धीनांसाधकःस्वामितामियात् ॥ यक्षराक्षसवेतालादर्शनात्तस्यवेगतः ॥ पलायंतेदशदिशःकंपिताभयविह्वलाः ॥ इति ॥ ॥ तद्दिनेअश्वत्थपूजनंकार्यं ॥ ममसर्वसंपत्समृद्धिद्वाराश्रीविष्णुप्रीत्यर्थंअश्वत्थपूजनंकरिष्ये ॥ मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे॥अग्रतःशिवरूपायअश्वत्थायनमोनमः ॥ श्रीविष्णुरूपायाश्वत्थायनमःइतिपूजयित्वा ॥ अश्वत्थहुतभुग्वासगोविंदस्यसदाश्रय ॥ अशेषंहरमेशोकंवृक्षराजनमोस्तुते ॥ इतिनत्वाआलिंगनंकुर्यात् ॥ ॥ छ ॥

॥३४॥ शीतलासप्तमीपूजा ॥ प्रातःनित्यकर्मनिर्वर्त्यहरिद्रामिश्रचंदनेनभित्त्यांवापींलिखित्वातन्मध्येबालद्वयपुरुषत्रययुताःसप्तशीतलासंज्ञकाउदकदेवताःश्ववृषभनरवाहनाःशिविकाश्चलिखित्वापूजयेत् ॥ देशकालौसंकीर्त्यममपुत्रपौत्राद्यभिवृद्धिद्वाराशीतलादेवताप्रीत्यर्थंश्रावणशुक्लसप्तम्यांविहितंपूजनंकरिष्येइतिसंकल्प्यपरिवारसहितशीतलादेवताभ्योनमः इतिषोडशोपचारैःपूजयेत्॥कर्कटीफलदध्योदनसहितंनैवेद्यंसमर्प्यवायनंदद्यात्॥ममपुत्रपौत्रा० शीतलाप्रीत्यर्थंब्राह्मणायअग्निपक्वान्नफलकर्कटीफलसहितकर्कटीपर्णस्थितदध्योदनवायनदानमहंकरिष्ये ॥ दध्यन्नंदक्षिणायुक्तंवायनंफलसंयुतं ॥ शीतलाप्रीतयेतु

भ्यंब्राह्मणायददाम्यहं ॥ इदंसोपस्करंदध्योदनवायनंअमुकशर्मणेब्राह्मणायसंप्रददे ॥ इतिशीतलासप्तमीपूजासमाप्ता ॥ ॥

॥३५॥ पवित्रारोपणं ॥ द्वादश्यांप्रातःकृतनित्यक्रियोदेशकालौसंकीर्त्यमयाकृतायाःसंवत्सरावधिविष्णुपूजायाःसंपूर्णफलप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविष्णोःपवित्रारोपणंकरिष्ये तदंगत्वेनपूजनंकरिष्येइतिसंकल्प्य यथासंभवंविष्णोर्महापूजांकृत्वा पवित्राणिशुद्धोदकेनप्रक्षाल्यवैणवपटलादौसंस्थाप्य गंधाद्युपचारैःसंपूज्य देवसमीपेगोदोहनकालमात्रमधिवास्य ततोमुख्यपवित्रंगंधदूर्वाक्षतयुक्तंकृत्वादेवकंठेसमर्पयेत् ॥ तत्रमंत्रः॥अतोदेवाइतिवैदिकः॥ देवदेवनमस्तुभ्यंगृहाणेदंपवित्रकं ॥ पवित्रीकरणार्थायवर्षपूजाफलप्रदं॥पवित्रकंकुरुष्वाद्ययन्मयादुष्कृतंकृतं ॥ शुद्धोभवाम्यहंदेवत्वत्प्रसादात्सुरेश्वर ॥ इतिमंत्रेणमूलमंत्रसंपुटितेनसमर्प्य अंगदेवताभ्यश्चतत्तन्नाममंत्रेणसमर्प्योत्तरपूजांकृत्वामहानैवेद्यंसमर्प्यनीराज्यप्रार्थयेत् ॥ मणिविद्रुममालाभिर्मंदारकुसुमादिदिभिः॥इयंसांवत्सरीपूजातवास्तुगरुडध्वज॥वनमालांयथादेवकौस्तुभंसततंहृदि ॥ पवित्रमस्तुतेतद्वत्पूजांचहृदयेवह ॥ जानताजानतावापिनकृतंयत्तवार्चनं ॥ केनचिद्विघ्नदोषेणपरिपूर्णंतदस्तुमे ॥ अपराधसहस्राणिक्रियंतेहर्निशंमया ॥ दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ भूमौस्खलितपादानांभूमिरेवावलंबनं ॥ त्वयिजातापराधानांत्वमेवशरणंमम ॥ इतिसंप्रार्थ्यगुरवेब्राह्मणेभ्यश्चपवित्राणिदत्वास्वयंचधृत्वाब्राह्मणैःसहपारणंकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥

॥३६॥संकष्टचतुर्थीपूजा॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममविद्याधनपुत्रपौत्रप्राप्त्यर्थंसमस्तरोगमुक्तिकामःश्रीसंकष्टहरगणपतिप्रीत्यर्थंसंकष्टचतुर्थीव्रतांगत्वेनयथाशक्तिपूजांकरिष्ये तत्रादौगणपतिपूजनंकलशाद्यर्चनंचकरिष्येइतिसंकल्प्य

कृत्वासौवर्णरौप्यताम्रमृन्मयाद्यन्यतमांगणपतिमूर्तिंकृत्वाजलपूर्णपूर्णपात्रवस्त्रयुतकुंभोपरिमहीद्यौरित्यादिविधिनास्थापयि
त्वापूजयेत् ॥ अथध्यानं ॥ लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकं ॥ नानारत्नैःसुवेषाढ्यंप्रसन्नास्यंविचिंतये॥ध्यानं॥सहस्रशीर्षा० ॥
आगच्छत्वंजगन्नाथसुरासुरनमस्कृत ॥ अनाथनाथसर्वज्ञविघ्नराजकृपांकुरु॥ गजास्याय० आवाहनं॥पुरुषएवेदं०॥गोप्तात्वंस
र्वलोकानामिंद्रादीनांविशेषतः॥भक्तदारिद्र्यविच्छेत्ताएकदंतनमोस्तुते॥विघ्नराजाय० आसनं० ॥एतावानस्य० ॥ मोदकान्धा
रयन्हस्तेभक्तानांवरदायक॥देवदेवनमस्तेस्तुभक्तानांफलदोभव ॥ लंबोदराय० पाद्यं० ॥ त्रिपादूर्ध्व० ॥ महाकायमहारूपअ
नंतफलदोभव॥देवदेवनमस्तेऽस्तुसर्वेषांपापनाशन॥शंकरसूनवे० अर्घ्यं॥तस्माद्विराळ०॥कुरुष्वाचमनंदेवसुरवंद्याखुवाहन ॥
सर्वाघदलनस्वामिन्नीलकंठनमोस्तुते ॥ उमासुताय० आचमनीयं०॥यत्पुरुषेण०॥गंगाचयमुनाचैवगोदावरिसरस्वती॥नर्मदा
सिंधुकावेरीजलंस्नानायकल्पितं ॥ हेरंबाय० स्नानं ॥ आप्यायस्वेत्यादिमंत्रैः॥स्नानंपंचामृतेनैवगृहाणगणनायक॥अनाथना
थसर्वज्ञनमोमूषकवाहन ॥ पयोदधिघृतंचैवमधुशर्करयायुतं ॥ पंचामृतेनस्नपनंगृह्यतांगणनायक ॥ वक्रतुंडाय० पंचामृ
तस्नानं० ॥ पंचोपचारैःसंपूज्यगणपत्यथर्वशीर्षादिभिरभिषेकंकुर्यात् ॥ तंयज्ञंबर्हिषि० ॥ रक्तवस्त्रयुगंदत्तंदेवानामपिदुर्लभं॥
गृहाणमंगलंदेवलंबोदरहरात्मज ॥ शूर्पकर्णाय० वस्त्रं ॥ तस्माद्यज्ञा० ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणगणनायक॥आरक्तंब्रह्मसूत्रं
चकनकस्योत्तरीयकं ॥ कुब्जाय० यज्ञोपवीतं ॥ तस्माद्य० ॥ गृहाणेश्वरसर्वज्ञदिव्यंचंदनमुत्तमं॥करुणाकरपद्माक्षगौरीसुतन
मोस्तुते ॥ गणेश्वराय० गंधं० ॥ अक्षताश्च० गणनायकाय० अक्षतान्०॥ सुगंधिदिव्यमालांचगृहाणगणनायक॥विनायक

नमस्तुभ्यंशिवसूनोनमोस्तुते॥मालां० ॥ तस्मादश्वा० ॥ माल्यादीनि० इतिपुष्पाणि ॥ अथांगपूजा ॥ गणेश्वरायनमः पादौ पूजयामि ॥ विघ्नराजाय० जानुनी० ॥ आखुवाहनाय० ऊरू० ॥ हेरंबाय० कटिं० ॥ कामारिसूनवे० नाभिं० ॥ लंबोदराय० उदरं० ॥ गौरीसुताय० स्तनौ० ॥ गणनायकाय० हृदयं० ॥ स्थूलकंठाय० कंठं० ॥ स्कंदाग्रजाय० स्कंधौ० ॥ पाशहस्ताय० हस्तान्पू० ॥ गजवक्राय० वक्रं० ॥ विघ्नहर्त्रे० ललाटं ॥ सर्वेश्वराय० शिरःपू० ॥ गणाधिपाय० सर्वांगंपूजयामि ॥ यत्पुरुषंव्य० ॥ दशांगंगुग्गुलंधूपमुत्तमंगणनायक ॥ गृहाणदेवदेवेशशिवासुतनमोस्तुते ॥ विकटाय०धूपं० ॥ ब्राह्मणोस्य० ॥ सर्वज्ञसर्वरत्नाढ्यसर्वेशविबुधप्रिय ॥ गृहाणमंगलंदीपंघृतवर्तिसमन्वितं ॥ वामनाय० दीपं० ॥ चंद्रमामनसो० ॥ नैवेद्यंगृह्यतांदेवनानामोदकसंयुतं ॥ पक्वान्नफलसंयुक्तंषड्रसैश्चसमन्वितं ॥ सर्वाय० नैवेद्यं० ॥ मध्येपानीयं० उत्तरापोशनं० ॥ कृष्णावेण्यागौतमीनांपयोष्णीनर्मदाजलैः ॥ आचम्यतांविघ्नराजप्रसन्नोभवसर्वदा॥आचमनं० ॥ फलान्यमृतकल्पानिसुगंधीन्यघनाशन ॥ आनीतानियथाशक्त्यागृहाणगणनायक ॥ सर्वार्तिनाशिने० फलं ॥ तांबूलंगृह्यतांदेवनागवल्ल्यादलैर्युतं ॥ कर्पूरेणसमायुक्तंसुगंधंमुखभूषणं ॥ विघ्नहर्त्रे० तांबूलं० ॥ सर्वदेवाधिदेवेशसर्वसिद्धिप्रदायक ॥ भक्त्यादत्तांदक्षिणांतेगृहाणजगदीश्वर॥ सर्वेश्वराय० दक्षिणां० ॥ श्रियेजात०पंचवर्तिसमायुक्तंवह्निनायोजितंमया ॥ गृहाणमंगलंदीपंविघ्नराजनमोस्तुते ॥ नीराजनं०॥कर्पूरदीपं० ॥ नाभ्याआसी० नमोस्त्वनंताय० नमस्कारः॥सप्तास्यासन्० यानिकानिच०प्रदक्षिणाः॥यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं० ॥ चंद्रपूजा॥दधिशंखतुषाराभंक्षीरोदार्णवसंभवं ॥ नमामिशशिनंसोमंशंभोर्मुकुटभू

गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदायक ॥ संकष्टंहरमेदेवगृहाणार्घ्यंनमोस्तुते ॥
षणं ॥ इतिमंत्रेणचंद्रमसेनमइतिवापूजयेत् ॥ क्षिप्रंप्रसादितोदेवगृहाणार्घ्यंनमोस्तुते ॥ अर्घ्यं० ॥
संकष्टहरगणेशायइदमर्घ्यं० ॥ कृष्णपक्षेचतुर्थ्यांतुपूजितोसिविधूदये ॥ क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाक
तिथीनामुत्तमेदेविगणेशप्रियवल्लभे ॥ सर्वसंकष्टनाशायचतुर्थ्यर्घ्यंनमोस्तुते ॥ अर्घ्यं० ॥ विप्रवर्यनमस्तुभ्यं
र ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ रोहिणीसहितचंद्रायनमःइदमर्घ्यं० ॥ वायनमंत्रः ॥ प्रार्थना० ॥
मोदकान्वैददाम्यहं ॥ मोदकान्सफलान्पंचदक्षिणाभिःसमन्वितान् ॥ आपदुद्धरणार्थायगृहाणद्विजसत्तम ॥ ॐ नमोहेरंबमदमोदितसंक
अशुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतं ॥ तत्सर्वंपूर्णतांयातुविप्ररूपगणेश्वर ॥ प्रतिमादानमंत्रः ॥ व्रतेनानेन
ष्टान्निवारयनिवारय इतिमूलमंत्रंएकविंशतिवारंजपेत् ॥ विसर्जनमंत्रः ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेत्वंगणेश्वर ॥ ॥ छ ॥
देवेशयथोक्तफलदोभव ॥ इतिसंकष्टीव्रतपूजासंपूर्णा ॥ ॥ छ ॥

॥३७॥ जन्माष्टमीपूजा ॥ प्रातःकृतनित्यक्रियःप्राङ्मुखोदेशादिसंकीर्त्यतत्तत्कालेसप्तम्यादिसत्त्वेपिप्रधानभूतामष्टमीमेव
संकीर्त्य श्रीकृष्णप्रीत्यर्थंजन्माष्टमीव्रतंकरिष्ये ॥ जयंतीयोगसत्त्वेजन्माष्टमीव्रतंजयंतीव्रतंचतंत्रेणकरिष्येइतिसंकल्पयेत् ॥
ताम्रपात्रेजलंगृहीत्वा॥वासुदेवंसमुद्दिश्यसर्वपापप्रशांतये ॥ उपवासंकरिष्यामिकृष्णाष्टम्यांनभस्यहं॥अशक्तौ फलानिभक्षयि
ष्यामीत्याद्यूहः॥आजन्ममरणंयावद्यन्मयादुष्कृतंकृतं॥तत्प्रणाशयगोविंदप्रसीदपुरुषोत्तमेतिपात्रस्थंजलंक्षिपेत् ॥ ततःसुवर्णर
जतादिमय्योमृन्मय्योवाभित्तिलिखितावाप्रतिमायथाकुलाचारंकार्याः॥यथा पर्यंकेप्रसुप्तदेवक्याःस्तनंपिबंतींश्रीकृष्णप्रतिमां

निधायजयंतीसत्त्वेत्वन्यदेवक्याउत्संगेद्वितीयांश्रीकृष्णमूर्तिंनिधायपर्यंकस्थदेवकीचरणसंवाहनपरांलक्ष्मींनिधाय भित्त्यादौ
खड्गधरंवसुदेवं नंदगोपीगोपान्लिखित्वाप्रदेशांतरेमंचकेप्रसूतकन्ययासहयशोदाप्रतिमां पीठांतरेवसुदेवदेवकीनंदयशोदाश्री
कृष्णरामचंडिकाइतिसप्तप्रतिमाःस्थापयेत्॥एतावत्प्रतिमाकरणाशक्तौवसुदेवादिचंडिकांताःसप्तवायथाचारंयथाशक्तिवाकृ
त्वाअन्याःसर्वायथायथंध्यायेदितिभाति॥ ॥निशीथासन्नप्राकालेस्नात्वाआचम्यप्राणानायम्यश्रीकृष्णप्रीत्यर्थंसपरिवारश्रीकृ
ष्णपूजांकरिष्यइतिसंकल्प्य न्यासान्कलशशंखादिपूजांतंनित्यवत्कृत्वाध्यायेत् ॥पर्यंकस्थांकिन्नराद्यैर्युतांध्यायेत्तुदेवकीं॥श्रीकृ
ष्णंबालकंध्यायेत्पर्यंकेस्तनपायिनं॥श्रीवत्सवक्षसंशांतंनीलोत्पलदलच्छविं॥संवाहयंतींदेवक्याःपादौध्यायेच्चतांश्रियं॥ एवंध्या
त्वा सहस्रशीर्षा०देवक्यैनमःइतिदेवकीमावाह्य मूलमंत्रेणश्रीकृष्णायनमःश्रीकृष्णमावाहयामीतिआवाह्य लक्ष्मींचावाह्य देव
क्यैवसुदेवाययशोदायैनंदायकृष्णायरामायचंडिकायैइतिनामभिरावाह्यलिखितादिदेवताःसकलपरिवारदेवताभ्योनमइत्या
वाह्य ( मूलमंत्रेणसूक्तर्चावा अत्रावाहितदेवक्यादिपरिवारदेवतासहितश्रीकृष्णायनमइत्यासनपाद्यार्घ्याचमनीयाभ्यंगस्नाना
निदत्वापंचामृतस्नानांतेचंदनेनानुलेपयेत्॥शुद्धोदकाभिषेकांतेवस्त्रयज्ञोपवीतगंधपुष्पाणिधूपदीपौच ॥ विश्वेश्वरायविश्वाय
तथाविश्वोद्भवायच॥विश्वस्यपतयेतुभ्यंगोविंदायनमोनमः ॥ यज्ञेश्वरायदेवायतथायज्ञोद्भवायच॥ यज्ञानांपतयेनाथगोविंदा
यनमोनमः॥ इतिमंत्राभ्यांमूलमंत्रादिसमुच्चिताभ्यांदद्यात्॥जगन्नाथनमस्तुभ्यंसंसारभयनाशन ॥ जगदीश्वरायदेवायभूतो
नांपतयेनमः ॥ इतिनैवेद्यं ॥ मूलमंत्रादिकंसर्वत्रयोज्यं ॥ तांबूलादिनमस्कारप्रदक्षिणापुष्पांजल्यंतंकार्यं ॥ ) अथवोद्यापनप्र

करणोक्तविधिनापूजा ॥ सायथा ॥ उक्तप्रकारेणध्यानावाहनेकृत्वा ॥ पुरुषएवेदं० ॥देवाब्रह्मादयोयेचस्वरूपंनविदुस्तव॥ अत
स्त्वांपूजयिष्यामिमातुरुत्संगवासिनं ॥ आसनं ॥एतावानस्य० ॥ अवतारसहस्राणिकरोषिमधुसूदन ॥ नतेसंख्यावताराणांक
श्चिज्जानातितत्त्वतः ॥ पाद्यं ॥ त्रिपादूर्ध्व० ॥जातःकंसवधार्थायभूभारोत्तारणायच ॥ देवानांचहितार्थायधर्मसंस्थापनायच ॥
कौरवाणांविनाशायपांडवानांहितायच ॥ गृहाणार्घ्यमयादत्तंदेवक्यासहितोहरे ॥ अर्घ्यं ॥ तस्माद्विरा० ॥ सुरासुरनरेशायक्षी
राब्धिशयनायच ॥ कृष्णायवासुदेवायददाम्याचमनंशुभं ॥ आचमनीयं॥यत्पुरुषेण० ॥नारायणनमस्तेस्तुनरकार्णवतारक ॥
गंगोदकंसमानीतंस्नानार्थंप्रतिगृह्यतां ॥ स्नानं ॥ आप्यायेत्यादिमंत्रैः॥पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमं॥तृप्त्यर्थंदेवदेवेशगृ
ह्यतांदेवकीसुत ॥ पंचामृतं शुद्धोदकस्नानं महाभिषेकः आचमनं॥तंयज्ञं० ॥ क्षौमंचपट्टसूत्राद्यंमयानीतांशुकंशुभं ॥ गृह्यतां
देवदेवेशमयादत्तंसुरोत्तम ॥ वस्त्रं ॥ तस्माद्यज्ञा० ॥नमःकृष्णायदेवायशंखचक्रधरायच ॥ ब्रह्मसूत्रंजगन्नाथगृहाणपरमेश्वर ॥
यज्ञोपवीतं॥तस्माद्यज्ञा० ॥नानागंधसमायुक्तंचंदनंचारुचर्चितं॥कुंकुमाक्ताक्षतैर्युक्तंगृह्यतांपरमेश्वर ॥ गंधं ॥ तस्मादश्वा० ॥
पुष्पाणियानिदिव्यानिपारिजातोद्भवानिच ॥ मालतीकेसरादीनिपूजार्थंप्रतिगृह्यतां ॥ पुष्पाणि ॥ अथांगपूजा ॥ श्रीकृष्णा
यनमःपादौपूजयामि ॥ संकर्षणायनमःगुल्फौपू० ॥ कालात्मनेनमः जानुनीपू० ॥ विश्वकर्मणेन० जंघेपू० ॥ विश्वनेत्राय०
कटिंपू० ॥विश्वकर्त्रेन० मेढ्रंपू० ॥पद्मनाभायनमःनाभिंपू० ॥ परमात्मनेन० हृदयंपू० ॥ श्रीकंठायनमः कंठंपू० ॥सर्वास्त्रधारिणे
न० बाहूपू० ॥ वाचस्पतयेन० मुखंपू० ॥ केशवायन० ललाटंपू० ॥ सर्वात्मनेन० शिरःपू० ॥ विश्वरूपिणेनारायणायनमः

सर्वांगंपूजयामि ॥ सहस्रतुलसी ॥ यत्पुरुषं० वनस्पतिरसो० धूपं ॥ ब्राह्मणो०॥त्वंज्योतिःसर्वदेवानांतेजस्त्वंतेजसांपरं ॥ आत्मज्योतिर्नमस्तुभ्यंदीपोयंप्रतिगृह्यतां॥दीपं॥चंद्रमा०॥ नानागंधसमायुक्तंभक्ष्यभोज्यंचतुर्विधं॥नैवेद्यार्थंमयादत्तंगृहाणपरमेश्वर॥नैवेद्यं ॥ आचमनं करोद्वर्तनं॥तांबूलंचसकर्पूरंपूगीफलसमन्वितं॥मुखवासकरंरम्यंप्रीत्यर्थंप्रतिगृह्यतां ॥ तांबूलं ॥ सौवर्णराजतंताम्रंनानारत्नसमन्वितं ॥ कर्मसाद्गुण्यसिद्ध्यर्थंदक्षिणांप्रतिगृह्यतां ॥ दक्षिणां॥रंभाफलंनारिकेलंतथैवाम्रफलानिच ॥ पूजितोसिसुरश्रेष्ठगृह्यतांकंससूदन ॥ फलानि० ॥ श्रियेजात० नीराजनं० ॥ कर्पूरदीपं० ॥ नाभ्याआसी० नमोस्त्वनंताय० नमस्कारः ॥ सप्तास्या० यानिका० प्रदक्षिणाः ॥ यज्ञेन०इत्यादिवेदमंत्रैःपुष्पांजलिं० ॥ अपराधसहस्राणि० पूजांनिवेदयेत् ॥ सर्वोपचारपूजनसमाप्तौद्वादशांगुलविस्तारंरौप्यमयंस्थंडिलादिलिखितंवारोहिणीयुतंचंद्रं॥ सोमेश्वरायसोमायतथासोमोद्भवायच ॥ सोमस्यपतयेनित्यंतुभ्यंसोमायवैनमः॥इतिसंपूज्य ॥ सपुष्पकुशचंदनतोयंशंखेनादाय ॥ क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंशशांकेशरोहिणीसहितोमम ॥ ज्योत्स्नापतेनमस्तुभ्यंज्योतिषांपतयेनमः ॥ नमस्तेरोहिणीकांतअर्घ्यंनःप्रतिगृह्यतां ॥ इतिमंत्राभ्यांचंद्रायार्घ्यंदद्यात् ॥ ततःश्रीकृष्णायार्घ्यंदद्यात् ॥ तत्रमंत्रः ॥ जातःकंसवधार्थायभूभारोत्तारणायच ॥ पांडवानांहितार्थायधर्मसंस्थापनायच ॥ कौरवाणांविनाशायदैत्यानांनिधनायच ॥ गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे ॥ श्रीकृष्णायइदमर्घ्यं० ॥ ततःप्रार्थयेत् ॥ त्राहिमांसर्वलोकेशहरेसंसारसागरात् ॥ त्राहिमांसर्वपापघ्नदुःखशोकार्णवात्प्रभो ॥ सर्वलोकेश्वरत्राहिपतितंमांभवार्णवे ॥ त्राहिमांसर्वदुःखघ्नरोगशोकार्णवाद्धरे ॥ दुर्गतांस्त्रायसेविष्णोयेस्मरंतिसकृत्सकृ

तत्पुण्यंवृद्धिमायातुपापंदहहलायुधेति ॥ छ ॥

त् ॥ त्राहिमांदेवदेवेशत्वत्तोनान्योस्तिरक्षिता ॥ यद्वाकचनकौमारेयौवनेयच्चवार्धके ॥ ॥ छ ॥ ॥ छ ॥

प्रार्थयेत् ॥ इतिश्रीकृष्णपूजासमाप्ता ॥ ॥ छ ॥ मिमअमुककामनासिद्ध्यर्थंशैवाग

॥ ३८ ॥ अथप्रदोषपूजा ॥ अद्येत्यादिपूर्वोक्तएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममअमुककामनासिद्ध्यर्थंशैवाग

मोक्तप्रकारेणयथासंभवमिलितैर्द्रव्यैःशिवपूजनमहंकरिष्ये ॥ तदंगशरीरशुद्ध्यर्थंभूशुद्ध्यादिसर्वकर्मकरिष्येइतिसंकल्प्यन्यासा

दिकलशाद्यर्चनंचकृत्वाततःद्वारपूजांकुर्यात् ॥ यावन्नदीयतेचार्घ्यंभास्करायमहात्मने ॥ तावन्नपूजयेद्विष्णुंशिवंवापिकदा

चन ॥ पूर्वद्वारेवामपार्श्वयोःक्रमात् मायाशक्त्यैनमः चिच्छक्त्यै० द्वारश्रियै० वास्तुपुरुषाय० ॥ दक्षिणद्वारे गंगायै०

यमुनायै० द्वारश्रियै० वास्तुपुरुषाय० ॥ पश्चिमद्वारे धात्र्यै० विधात्र्यै० द्वारश्रियै० वास्तुपुरुषाय० ॥ उत्तरद्वारे शंख

निधये० पद्मनिधये० द्वारश्रियै० वास्तुपुरुषाय० ॥ पुनर्द्वारेदक्षिणवामपार्श्वयोः गणेश्वराय० नंदिने० महाकालाय०॥द

क्षिणद्वारे दक्षिणवामपार्श्वयोः भृंगिरिटिने० स्कंदाय० ॥ उत्तरद्वारे दक्षिणवामपार्श्वयोः उमायै० चंडीश्वराय० ॥

पुरतःपूर्वदिशि गुंगुरुभ्योनमः पंपरमगुरुभ्यो० पंपरमेष्ठीगुरुभ्यो० परावरगुरुभ्यो० परावरपादुकाभ्यो० ॥ ततः

पुष्पाक्षतादिभिःपीठपूजांकुर्यात् ॥ दक्षिणेमातापितृभ्यां० उपमन्यवे० नारदाय० सनकादिभ्यो० गुरुभ्यो० ॥ वामभा

गे गंगणपतये० दुंदुर्गायै० क्षंक्षेत्रपालाय० संसरस्वत्यै० मध्येपाशांकुशवरदाभयहस्तरक्तवर्णाधारशक्त्यै० तदुपरिहेमवर्णम

हाकालाय० महाकूर्माय० तदुपरिसहस्रशिरसेश्वेतवर्णायनीलांबरधरायअनंताय० तदुपरिनीलवर्णायशंखचक्रगदाधरायपर

शुहस्तायसर्वाभरणभूषितायसपरिवारायश्रीवराहाय०तद्दंष्ट्रोपरिपृथ्वीमंडलाधिदेवतायैश्रीह्यंकुशवरदाभयहस्तायैपृथिव्यै०अमृतारण्याय० श्वेतद्वीपाय० नंदनोद्यानाय० रत्नमंडपाय० कल्पवृक्षाय०स्वर्णरचितरत्नखचितदिव्यसिंहासनाय०आग्नेयकोणेरक्तवर्णवृषभाकारायधर्माय०नैर्ऋत्येश्यामवर्णसिंहाकारायज्ञानाय० वायव्येपीतवर्णभूताकारायवैराग्याय०ईशान्येकृष्णवर्णगजाकारायऐश्वर्याय० पूर्वेअधर्माय० दक्षिणेअज्ञानाय० पश्चिमेअवैराग्याय० उत्तरेअनैश्वर्याय० मध्ये संसत्वाय० रंरजसे० तंतमसे० मंमायायै० विंविद्यायै० अव्यक्तचित्तकंदाय० बुद्धिनालाय० अहंकारवर्णपद्माय० अंअर्कमंडलाय० सोंसोममंडलाय०वंवह्निमंडलाय०अंआत्मने० उंअंतरात्मने० पंपरमात्मने० अंज्ञानात्मने० ॥ अथपूर्वे वामायै० आग्नेये ज्येष्ठायै० दक्षिणे रौद्रायै० नैर्ऋत्ये कालायै० पश्चिमे कलविकरणायै० वायव्ये वलविकरणायै० उत्तरे वलायै० ईशान्यां वलप्रमथिन्यै०मध्येसर्वभूतदमनायै० मनोन्मनायै० ॐनमोभगवतेसकलगुणात्मनेशक्तियुक्तायानंताययोगपीठात्मनेसदाशिवायसांगायसपरिवारायनमः॥स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं॥तावत्त्वंप्रीतिभावेनलिंगेस्मिन्संनिधोभव ॥ भवानीशंकरंसांगं सपरिवारंसवाहनंसशक्तिकंपुत्रपरिवारसमेतंभूर्भुवःस्वःआवाहयामि॥ आवाहनीमुद्रया आवाहितोभव॥ स्थापनीमुद्रया स्थापितोभव॥ सन्निधापनीमुद्रया संनिहितोभव ॥ संनिरोधिनीमुद्रया संनिरुद्धोभव॥ संमुखीमुद्रयासंमुखोभव ॥ प्रसादमुद्रया प्रसन्नोभव॥नमःशंभवेइतिमंत्रस्यपरमेष्ठीऋषिःश्रीमहारुद्रोदेवता गायत्रीछंदः ब्रह्मावीजं मायाशक्तिः ॐ कारोवीजं सुषुम्नाशक्तिःब्रह्मावीजं सरस्वतीशक्तिः नमःशिवायेइतिवीजं शिवतरायेतिशक्तिः॥भवानीशंकरन्यासेपूजायांचविनियोगः॥ॐनमः

शिरसि ॥ शंभवेच ललाटे ॥ मयः नेत्रयोः ॥ भवेच श्रोत्रयोः ॥ नमः नासिकायां ॥ शंकरायच ग्रीवायां ॥ मयः जठरे ॥ कराயच नाभौ ॥ नमः कट्यां ॥ शिवायच ऊर्वोः ॥ शिवतरायच पादयोः ॥ नमःशंभवेच अंगुष्ठाभ्यां० ॥ मयोभवेच तर्जनीभ्यां० ॥नमःशंकरायच मध्यमाभ्यां० ॥ मयस्करायच अनामिकाभ्यां० ॥ नमःशिवायच कनिष्ठिकाभ्यां० ॥ शिवतरायच करतल करपृष्ठाभ्यां० ॥ नमःशंभवेचहृदयाय० ॥ मयोभवेचशिरसेस्वाहा॥नमःशिवायच शिखायैवषट्॥मयस्करायच कवचायहुं ॥ नमःशिवायच नेत्रत्रयायवौषट्॥शिवतरायच अस्त्रायफट् ॥ उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् ॥ वामांगुलीदक्षिणाभिरंगुलीभिश्चवेष्टयेत्॥लिंगमुद्रासमाख्याताशिवसांनिध्यकारिणी॥एपतइत्यस्यवसिष्ठोरुद्रोजगती॥हृदिमुद्राप्रदर्शनेविनियोगः॥ एषतेरुद्रभागः०हृदिमुद्रांप्रदर्शयेत्॥हृदयेसर्वकामार्चनांभौज्ञानंप्रदर्शयेत्॥अथध्यानं ॥ नवशक्तिवनेरम्येध्यायेद्देवमुमापतिं ॥ चंद्रकोटिप्रतीकाशंत्रिनेत्रंचंद्रभूषणं॥आपिंगलजटाजूटंरत्नमौलिविराजितं॥नीलग्रीवमुदारांगंनानाहारोपशोभितं॥वरदाभयहस्तंचहरिणंचपरश्वधं॥दधानंनागवलयंकेयूरांगदभूषणं॥व्याघ्रचर्मपरीधानंरत्नसिंहासनस्थितं ॥ ध्यात्वातद्वामभागेचगिरिजांभक्तवत्सलां ॥ भास्वज्जपाप्रसूनाभामुदयार्कसमप्रभां॥ विद्युत्पुंजनिभांतन्वींमनोनयननंदिनीं ॥ बालेंदुशेखरांस्निग्धांनीलकुंचितकुंतलां ॥ भृंगसंघातरुचिरनीलालकविराजितां ॥ मणिकुंडलविद्योतमुखमंडलविभ्रमां ॥ नवकुंकुमसंकाशकपोलतलतर्पणां ॥ मधुरस्मितविभ्राजदरुणाधरपल्लवां ॥ कंबुकंठींशिवामुद्यत्कुचपंकजकुड्मलां ॥ पाशांकुशभयाभीष्टैर्विलसंतींचतुर्भुजां ॥ अनेकरत्नविलसत्कंकणांगदमुद्रिकां ॥ वलित्रयेणविलसद्धेमकांचीगुणान्विताम् ॥ रत्नमाल्यांबरधरांदिव्यसिंहा

सनस्थितां ॥ दिक्पालवनितामौलिसंनद्धांघ्रिसरोरुहां ॥ रत्नसिंहासनारूढांसर्पराजपरिच्छदां ॥ एवंध्यात्वामहादेवंदेवींचगिरिकन्यकां ॥ कृतांजलिपुटोभूत्वाचिंतयेहृदिशंकरं ॥ ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये ॥ अशेषाघविनाशायप्रसीदमशंकर ॥ दुःखशोकाग्निसंतप्तंसंसारभयपीडितं॥महारोगाकुलंदीनंत्राहिमांवृषवाहन ॥ ध्यानं ॥ सहस्रशीर्षा० ॥ आगच्छदेवदेवेशमहादेवमहेश्वर ॥ गृहाणसहपार्वत्यातवपूजांमयाकृतां ॥ भवानीशंकरंसांगंसायुधंसवाहनंसपरिवारंसशक्तिकंपुत्रपरिवारसमेतंभूर्भुवःस्वःआवाहयामि॥ पुरुषएवेदं० ॥ दर्भाणाविष्टरेणैवमयादत्तेनवैप्रभो ॥ आसनंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ ॐनमस्तारायच ॥ श्रीसांवसदाशिवाय० ॥ आसनं० ॥ एतावानस्य० ॥ मयादत्तंहितेपाद्यंगंधपुष्पाक्षतोदकैः ॥ गृहाणदेवदेवेशप्रसन्नोभवसर्वदा ॥ नमःशंभवेचमयोभवेच श्रीसांव० ॥ पाद्यं० ॥ त्रिपादूर्ध्व० ॥ अर्घ्योसीतिह्युमाकांतअर्घ्यमानेनवैप्रभो ॥ गृहाणत्वंमयादत्तंममसिद्धिप्रदोभव ॥ नमःशंकरायचमयस्करायच श्रीसांव० ॥ अर्घ्यं० ॥ तस्माद्विराळजायत० ॥ दत्तमाचमनीयार्थंमयाविश्वेश्वरप्रभो ॥ गृहाणपरमेशानतुष्टोभवममाव्ययै॥नमःशिवायचशिवतरायच श्रीभवानीशंक०॥ आचमनीयं ॥ ॐयत्पुरुषेण० ॥ नमोस्तुसर्वलोकेशउमादेहार्धधारिणे ॥ मधुपर्कोमयादत्तोगृहाणजगदीश्वर ॥ नमस्तीर्थ्यायचकूल्यायच भवानी० ॥ मधुपर्कस्नानं० ॥ पंचामृतेनस्नपयिष्ये ॥ आप्यायस्वगोतमःसोमोगायत्री पयःस्नापने० ॥ आप्यायस्व० ॥ पयःस्नानं० ॥ शुद्धोदक० ॥ ज्येष्ठाय० वस्त्रं० श्रेष्ठाय० आचमनीयं० रुद्राय० यज्ञोपवीतं० कालाय० आचमनीयं० कलविकरणाय० चंदनं० वलविकरणाय० अक्षतान्० वलाय० पुष्पं० बलप्रमथनाय० धूपं सर्वभूतदमनाय० दीपं

मनोन्मनाय० नैवेद्यं० रुद्राय० तांबूलं० महेश्वराय० फलं० सदाशिवाय० दक्षिणां० सद्योजातमितिमंत्रपुष्पांजलिं० ॥
नमस्करोमि॥आवाहनंन० ॥ एतेनअत्रगंधपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणाभिःकृतपयःस्नानांगपूजनेनभगवान्श्रीसांब
सदाशिवःप्रीयतां॥ निर्माल्यंविसृस्य ॥ दध्नास्नपयिष्ये ॥ दधिक्राव्णोवामदेवोदधिक्रावानुष्टुप् दधिस्नापने०॥ ॐ दधिक्रा
व्णों० ॥ दध्नाचैवमहादेवस्नपनंक्रियतेमया॥गृहाणत्वंसुराधीशसुप्रसन्नोभवाव्यय ॥ श्रीभवा० ॥ दधिस्नानं०शुद्धोदकस्ना
नं०॥आचम० शेषंपूर्ववत् ॥ वामदेवायेतिमंत्रपुष्पं० अनेनदधिस्नानेनभगवान्श्रीसांबसदाशिवःप्रीयतां ॥ निर्माल्यंवि० ॥
घृतेनस्नपयिष्ये ॥ घृतंमिमिक्षेगृत्समदोलिंगोक्तादेवतात्रिष्टुप् घृतस्नापने० ॥ ॐ घृतंमिमिक्षे० ॥ सर्पिषाचमहारुद्रस्नापनंक्रि
यतेधुना ॥ गृहाणश्रद्धयादत्तंतवप्रीत्यर्थमेवच ॥ घृतस्नानं० शुद्धोदकस्नानं० आचम० अघोरेभ्यो० मंत्रपुष्पं ॥ अनेनघृ
तस्नानेनभगवान्श्रीसांबसदा० ॥ निर्माल्यंवि० ॥ मधुनास्नपयिष्ये ॥ मधुवाताइत्यस्यराहूगणोगोतमःसोमोगायत्री ॥
मधुस्नापने ॥ ॐ मधुवाता० ॥ इदंमधुमयादत्तंतवपुष्ट्यर्थमेवच ॥ गृहाणदेवदेवेशततःशांतिंप्रयच्छमे ॥ मधुस्ना० शुद्धो
दकस्नानं० आचम० ॐ तत्पुरुषायविद्महे० मंत्रपुष्पं० ॥ अनेनमधुस्नानेनभगवान्श्रीसांबसदाशिवःप्रीयतां ॥ शर्करा०
स्वादुःपवस्वेत्यस्यभार्गवःपवमानःसोमस्त्रिष्टुप् ॥शर्करास्नापने० ॐ स्वादुःपवस्व० ॥ सितयादेवदेवेशस्नापनंक्रियतेयतः ॥
ततःसंतुष्टिमापन्नःप्रसन्नोवरदोभव॥शर्करास्नानं० शुद्धो० आचम० ईशानःसर्व० मंत्रपुष्पं० अनेनपंचामृतस्नानेनभग०॥
गंधोदकस्नप० ॥ गंधद्वारामित्यस्यानंदकर्दमःश्रीरनुष्टुप्॥ गंधोदकस्ना० ॐ गंधद्वारां० ॥ गंधोदकेनदेवेशस्नापयामिजगत्प्र

भो ॥ कुशपुष्पफलैरत्नैर्गृहाणजगदीश्वर ॥ कृष्णागरुप्रचुरकर्दमगंधसारकस्तूरिकामलयचर्चितरोचनाद्यैः ॥ सत्केशरैश्चरुचिरैश्चसुशीतलैश्चभक्त्यानिरंतरमहंस्नपयामिशंभो ॥ गंधोदकस्नानं० ॥ शरासइत्यस्यागस्त्योप्तृणसूर्याअनुष्टुप् ॥ कुशोदकस्नाने० ॐ शरासः०॥ गोधूमगुंद्रकुशमुंजउशीरदूर्वाकाशोयवास्तुलसिमंजरिविल्वखंडाः ॥ मंदारबल्वजशरांकुरधान्यकेनभक्त्यानिरंतरमहंस्नपयामिशंभो ॥ कुशोदकस्नानं० ॥ आयनेतेद्रोणआत्रेयोनुष्टुप् ॥ पुष्पोदकस्ना० ॥ ॐ आयनेते० ॥ कोदंडखंडितपुरत्रितयायरोषाच्चूर्णीकृतासमशरायललाटवक्रे॥स्तुत्यासुरादिभिरजस्रमतिस्तुतायस्नानायतेस्तुसुरभीकृतपुष्पतोयं॥पुष्पोद० ॥ याःफलिनीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप्॥फलोदकस्ना० ॥ ॐयाःफलिनी० ॥ खर्जूरजंबुकदलीपनसाम्रपक्वपूगीकपित्थवदरीजमुदुंवराणि ॥ धात्रीफलानिरुचिराणिमनोहराणिभक्त्यानिरंतरमहंस्नपयामिशंभो ॥ फलोदकस्ना० ॥ सहिरत्नानीत्यस्यश्यावाश्वःसवितानुष्टुप् ॥ रत्नोदकस्ना० सहिरत्ना० ॥ रत्नोदकैर्मणिगणैरुदितार्कविंवतुल्यैःसमानविमलैर्गुणमौक्तिकानि ॥ वज्रप्रवालमणिरंजितनीलकाद्यैर्भक्त्यानिरंतरमहंस्नपयामिशंभो ॥ रत्नोदकस्नानं० ॥ मानस्तोकइत्यस्यकुत्सोरुद्रोजगती॥विभूतिस्नापनेवि० ॥ ॐ मानस्तोके० ॥ भस्मोदकस्नानं० तर्पयामिकृपालोत्वांश्रद्धयापार्वतीपते ॥ तुष्टप्रयच्छदययाममशांतिंजगद्गुरो ॥ भवायदेवाय० शर्वायदेवाय० ईशानायदेवा० पशुपतयेदेवा० रुद्रायदेवा० उग्रायदेवा० भीमायदेवा० महतेदेवा० ॥ भवस्यदेवस्यपत्न्यै० शर्वस्यदेवस्यप० ईशानस्यदेवस्यप० पशुपतेर्देवस्यप० रुद्रस्यदेवस्यप० उग्रस्यदेवस्यप० भीमस्यदेवस्यप० महतोदेवस्यप० ॥ भवंदेवंतर्पयामि शर्वंदेवंत० ईशानंदेवंत० पशुपतिंदेवंत० रुद्रंदेवंतत० उग्रंदेवंत० भीमंदेवंत०

महांतंदेवं० ॥ भवस्यदेवस्यपत्नीं० शर्वस्यदेवस्यपत्नीं० ईशानस्यदेवस्यप० पशुपतेर्देवस्यप० रुद्रस्यदेवस्यप० उग्रस्यदेवस्यप०
महतोदेवस्यपत्नींतर्पयामीतितर्पणंकृत्वा॥ततः ज्येष्ठाय० स्नानं श्रेष्ठाय० आचम० रुद्राय० यज्ञोप० कालाय० आचम० कल
विकरणाय० चंदनं० वलविकरणाय० अक्षतान्० वलाय० पुष्पं० वलप्रमथनाय० धूपं सर्वभूतदमनाय० दीपं मनोन्म
नाय० नैवेद्यं० शिवाय० तांवूलं०महादेवाय०दक्षिणां० ॥ अथनामपूजा ॥ भवायदेवाय०शर्वायदे० ईशानायदे० पशुपत
येदेवा० रुद्रायदे०उग्रायदे०भीमायदे० महतेदे० ॥ सद्योजातमितिपंचमंत्रैःपुष्पांजलिं० ॥ अनेनपंचामृताभिषेकांगपूर्वारा
धनेनभगवान्श्रीसांवसदाशिवःप्रीयतां ॥ निर्माल्यंविसृज्यरुद्राध्यायादिनामहाभिषेकंकुर्यात्॥स्नानंस०॥आचम०॥तदस्तु०
गृहावै० ॥ देवंपीठोपरिप्रतिष्ठाप्य ॥ ॐतंयज्ञं० ॥ एतद्वासोमयादत्तंसोत्तरीयंसुशोभितं ॥ गृहाणत्वंमहादेवममसिद्धिप्रदो
भव ॥ भवानीशंकराय० वस्त्रं आच० ॥ ॐतस्माद्यज्ञात्० ॥ यज्ञोपवीतंसौवर्णमयादत्तंहिशंकर ॥ गृहाणपरयाभक्त्यासं
तुष्टोभवसर्वदा ॥ यज्ञोप० ॥ आचमनीयं॥ ॐतस्माद्यज्ञात्सर्वहुतऋचः० ॥ अर्चयामिजगन्नाथसुरासुरनमस्कृत ॥ त्रिनेत्रदे
वदेवेशत्रयीमयनमोस्तुते ॥ नमःसोभ्यायचप्रतिसर्यायच ॥ भवानीशंकरायचंदनं० ॥ अक्षतान्धवलाञ्छुभ्रान्कर्पूरागरुमि
श्रितान्॥ गृहाणपरयाभक्त्यामयातुभ्यंसमर्पितान् ॥ नमःप्रतरणायचो० ॥ भवानीशंकरायअक्षतान्॥ हिरण्यरूपःसहि० ॥
गृहाणनानाभरणानिशंभोमहेशजांवूनदनिर्मितानि ॥ ललाटकंठोत्तमकर्णहस्तनितंवहस्तांगुलिभूषणानि ॥ नानाभरणानि ॥
ॐतस्मादश्वाअजायंत० ॥ कृपयादेवदेवेशतवप्रीत्यर्थमेवच॥ गृहाणतुभ्यंपुष्पाणिमयानीतानिभोमृड ॥ नमआतायायचाला

घायच ॥ भवानीशंकराय ॥ पुष्पाणि ॥ अत्रशिवसहस्रनामभिःशिवाष्टोत्तरशतेनवाविल्वदलार्पणं ॥ त्रिदलंत्रिगुणाकारंत्रिने
त्रंचत्रियायुधं ॥ त्रिजन्मपापसंहारमेकविल्वंशिवार्पणं ॥ अथांगपूजा ॥ दक्षिणपादेअघोरायनमः ॥ वामपादेपशुपतयेन० ॥
दक्षिणजानौशिवाय० ॥ वामजानौबहुरूपाय० ॥ दक्षिणकट्यांविरूपाक्षाय० ॥ वामकट्यांत्र्यंबकाय० ॥ दक्षिणहस्तेकपर्दि
ने० ॥ वामहस्तेभैरवाय० ॥ दक्षिणभुजेशूलपाणये ॥ वामभुजेईशानाय० ॥ मूर्ध्निशिवशक्त्यै० ॥ वामपादेभगवत्यै० ॥
दक्षिणपादेउमायै० ॥ वामजानुनिशांकर्यै० ॥ दक्षिणजानुनिपार्वत्यै० ॥ वामकट्यांकाल्यै० ॥ दक्षिणकट्यांकुमार्यै० ॥ वाम
हस्तेकालिन्यै० ॥ दक्षिणहस्तेकोट्यै० ॥ वामभुजेविश्वंभर्यै० ॥ दक्षिणभुजेगंगायै० ॥ मूर्ध्निशिवशक्त्यै० ॥ ॥ अथपंचव
क्त्रपूजा ॥ सद्योजातमित्यस्यहरोभर्गोनुष्टुप्पूर्ववक्त्रपूजनेविनियोगः ॥ ॐसद्योजातं० ॥ संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्धितेजो
रुणंवालेंदुद्युतिमिश्रितोग्रदशनप्रोद्भासिताम्राधरं ॥ अर्धेंदुद्युतिमौलिपिंगलजटाभास्वत्प्रबद्धोरगंवंदेसिद्धसुरासुरेंद्रनमितंपूर्वंमु
खंशूलिनः ॥ सद्योजातायनमःपूर्ववक्त्रंपूजयामि ॥ वामदेवायेत्यस्यवामदेवोभर्गोनुष्टुप्दक्षिणवक्त्रपूजनेवि० ॥ वामदेवायनमो० ॥
कालाभ्रभ्रमरांजनद्युतिनिभंव्यावृत्तपिंगेक्षणंगंभीरच्छविमिश्रितोग्रदशनप्रोद्भासिदंष्ट्रांकुरं। सर्पप्रोतकपालशुक्तिशकलैर्व्याकी
र्णमाशेखरंवंदेदक्षिणमीश्वरस्यकुटिलभ्रूभंगरौद्रंमुखं ॥ वामदेवायनमःदक्षिणवक्त्रंपूजयामि। अघोरेत्यस्याघोरोभर्गोनुष्टुप्पश्चिम
वक्त्रपूजनेवि० ॥ अघोरेभ्यो० ॥ प्रालेयामलविंदुकुंदधवलंगोक्षीरफेनप्रभंभस्माभ्यंगमनंगदेहदहनज्वालावलीलोचनं ॥ ब्रह्मे
द्रादिमरुद्गणैःस्तुतिपरैरभ्यर्चितंभोगिभिर्वंदेहंसकलंकलंकरहितंस्थाणोर्मुखंपश्चिमं ॥ अघोराय० पश्चिमवक्त्रं० ॥ तत्पुरुषायेत्य

स्यपुरुषआपोगायत्री ॥ उत्तरवक्रपू० ॥ तत्पुरुषाय० ॥ गौरंकुंकुमपिंजरंसुतिलकंचापांडुगंडस्थलंभ्रूविक्षेपकटाक्षवीक्षणलसत्सं
सक्तकर्णोत्पलं ॥ स्निग्धंबिंबफलाधरंप्रहसितंनीलालकालंकृतंवंदेपूर्णशशांकमंडलनिभंवक्रंहरस्योत्तरं ॥ तत्पुरुषाय०उत्तरवक्रं
पू०॥ईशानइत्यस्यईशानोभुरिगनुष्टुप् ॥ ऊर्ध्ववक्रपूजनेवि० ॥ ईशानःसर्व० ॥ व्यक्ताव्यक्तगुणोत्तरंचवरदंषट्त्रिंशतत्त्वाधिकं
तस्मादुज्ज्वलतत्त्वमक्षरमदोध्येयंसदायोगिभिः ॥वंदेतामसवर्जितेनमनसासूक्ष्मातिसूक्ष्मंपरंशांतंपंचममीश्वरस्यवदनंसंशोभिते
जोमयं॥ईशानाय०ऊर्ध्ववक्रं०॥कद्रुद्रायेत्यस्यघौरःकण्वोरुद्रोगायत्री ॥ पातालवक्रपू० ॥कद्रुद्राय० ॥ यद्देवासुरपूजितारुणनि
भैःसामर्त्यतारागणैःपुंनागांबुजनागपुष्पवकुलस्रग्भिःसुरैरर्चितं ॥ नित्यंध्यानसहस्रदीप्तिकरणंकालाग्निरुद्रोपमंतत्संहारकरंन
मामिसततंपातालषष्ठंमुखं ॥ कालाग्निरु० पातालवक्रंपू० ॥ ॥ अथावरणपूजा ॥ पूर्वभागेनिवृत्त्यै० दक्षिणेप्रतिष्ठायै० पश्चि
मेविद्यायै० उत्तरेशांत्यै० मध्येशांतिदायै० ॥दयाब्धेत्राहिसंसारसर्पान्मांशरणागतं॥ भक्त्यानिवेदयेत्वाहंसगर्भावरणार्चनं ॥
गर्भाद्यावरणसहितायश्रीसांवसदाशिवायकर्पूरगौरायनमःगर्भावरणपुष्पांजलिंस० ॥ पूर्वेनंदिनेन० आग्नेय्यांकालाय० दक्षि
णेवराहाय० नैर्ऋत्यांवृषभाय० पश्चिमेभृंगिरिटिने० वायव्यांस्कंदाय० उत्तरस्यांउमायै० ईशान्यांचंडीश्वराय० ॥ दयाब्धेत्रा
हीसंसारसर्पान्मांशरणागतं ॥ भक्त्यानिवेदयेत्वाहंप्रथमावरणार्चनं ॥ नंदाद्यावरणसहितायश्रीसांवसदाशिवायकर्पूरगौराय
प्रथमावरणपुष्पांजलिं०॥विदेशाय०सूक्ष्मेशाय० वित्तेशाय० एकरुद्राय० एकनेत्राय० त्रिमूर्तये० श्रीकंठेशाय०शिखंडिने०
वामायै० ज्येष्ठायै० रुद्रायै० कालायै० कलविकरणायै० वलविकरणायै० वलायै० वलप्रमथनायै०मनोन्मायै०॥ दयाब्धे०

द्वितीयावरणार्चनं॥ विदेशाद्यावरणसहितायश्रीसांबसदाशिवायकर्पूरगौराय० द्वितीयावरणपुष्पा० ॥अणिमायै० महिमायै०
गरिमायै० लघिमायै० प्राप्त्यै० प्राकाम्यायै० ईशितायै० वशितायै० ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इं
द्राण्यै० चामुंडायै० चंडिकायै० असितांगभैरवाय० रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय०उन्मत्तभैरवाय० कपालभै
रवाय० भीषणभैरवाय० संहारभैरवाय०॥दयाब्धेत्राहि० भक्त्यानिवेदयेतुभ्यंतृ० ॥ अणिमाद्यावरणसहितायश्रीसांबसदा
शिवायकर्पूरगौराय० तृतीयावरणपुष्पांजलिं० ॥ भवाय० शर्वाय० रुद्राय० पशुपतये० उग्राय० महते० भीमाय० ईशा
नाय० अनंताय० वासुकये० शंखाय० पद्माय० त्र्यंबकाय० कर्कोटकाय० अश्वतराय० धृतराष्ट्राय० पृथवे० हैहयाय०
अर्जुनाय० शाकुंतलेयाय० भरताय० नलाय० रामाय० कुलाचलाय० हिमाचलाय० उदयाचलाय० अस्ताचलाय० हेम
कूटाय० मलयाचलाय० विंध्याचलाय० कनकाचलाय० ॥ दयाब्धे० भक्त्यानिवेदयेत्वाहंचतुर्थी० ॥ भवाद्यावरणसहिता
य० चतुर्थावरणं० ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० ब्रह्मणे० अनंताय०
इंद्राण्यै० स्वाहायै० यमपत्न्यै० नैर्ऋत्यै० वारुण्यै० वायव्यै० कुबेरप्रियायै० रुद्राण्यै० वज्राय० शक्त्यै० दंडाय० खड्गा
य० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० गजाय० मेषाय० महिषाय० शिवायै० मकराय० मृगाय०नराय०वृषभा
य० ऐरावताय० पुंडरीकाय० वामनाय० कुमुदाय० अंजनाय० पुष्पदंताय० सार्वभौमाय० सुप्रतीकाय० ॥ दयाब्धे० भ
क्त्यानि० पंचमावरणार्चनं॥इंद्राद्यावरणसहितायश्रीसांबसदाशिवायकर्पूरगौराय० पंचमावरणपू० ॥ अथकालचक्रोक्तदेव

ता: ॥ दुर्गायै० गणाधिपतये० क्षेत्रपालाय० तिथिभ्यो० करणेभ्यो० राशिभ्यो० लग्नेभ्यो० मुहूर्तेभ्यो० दिनरात्रिभ्यां० पक्षेभ्यो० मासेभ्यो० ऋतुभ्यो० अयनाभ्यां० वत्सरेभ्यो० मनुभ्यो० जंबुद्वीपाय० प्लक्षद्वीपाय० शाल्मलीद्वीपाय० कुशद्वीपाय० क्रौंचद्वीपाय० पुष्करद्वीपाय० क्षारसागराय० इक्षुसागराय० क्षीरसागराय० उदधये० अतलाय० वितलाय० सुतलाय० तलातलाय० रसातलाय०महातलाय० पातालाय० भूर्लोकाय० भुवर्लोकाय० स्वर्लोकाय०सत्यलोकाय० ध्रुवलोकाय० शतानीकाय० गंगायै० यमुनायै० गोदावर्यै० कृष्णायै० वेण्यै० सरस्वत्यै० रेवायै० सिंधुनद्यै० कावेर्यै० कश्यपाय० अत्रये० भरद्वाजाय० विश्वामित्राय० गोतमाय० जमदग्नये० वसिष्ठाय० पूर्वेऋग्वेदाय० दक्षिणेयजुर्वेदाय० पश्चिमेसामवेदाय० उदीच्यांअथर्वणाय० ईशान्यांइतिहासपुराणेभ्यो० पूर्वेशानयोर्मध्येअष्टदलमंडलेआदित्याय० तद्दक्षिणतःअग्नये० वामतः रुद्राय० आग्नेयचतुष्कोणमंडलेचंद्राय० तद्दक्षिणतःअद्भ्यो० वामतःगौर्यै० दक्षिणेत्रिकोणमंडलेअंगारकाय० तद्दक्षिणतःपृथिव्यै० वामतःस्कंदाय० ईशान्येबाणाकारमंडलेबुधाय० तद्दक्षिणतः विष्णवे० वामतःपुरुषाय०उत्तरेदीर्घचतुरस्रमंडलेबृहस्पतये० तद्दक्षिणे० इंद्राय० वामेब्रह्मणे० पूर्वेपंचकोणमंडलेशुक्राय० तद्दक्षिणेइंद्राण्यै० वामे इंद्राय० प्रतीच्यांधनुराकारमंडलेशनैश्चराय० तद्दक्षिणतःप्रजापतये० वामे यमाय० नैर्ऋत्येशूर्पाकारमंडलेराहवे० तद्दक्षिणतः सर्पेभ्यो० वामे मृत्यवे० वायव्येध्वजाकारमंडलेकेतवे० तद्दक्षि० ब्रह्मणे० वामे चित्रगुप्ताय० ॥ सर्वाभ्यआवरणदेवताभ्योनमःआसनार्थेपुष्पंसमर्पयामीतिपाद्यादिधूपपर्यंतंपूजयेत् ॥ अत्रनानाविधधान्यानि सहस्रमष्टोत्तरशतंवाबिल्वदलानि वार्पयंति॥ॐयत्पुरुषं० ॥ श्री

खंडखंडनवगुग्गुलसारसर्जनिर्यासनिःसृतरसैरपिभूरिशंभो ॥नानाविधैःसुरभिगंधवहैर्विमिश्रंमोदावहंप्रथमतोद्यगृहाणधूपं ॥ नमःकपर्दिनेचव्युप्तकेशायच ॥ भवानीशं० धूपं० ॥ ॐब्राह्मणोस्य०॥दीपंहिपरमंशंभोघृतप्रज्वालितंमया ॥ दत्तंगृहाणदेवेश ममज्ञानप्रदोभव॥ज्योतिर्विशेषमहिमोदयदीप्यमानंवाह्यांतरांधतमसंनयनाभिरामं ॥ निःशेषमंगलमयंघनसारवर्तिंदेदीप्यमानमुररीकुरुदेवदीपं॥ नमआशवेचाजिरायच ॥ श्रीसांब०दीपं० ॥ ॐचंद्रमामनसो० ॥ पायसापूपपक्वान्नंसर्वोपस्करसंयुतं ॥ नैवेद्यंगृह्यतांदेवकृपांकुरुममप्रभो ॥ नमोवभ्लुशायविव्याधिनेन्नानांपतयेनमः ॥ श्रीसांब० महानैवे० आचम० ॥ गंगोदकं समानीतंहेमकुंभेननिर्मलं ॥ एलाकर्पूरगंधाढ्यंप्राशनंपरमेश्वर ॥ प्राशनार्थेपा० ॥करप्रक्षालनार्थायवार्यच्छमुकुरोपमं ॥ मया निवेदितंभक्त्याअष्टमूर्तेप्रगृह्यतां ॥ करप्रक्षा० ॥ कुरंगमदकर्पूरचंदनागरुमिश्रितं ॥ करोद्वर्तनकंगृह्यकृपांकुरुममप्रभो ॥ करोद्वर्तनं० ॥ इदंफलं० फलं० ॥ नमःपुण्यायचपर्णशद्यायच ॥ मुखवासार्थेतांबूलं ॥ त्रैलोक्यदीपप्रतिभासमानैर्नानाविधैर्दुर्लभरत्नजातैः ॥ परिष्कृतंहेमनिबद्धपुष्पंगृहाणदेवेशकृपांविधेहि ॥ नमोहिरण्यवाहवेसेनान्येदिशांचपतयेनमः ॥ हिरण्यरूपः० श्रीभवा० दक्षिणां० ॥ दीपावलीसमायुक्तंभवानीशत्रिलोचन ॥ आर्तिक्यंसंगृहाणेशममज्ञानप्रदोभव ॥ नमःशीघ्रियायचशीभ्यायच ॥ श्रीभवानी० नीराजनं ॥ ॐनाभ्याआसी० नमःशर्वायच० श्रीसांब० नमस्कारः ॥ ॐसप्तास्या० नमःसोभ्यायच० श्रीसांबसदा० प्रदक्षिणाः० ॥ यज्ञेनयज्ञ० ॥ पुष्पांजलिंगृहाणेशमालतीमल्लिकादिभिः ॥ तुष्टोममेप्सितंदेवप्रयच्छ प्रमथाधिप ॥ निधनपतये० निधनपतिकाय० ऊर्ध्वाय० ऊर्ध्वलिंगाय० हिरण्याय० हिरण्यलिंगाय० सुवर्णाय०सुवर्णलिं

गाय० दिव्याय० दिव्यलिंगाय० भवाय० भवलिंगाय० शर्वाय० शर्वलिंगाय० आत्मने० आत्मलिंगाय० परमात्मने० परमात्मलिंगाय० उत्तमोयस्यसर्वलिंगंस्थापयतिपाणिमंत्रंपवित्रं० ॥ सद्योजातंप्रपद्यामीतिपंचमंत्रान्पठेत् राजाधि०साम्राज्यं० पुष्पांजलिं० ॥ प्रथमंतुमहादेवंद्वितीयंचमहेश्वरं ॥ तृतीयंशंकरंप्रोक्तंचतुर्थंवृषभध्वजं ॥ पंचमंशूलपाणिंचपष्ठंकामांगनाशनं ॥ सप्तमंदेवदेवेशंश्रीकंठंचाष्टमंतथा ॥ नवमंचेश्वरंप्रोक्तंदशमंपार्वतीपतिं ॥ रुद्रमेकादशंप्रोक्तंद्वादशंशिवमेवच ॥ द्वादशैतानिनामानियःपठेत्सुसमाहितः ॥ गोघ्नश्चैवकृतघ्नश्चब्रह्महागुरुतल्पगः ॥ स्त्रीवालघातकश्चैवसुरापोवृषलीपतिः ॥ मुच्यतेसर्वपापैश्चशिवलोकेमहीयते॥अन्यथाशरणं०॥ उत्तरपूजनमहंकरिष्ये ॥ सर्वोपचारार्थेअक्षतान्० ॥ वाणरावणचंडीशनंदीभृंगीरिटादयः ॥ सदाशिवप्रसादंचसर्वेगृह्णंतुशांभवाः॥अजोहरिहिरण्याख्यवाणासुरगजाननाः ॥ वसिष्ठव्यासवाल्मीकिदुर्वासागस्त्यगौतमाः॥ सदाशिवप्रसादंचसर्वेगृह्णंतुशांभवाः॥ षडक्षरमष्टोत्तरशतंजपेत् ॥ रुद्रगायत्रींदशवारंजप्त्वा ॥ तत्पुरुषाय० पश्चात्प्रार्थना॥अथवृषभपूजनं॥ ऋषभंमां० इति॥ अर्घ्यमंत्राः॥ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ अशेषाघप्रणाशायप्रसीदममशंकर ॥ दुःखशोकाग्निसंतप्तंसंसारभयपीडितं ॥ वहुरोगाकुलंदीनंत्रातात्वंवृषवाहन ॥ सांव० इदमर्घ्यं ॥ १ ॥ त्रिगुणात्मत्रिलोकेशब्रह्मविष्णुशिवात्मक ॥ अर्घ्यंचेदंमयादत्तंगृहाणगणनायक ॥सांव० इद० ॥२॥ त्रयोदश्यांदिवावत्स्येनिराहारोमहेश्वर ॥ नक्तंभोक्ष्यामिदेवेशगृहाणार्घ्यंसदाशिव॥सांव०इद० ॥ ३ ॥ जगन्मातर्नमस्तुभ्यंनमस्तेलोकपालिनि ॥ व्रतार्घ्यंदीयतेदेविगृहाणपरमेश्वरि ॥ पार्वत्यै० इद० ॥ ५ ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनात

न॥वृषभाय० इद० ॥ ६ ॥ वृषस्यवृषणंस्पृष्ट्वाशृंगयोर्मध्यतःशिवं ॥ विलोक्यसहितंदेव्याप्रार्थयेत्पूजितेशिवे ॥ ब्राह्मणपूजां कृत्वादक्षिणांदत्त्वाशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतिरुद्रयामलेशिवकल्पेशैवागमोक्तानुसारिणीप्रदोषपूजासमाप्ता ॥

॥३९॥ पिठोरीपूजा ॥ संध्याकालेस्नात्वाआचम्यदेशकालौसंकीर्त्यममेहजन्मनिजन्मांतरेचपुत्रपौत्रादिफलावाप्त्यर्थंपिठोरीव्रतंकरिष्येइतिसंकल्प्यतदंगंगणपतिपूजनंकलशाद्यर्चनंचकृत्वादेवींध्यायेत्॥ उक्तप्रकारेणसर्वतोभद्रेऽष्टौकलशान्प्रतिष्ठाप्यसप्तकलशेषु क्रमेणहेममयप्रतिमासु ब्राह्म्यादिसप्तमातॄर्नाममंत्रैरावाहयेत् ॥ ब्राह्म्यैनमः ब्राह्मीमावाहयामि ॥ एवंमाहेश्वरीं० कौमारीं० वैष्णवीं० वाराहीं० इंद्राणीं० चामुंडां० इत्यावाह्य ॥ जज्ञानंसप्तमातरो० ब्राह्मीमाहेश्वरी० इतिवापूजयेत् ॥ तदुत्तरेसुवर्णादिपात्रयुतकलशेचतुःषष्टियोगिनीःहैमप्रतिमास्वक्षतपुंजेषुवावाहयेत्॥ दिव्ययोगिन्यैनमः दिव्ययोगिनीमावाहयामि एवंसर्वत्र १ महायोगिनीं सिद्धियोगिनीं गणेश्वरीं प्रेताक्षीं डाकिनीं कालीं कालरात्रिं निशाचरीं ओंकारीं १० रुद्रवेतालीं हींकारीं भूतडांवरीं ऊर्ध्वकेशीं विरूपाक्षीं शुष्कांगीं नरभोजनां भंडारीं वीरभद्रां धूम्राक्षीं२०कलहप्रियां राक्षसीं घोररक्ताक्षीं विरूपां भयंकरीं भासुरीं रौद्रवेतालीं श्रीपर्णीं त्रिपुरांतकां भैरवीं३०ध्वंसिनीं क्रोधिनीं दुर्मुखीं प्रेतवाहनां कंटकीं त्राटकीं यमदूतीं करालीं खट्वांगीं दीर्घलंबोष्ठीं४०मालिनीं मंत्रयोगिनीं कालाग्निगृहिणीं चक्रीं कंकालीं भुवनेश्वरीं स्फाराक्षीं कार्मुकीं लौकिकीं काकदृष्टिं५०भक्षणीं अधोमुखीं प्रेरणीं व्याघ्रीं कंकणीं प्रेतभक्षणीं वीरकौमारिकां चंडां वाराहीं मुंडधारिणीं ६० कामाक्षीं उड्डाणीं जालंधरां महालक्ष्मीं ६४ इत्यावाह्य नमोदेव्यै० इतिमंत्रेणषोडशोपचारैःपूजयेत् ॥ ततः

सुवर्णपात्रेणफलपुष्पयुतमर्घ्यंनाममंत्रेणप्रत्येकंदद्यात् यथाशक्तिवायनंच ॥नमोस्तुवश्चतुःषष्टिदेवीभ्यःशरणंव्रजे ॥ पुत्रश्रीवृद्धि
कामाहंभवत्यःपूजिताःशुभाः ॥ ततोयथाचारंकोत्तिथिरितिव्रतिनापृथक्त्रिःपृष्टेपूर्वंगणेशस्यपश्चात्स्वस्यचनामकीर्तयतापृष्ठतः
स्थितेनपुत्रादिनातद्दत्तंपोलिकादिवायनंग्राह्यं ॥ अनेनयथामिलितोपचारैःपूजनेनब्राह्म्यादिदेवताःप्रीयंतां ॥ ब्राह्मणान्सुवा
सिनीश्चसंभोज्यपश्चात्स्वयंभुंजीत ॥ इतिपिठोरीव्रतम् ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ४० ॥ हरितालिकापूजा ॥ तिलामलककल्केनस्नात्वादुकूलंपरिधायालंकृतासतीमंडपेपीठादौवालुकामृदादिमयंपा
र्वत्यासहितंशिवलिंगंनिधायमंगलतूर्यघोषपुरःसरंपूजयेत् ॥ आचमनादिदेशकालकथनांतेममश्रीशिवसहितहरितालिकागौरी
प्रीतिद्वारासमस्तपापक्षयपूर्वकंसप्तजन्मराज्याक्षय्यसुखसौभाग्यपुत्रपौत्राभिवृद्धिशिवसायुज्यादिकल्पोक्तफलसिद्ध्यर्थंहरिता
लिकाव्रतांगभूतंशिवगौरीपूजनंकरिष्ये॥गणेशपूजादिसंभारप्रोक्षणांतेमूर्तीनांप्राणप्रतिष्ठांकृत्वापूजामारभेत् ॥ पीतकौशेयवस
नांहेमाभांकमलासनां॥भक्तानांवरदांनित्यंपार्वतींचिंतयाम्यहं ॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥ दिव्यां
बरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ ध्यानं ॥ देविदेविसमागच्छशिवेनसहितासती ॥ इमांमयाकृतांपूजांगृहाणसुर
सत्तमे ॥ आवाहनं ॥ भवानित्वंमहादेविशंकरार्धशरीरिणि ॥ अनेकरत्नसंयुक्तमासनंप्रतिगृह्यतां ॥ आसनं ॥ सुचारुशीतलं
वारिनानागंधसुवासितं ॥ पाद्यंगृहाणदेवेशिस्वपत्यासहपार्वति ॥ पाद्यं ॥ श्रीपार्वतिमहाभागेशंकरप्रियवादिनि ॥ अर्घ्यंगृहा
णकल्याणिभर्त्रासहपतिव्रते ॥ अर्घ्यं ॥ गंगाजलंमयानीतंसुवर्णकलशेस्थितं ॥ आचम्यतांमहाभागेरुद्रेणसहितेऽनघे ॥ आच

मनं ॥ प्रभासाद्यानितीर्थानिगंगाद्याश्चसरिद्वराः ॥ प्रार्थ्यानीतंगृहाणेदंस्नानीयांभःशिवप्रिये ॥ स्नानं ॥ पयोदधिघृतंचैवमधु शर्करयायुतं ॥ पंचामृतंमयादत्तंस्नानार्थंगृह्यतांशिवे ॥ पंचामृतं ॥ पृथक्पंचामृतमंत्राःसामान्यपूजायांद्रष्टव्याः ॥ गंधोदक मिदंदेविकर्पूरागुरुसंयुतं ॥ स्नानार्थंतेप्रयच्छामिगृहाणशिववल्लभे ॥ गंधोदकं ॥ शुद्धोदकं ॥ पूर्वपूजांकृत्वा सुरास्त्वामित्या दिनाभिषेकांते पीठेमूर्तींःप्रतिष्ठाप्य ॥ सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे ॥ शंकरेणयुतेगौरिवाससीत्वंगृहाणमे ॥ वस्त्रं ॥ महादेवनमस्तेस्तुत्राहिमांभवसागरात् ॥ उपवीतंमयादत्तंधारयस्वजगत्पते ॥ उपवीतं ॥ मुक्तामणिगणाकीर्णंनानावर्णविचित्रि तं॥दिव्यंपरमशोभाढ्यंकंचुकंदेविधार्यतां ॥ कंचुकीं ॥ श्रीखंडंचंदनं० ॥ चंदनं ॥ अक्षताश्चसुरश्रेष्ठे० ॥ अक्षतान् ॥ हरि द्रारंजितादेविसुखसौभाग्यदायिनि ॥ मातस्तुभ्यंप्रयच्छामिहरिद्रांसर्वकामदां ॥ हरिद्रां ॥ कुंकुमंकामदंनित्यंस्त्रीणांभालस्यभू षणं ॥ धारयस्वमहादेविप्रीत्यातिलकमुत्तमं ॥ कुंकुमं ॥ उदितारुणसंकाशंजपाकुसुमसंनिभं ॥ सीमंतभूषणार्थायसिंदूरंदेवि गृह्यतां ॥ सिंदूरं ॥ यदंजनंत्रैककुदंनेत्रसौंदर्यसाधनं ॥ चक्षुषोःकज्जलंधेहिदेविस्वर्णशलाकया ॥ कज्जलं ॥ रत्नकंकणकेयूरमु क्ताहारंसनूपुरं ॥ कुंडलेकंठसूत्रंचगृहाणाभरणंशुभे ॥ अलंकारान् ॥ कंठसूत्रंताडपत्रंहरिद्राकुंकुमांजनं ॥ सिंदूरादिप्रदास्यामि सौभाग्यंदेहिमेव्यये ॥ तालपत्रं ॥ कस्तूर्याद्याश्रयागंधाभोगार्थंतेमयाहृताः ॥ नानापरिमलद्रव्यंगृहाणशिवसंयुता ॥ परिमल द्रव्यं ॥ माल्यादीनि० ॥ पुष्पाणि ॥ अथांगपूजा ॥ उमायैनमः पादौपूजयामि ॥ गौर्यै० जंघे० ॥ पार्वत्यै० जानुनी० ॥ जगद्धात्र्यै० ऊरू० ॥ शिवायै० ॥ कटिं० ॥ अपर्णायै० नाभिं० ॥ देव्यै० उदरं० ॥ लोकवंद्यायै० स्तनौ० ॥ काल्यै०कंठं० ॥

दुर्गायै० मुखं० ॥ भवान्यै० नेत्रे० ॥ रुद्राण्यै० कर्णौ० ॥ शर्वाण्यै०ललाटं ॥ अंबिकायै० शिरः०॥सर्वेश्वर्यै० सर्वांगंपूजया
मि ॥ अथपत्रपूजा ॥ उमायै० बिल्वपत्रं० ॥ गौर्यै० अपामार्गं० ॥ पार्वत्यै० मालती० ॥ दुर्गायै० दूर्वा० ॥ काल्यै० चंपकं० ॥
भवान्यै० करवीर० ॥ रुद्राण्यै० बदरी० ॥ शर्वाण्यै० अर्कं० ॥ चंडिकायै० तुलसी० ॥ ईश्वर्यै० मुनि० ॥ शिवायै० दाडि
मी० ॥ अपर्णायै० धत्तूर० ॥ धात्र्यै० जाती० ॥ मृडान्यै० मरुवक० ॥ गिरिजायै० वकुल० ॥ अंबिकायै० अशोकं० ॥ अथ
नामपूजा ॥ उमायै० गौर्यै० पार्वत्यै० जगद्धात्र्यै० जगत्प्रतिष्ठायै० शांतिरूपिण्यै० ॥ हराय० महेश्वराय० शंभवे० शूलपाण
ये० पिनाकधृषे० शिवाय० पशुपतये० महादेवाय० ॥ वनस्पति० धूपं ॥ साज्यंचवर्तिं० दीपं ॥ शर्कराखंड० नैवेद्यं० ॥ इदं
फलं० फलं ॥ पूगीफलंमह० तांबूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ चक्षुर्दंसर्वं० नीराजनं ॥ यानिकानिच० प्रदक्षिणां ॥ नमःशि
वायशांतायपंचवक्त्रायशूलिने ॥ नंदिभृंगिमहाकालगणयुक्तायशंभवे॥शिवायैशिवरूपायैमंगलायैमहेश्वरि ॥ शिवसर्वार्थदेनि
त्यंशिवरूपेनमोस्तुते ॥ नमोदेव्यैमहा० नमस्कारं ॥ शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे ॥ शिवरूपेनमस्तुभ्यंगृहाणकुसुमांज
लिं ॥ पुष्पांजलिं० ॥ छत्रचामरादिराजभोगान् ॥ आवाहनंन० ॥ मंत्रहीनं० ( क्वचिदर्घ्यं ॥ श्रीपार्वतिमहाभागेशंकरप्रिय
वादिनि ॥ अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रते ॥ इदमर्घ्यं० ॥) नमस्तेसर्वरूपिण्यैजगद्धात्र्यैनमोनमः ॥ संसारभयसंत्रस्तां
पाहिमांसिंहवाहिनि॥ मयाद्ययेनकामेनपूजितासिमहेश्वरि ॥ राज्यसौभाग्यपुत्रादिसंपदंचांबदेहिमे ॥ प्रार्थनां ॥ कृतव्रतस्यय
थावत्फलसिद्ध्यर्थंब्राह्मणायवायनप्रदानंक० ॥ ब्राह्मणंसपत्नीकंसंपूज्य ॥ अन्नंसुवर्णपात्रस्थंसवस्त्रफलदक्षिणं ॥ वायनंगौरिवि

प्रायददामिप्रीतयेतव ॥ सौभाग्यारोग्यकामार्थंसर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहमितिमंत्राभ्यांस्वर्णादि पात्रस्थं वस्त्रान्नफलस्वर्णहरिद्रादियुतंसोपस्करंवायनंतस्यैदत्वा कथांचश्रुत्वाब्राह्मणेभ्योवह्वन्नंगोवस्त्रहिरण्यानिस्त्रीभ्योहरिद्रा वस्त्रकंचुकभूषणादिदत्त्वोपोषितासतीरात्रौजागरणंदेव्यानीराजनंकृत्वा प्रातर्देवंविसृज्यपारणंकुर्यात् ॥ इति ॥ ॥ ७ ॥

॥ ४१ ॥ गणेशचतुर्थीपूजा ॥ चतुर्थ्यांप्रातःशुक्लतिलैःस्नात्वाकृतनित्यक्रियःकर्तामध्याह्नेकदलीस्तंभतोरणस्रक्पल्लवरंग वल्ल्यादिशोभितंपूर्णकुंभादिमंगलोद्भासितंदेवगृहमेत्य सौवर्णींराजतींताम्रीमशक्तौमृन्मयींवोक्तलक्षणांगणेशमूर्तिंसंपाद्यकृता ग्न्युत्तारणांतांपीठेनिधायपूजयेत् ॥ आचमनादिदेशकालकथनांते ममश्रीसिद्धिविनायकप्रीतिद्वारासकलपापक्षयपूर्वकंसर्वकर्म निर्विघ्नत्वपुत्रपौत्राद्यभिवृद्धिमहैश्वर्यविद्याविजयसंपदादिकल्पोक्तफलसिद्ध्यर्थंश्रीसिद्धिविनायकपूजनंकरिष्ये ॥ आसनविधिं शरीरशुद्ध्यर्थंभूशुद्ध्यादिन्यासान्कलशाद्यर्चनंचकरिष्ये ॥ भूशुद्ध्यादिभिःपुरुषसूक्तादिन्यासैश्चात्मानंपावयित्वा॥अस्यश्रीहेरंव मंत्रस्य हेरंवऋषिः विनायकोदेवता त्रिष्टुप्छंदः गंबीजं ॐशक्तिः अभीष्टकामनासिद्ध्यर्थेन्यासेविनियोगः ॥ ॐनमोहेरंवायअं गुष्ठाभ्यांनमःहृदयायनमः ॥ मदमोदिततर्जनीभ्यांनमःशिरसेस्वाहा ॥ ममसंकष्टंमध्यमाभ्यांनमःशिखायैवषट् ॥ वारय अना- मिकाभ्यांनमःकवचायहुं ॥ निवारयकनिष्ठिकाभ्यांनमःनेत्रत्रयायवौषट् ॥ हुंफट्स्वाहाकरतलकरपृष्ठाभ्यांनमःअस्त्रायफट् इतिदिग्बंधः ॥ ततःकलशशंखघंटादीपान्संपूज्यद्वारपूजांकुर्यात् ॥ पुष्पाक्षतान्गृहीत्वा ॥ ॐपूर्वद्वारेश्रियैनमः ॥ गौर्यैनमः ॥ गौरीपतयेनमः ॥ दक्षिणद्वारेश्रियैनमः ॥ देव्यैनमः ॥ देवीपतयेनमः ॥ पश्चिमद्वारेश्रियैनमः ॥ रत्यैनमः ॥ रतिपतयेनमः ॥

उत्तरद्वारेमह्यैनमः ॥ महीपतये० ॥ इतिद्वारपूजा ॥ ततःपीठपूजा ॥ पूर्वादिक्रमेण ॥ इंद्रंवोविश्वतस्परिऋक् ॥ इंद्रमावाहया
मिं ॥ अग्निंदूतंवृणीमहे० ॥ अग्निमा० ॥ यमायसोमं० ॥ यममावा० ॥ मोषुणःपरापरा० ॥ निर्ऋतिं० ॥ तत्त्वायामिब्र०॥
वरुणं० ॥ तववायवृतस्पते० ॥ वायुमावा० ॥ सोमोधेनुं० ॥ सोममावा० ॥ तमीशानं० ॥ ईश्वरं० ॥ मध्येगणपतिमावाह
यामि ॥ प्राच्यांवज्रायनमः दक्षिणस्यांदंडाय० पश्चिमस्यांखड्गाय० उत्तरस्यांपाशायनमः ॥ प्राच्यांध्वजाय० दक्षिणस्यांच
क्राय० पश्चिमस्यांपद्माय० उत्तरस्यांअंकुशाय० ॥ दलाद्बहिः पूर्वादिदिक्षुक्रमेणआवाहयेत् ॥ धर्मायनमः ज्ञानाय० वैराग्या
य० ऐश्वर्याय० अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ॥ ततोदलेषु ॥ अनंतआवाह० पद्मं सूर्यं० वह्निं०
सत्वात्मानं० रजआत्मानं० तमसात्मानं० मध्येसर्वशक्तिपीठात्मने० ॥ ततःकेसरेषु० ॥ तीव्रां० ज्वालिनीं० नंदां० भोग
दां० उग्रां० तेजोवतीं० सहां० मध्येविघ्ननाशिनीं० ॥ ततः आधारशक्तये० मूलप्रकृतये० कूर्माय० अनंताय० पृथिव्यै०
कंदाय० नालाय० पत्रेभ्यो० दलेभ्यो० वीजेभ्यो० अष्टदलकमलाय० केसरेभ्यो० सर्वशक्तिसहितायस्वर्णकमलाय
नमः ॥ इतिपीठपूजा ॥ अथप्राणप्रतिष्ठा ॥ अस्यांमूर्तौदेवत्वसंनिधानेनपूजार्हतासिद्ध्यर्थंप्राणप्रतिष्ठांकरिष्ये ॥ अस्य
श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामानिछंदांसि पराप्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रोंकी
लकं ॥ अस्यांमूर्तौप्राणप्रतिष्ठापने० ॥ देवस्यहृदिकरंदत्वाजपेत् ॥ ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहं हंसःसोहं ॥ देवस्यप्राणाइहप्रा
णाः॥ आंह्रीं० सोहं ॥ देवस्यजीवइहस्थितः ॥ आंह्रीं० सोहं ॥ देवस्यसर्वेंद्रियाणि ॥ आंह्रीं० सोहं ॥ देवस्यवाङ्मनश्चक्षुःश्रो

त्रप्राणप्राणाइहागत्यसुखंसुचिरंतिष्ठंतुस्वाहा ॥ इमंमंत्रंत्रिःसकृद्वापजेत् ॥ असुनीतेपुन० ॥ चत्वारिवाक्० ॥ रक्ताभोधिस्थ०॥ देवस्यगर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःक० ॥ॐ१५॥अंजंतित्वामध्वरेदेवयंतोवनस्पतेमधुनादैव्येन ॥ यदूर्ध्वस्तिष्ठाद्रविणेहधत्ताद्यद्वाक्षयोमातुरस्याउपस्थे ॥ इति स्वर्णादिशलाकया देवस्यनेत्रेअभ्यज्योपहारंनिवेदयेत् ॥ एवंविस्तरासंभवेप्रतिमायाःकपोलौस्पृशन् ॥ अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ इतिपरिभाषोक्तंश्लोकंपठेत् ॥ एकदंतंशूर्पकर्णंगजवक्रंचतुर्भुजं ॥ पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकं ॥ ( यद्वा—ध्यायेद्गजाननंदेवंपद्मकांचनसंनिभं ॥ चतुर्भुजंमहाकायंसर्वाभरणभूषितं ॥ दंताक्षमालापरशुपूर्णमोदकधारिणं ॥ मोदकासक्तशुंडाग्रमेकदंतंविनायकं ॥ ) ध्यानं ॥ सहस्रशीर्षा० ॥ आवाहयामिविघ्नेशसुरराजार्चितेश्वर ॥ अनाथनाथसर्वज्ञपूजार्थंगणनायक ॥ आवाहनं ॥ पुरुषएवेदं० ॥ विचित्ररत्नरचितंदिव्यास्तरणसंयुतं ॥ स्वर्णसिंहासनंचारुगृहाणसुरपूजित ॥ आसनं ॥ एतावानस्य० ॥ सर्वतीर्थसमुद्भूतंपाद्यंगंधादिभिर्युतं ॥ विघ्नराजगृहाणेदंभगवन्भक्तवत्सल ॥ पाद्यं ॥ त्रिपादूर्ध्व० ॥ अर्घ्यंचफलसंयुक्तंगंधपुष्पाक्षतैर्युतं ॥ गणाध्यक्षनमस्तेस्तुगृहाणकरुणानिधे ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ विनायकनमस्तुभ्यंत्रिदशैरभिवंदित ॥ गंगोदकेनदेवेशशीघ्रमाचमनंकुरु ॥ आचमनं ॥ यत्पुरुषेण० ॥ गंगासरस्वतीरेवापयोष्णीयमुनाजलैः ॥ स्नापितोसिमयादेवतथाशांतिंकुरुष्वमे ॥ मलापकर्षस्नानं ॥ दधिक्राव्णो० ॥ दध्याज्यमधुसंयुक्तंमधुपर्कंमयाहृतं ॥ गृहाणसर्वलोकेशगणनाथनमोस्तुते ॥ मधुपर्कं ॥ आप्यायस्व० ॥ कामधेनु० ॥ पयःस्नानं ॥ दधिक्राव्णो० ॥ चंद्रमंडल० ॥ दधि० ॥ घृतंमिमिक्षे० ॥

आज्यंसुराणा० ॥ घृत० ॥ मधुवाता० ॥ सर्वौषधि० ॥ मधु० ॥ स्वादुःपवस्व० ॥ इक्षुदंड० ॥ शर्करास्ता० ॥ सुगंधिद्र
व्यसंमिश्रंतैलंसहहरिद्रया ॥ दिव्यंसुरभिपुष्पोत्थंगृहाणोद्वर्तनंविभो ॥ अंगोद्वर्तनं ॥ कनिक्रदज्जनुषं० ॥ नानातीर्थाहृतंयत्ना
त्तोयमुष्णंमयाकृतं ॥ मंगलंगात्रसुखदंस्नानार्थंदेवगृह्यतां ॥ उष्णोदक० ॥ गंधद्वारांदुरा० ॥ चंदनागरुकर्पूरसुरभिस्वादुशी
तलं ॥ एलोशीरलवंगाढ्यंस्नानार्थंवारिगृह्यतां ॥ गंधोदकस्नानं० ॥ आपोहिष्ठा० शुद्धोदकस्नानं ॥ आचम० ॥ गंधादि
भिःपूर्वपूजांते वैदिकसूक्तैःसुरास्त्वामित्याद्यैश्चाभिषेकः ॥ तदस्तु० ॥ तंयज्ञं० ॥ रक्तवस्त्रयुगंदेवदेवताहंसुमंगलं ॥ सर्वप्रदगृ
हाणेदंलंबोदरहरात्मज ॥ सर्वप्रदाय० रक्तवस्त्रद्वयं ॥ आचमनं० तस्माद्यज्ञात्सर्व० ॥ राजतंब्रह्मसूत्रंचकांचनस्योत्तरीयकं ॥
विनायकनमस्तेस्तुगृहाणसुरवंदित ॥ यज्ञोपवीतं ॥ नानाविधानिदिव्यानिनानारत्नोज्वलानिच ॥ भूषणानिगृहाणेशपार्वतीप्रि
यनंदन ॥ भूषणानि ॥ तस्माद्यज्ञा० ॥ कस्तूरीसहितंदिव्यंकुंकुमेनविराजितं ॥ विलेपनंसुर० ॥ गणाध्यक्षाय०चंदनं ॥ रक्ता
क्षतांश्चदेवेशगृहाणद्विरदानन ॥ ललाटपटलेचंद्रस्तस्योपर्यैवधारय ॥ रक्ताक्षतान् ॥ सिंदूरमरुणाभासंबालार्कसदृशद्युति ॥
वीरालंकरणंदिव्यंगृहाणगणनायक ॥ सिंदूरं ॥ अहिंरिव० ॥ कस्तूर्या चैर्विमिश्रंचनानाचूर्णैःसुगंधिभिः ॥ प्रीत्यर्थंतेगृहाणेदंगंध
द्रव्यंगणेश्वर ॥ परिमलद्रव्यं ॥ तस्मादश्वा० ॥ माल्यादीनि० ॥ विनायकाय० पुष्पाणि ॥ अथांगपूजा ॥ गणेशायनमःपा
दौपूजयामि ॥ विघ्नराजाय० जानुनी० ॥ आखुवाहनाय० ऊरू० ॥ हेरंबाय०कटिं० ॥ कामारिसूनवे० नाभिं० ॥ लंबोदराय०
उदरं० ॥ गौरीसुताय० हृदयं० ॥ स्थूलकंठाय०कंठं० ॥ स्कंदाग्रजाय० स्कंधौ० ॥ पाशहस्ताय० हस्तौ० ॥ गजवक्राय०वक्रं० ॥

विघ्नहर्त्रे० नेत्रे० ॥ सर्वेश्वराय० शिरः०॥गणाधिपाय० सर्वांगंपू०॥अथनामपूजा॥ विघ्नराजाय० गजाननाय० लंबोदराय० शिवात्मजाय० वक्रतुंडाय० शूर्पकर्णाय०गणेश्वराय०विघ्ननाशिने०विकटाय० वामनाय० सर्वदेवाय० सर्वदुःखविनाशिने० विघ्नहर्त्रे० धूम्राय० सर्वदेवाधिदेवाय० एकदंताय० कृष्णपिंगलाय० भालचंद्राय० गणनाथाय०शंकरसूनवे० अनंगपूजितायनमः ॥ अथावरणपूजा ॥ गणनाथाय० हेरंबाय० इभवक्त्राय० मूषकवाहनाय० शिवप्रियाय० उमापुत्राय०॥दयाब्धे त्राहिसंसारसर्पान्मांशरणागतं॥ भक्त्यासमर्पयेत्वाहंप्रथमावरणार्चनं ॥ प्रथमावरणपूजांसम० १ ॥ वरगणपतये०सुरगण० चंडगण०इभवक्त्रगण० क्षिप्रगण०प्रसादगण० लंबोदरगण० ॥ द्वितीयावरणं२ ॥ इंद्राय० अग्नये० यमाय०निर्ऋतये०वरुणाय०वायवे०कुबेराय० ईशानाय०॥तृतीयावरणं३ ॥ विनायकाय० द्वैमातुराय० विघ्नराजाय० गणाधिपाय० हेरंबाय० एकदंताय० लंबोदराय० ॥ चतुर्थावरणं ४ ॥ तीक्ष्णदंष्ट्राय० सूतरूपाय० गजास्याय० त्रिनेत्राय० रक्तप्रियाय०बृहदुदराय० सुरवंद्याय० शिवसुताय० ॥ पंचमावरणं५॥भद्रकालिने० भैरवाय० शेषाय० वरुणाय० सतांपतये० संवत्सराय० शांताय० ॥ षष्ठावरणं६॥सरस्वत्यै० लक्ष्म्यै० भारत्यै० ब्रह्मणे० विष्णवे० रुद्राय० आकाशाय० वेदाय० वास्तुपुरुषाय०॥ सप्तमावरणं ७ ॥ ॥ अथपत्रपूजा ॥ सुमुखाय० मालतीपत्रं ॥ गणाधिपाय० भृंगराज० ॥ उमापुत्राय० बिल्व०॥ गजाननाय० श्वेतदूर्वा० ॥ लंबोदराय० बदरी० ॥हरसूनवे० धत्तूर० ॥ गजकर्णाय० तुलसी० ॥ गुहाग्रजाय०अपामार्ग० ॥ वक्रतुंडाय० शमी० ॥ एकदंताय० केतकी० ॥ विकटाय०करवीर०॥ विनायकाय० अश्मंतक० ॥कपिलाय० अर्क० ॥भिन्न

दंताय० अर्जुन० ॥ पत्नीयुताय० विष्णुक्रांत० ॥ वटवे० दाडिमी० ॥ सुरेशाय० देवदारु० ॥ भालचंद्राय० मरुवक० ॥ हेरंवाय० सिंदुवार० ॥ शूर्पकर्णाय० जाती० ॥ सर्वेश्वराय० अगस्तिपत्रं० २१ ॥ ॥ अथपुष्पपूजा ॥ सुमुखाय० जाती पुष्पं ॥ एकदंताय० शतपुष्पं ॥ कपिलाय० मालती० ॥ गजकर्णाय० चंपक० ॥ लंबोदराय० कह्लार० ॥ भक्तप्रियाय० धत्तूर० ॥ भालचंद्राय० वकुल० ॥ पत्नीयुताय० मंदार० ॥ उमापुत्राय० करवीर० ॥ अघहंत्रे० पारिजात० ॥ द्वैमातुराय० मल्लिका० ॥ गिरिजात्मजाय० कर्णिका० ॥ दीर्घदंताय० कुमुद० ॥ स्थूलकर्णाय० मुनि० ॥ विघ्नेश्वराय० पुंनाग० ॥ गणाधिपाय० जपा० ॥ नागभूषणाय० नागचंपक० ॥ विकटाय० पाटल० ॥ सुरेश्वराय० कुरंटक० ॥ शिवप्रियाय० तगर० ॥ गणाधिपाय० यूथिकापु० २१ ॥ यत्पुरुषं० ॥ दशांगंगुग्गुलुंधूपमुत्तमंगणनायक ॥ गृहाणदेवदेवेशउमासुतनमोस्तु ते ॥ उमासुताय० धूपं ॥ ब्राह्मणोस्य० ॥ दीपंज्ञानप्रदंचारुघृतवर्तिसमन्वितं ॥ गृहाणमंगलंदीपंरुद्रप्रियनमोस्तुते ॥ रुद्रप्रियाय० दीपं ॥ चंद्रमा० ॥ सफलंसगुडंदेवमोदकंघृतपाचितं ॥ नैवेद्यंसघृतंदत्तंनमस्तेविघ्ननाशिने ॥ विघ्ननाशिने० नैवेद्यं ॥ फलान्यमृततुल्यानिसुस्वादून्यघनाशन ॥ आनीतानिमयाभक्त्यागृहाणेमानिसर्वद ॥ फलं ॥ पूगीफलं तांवूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ श्रियेजातः० ॥ कर्पूरनिर्मितंरम्यंस्वर्णपात्रेनिवेशितं ॥ नीराजनंगृहाणेदंचंद्रकांतिहरंप्रभो ॥ नीराजनं ॥ नाभ्याआसी० ॥ नमस्तेविघ्नसंहर्त्रेनमस्तेभीप्सितप्रद ॥ नमस्तेदेवदेवेशगणाधिपनमोस्तुते ॥ नमस्कारं ॥ सप्तास्यासन्० ॥ विघ्नेश्वरविशालाक्षसर्वकामफलप्रद ॥ प्रदक्षिणीकरोमित्वामभीष्टंदेहिमेसदा ॥ प्रदक्षिणाः ॥ ततएकविंशतिदूर्वांकुरानादाय व

क्ष्यमाणदशनामभिरेकैकंदूर्वायुग्मंसगंधमर्पयेत् ॥ गणाधिपाय० उमापुत्रा० अघनाशना० विनायका० ईशपुत्रा० सर्वसिद्धि प्रदा० एकदंता० इभवक्त्रा० मूषकवाहना० कुमारगुरुवे० १० ॥ अवशिष्टमेकदूर्वांकुरंदशनामभिर्दद्यात् ॥ यज्ञेनयज्ञ० ॥ मालतीमल्लिकाजातीपद्ममंदारचंपकैः ॥ भक्त्यार्पितंमयादेवगृहाणकुसुमांजलिं ॥ पुष्पांजलिं ॥ राजोपचारान् ॥ ( क्वचिदर्घ्याणि ॥ गौर्यंकमलसंभूतज्येष्ठस्वामिकुमारक ॥ गृहाणार्घ्यंमयादत्तंगजवक्त्रनमोस्तुते ॥ इदमर्घ्यं० ॥ गणेशायनमस्तुभ्यंसर्वकामफलप्रद ॥ वांछितंदेहिमेनित्यंगृहाणार्घ्यंनमोस्तुते ॥ इदमर्घ्यं० ॥ व्रतमुद्दिश्यविघ्नेशगंधपुष्पाक्षतैर्युतं ॥ गृहाणार्घ्यंमयादत्तं सर्वसिद्धिंप्रयच्छमे ॥ इदमर्घ्यं० इति ॥ ) यन्मयाचरितंदेवव्रतमेतत्सुदुर्लभं ॥ त्वत्प्रसादाद्गणेशत्वंसफलंकुरुसर्वदा ॥ कार्यं मेसिद्धिमायातुपूजितेत्वयिधातरि ॥ विघ्नानिनाशमायांतुसर्वाणिसुरनायक ॥ मंत्रहीनं० ॥ रूपंदेहि० ॥ प्रार्थनां ॥ ततएकविंशतिमोदकान्गणेशाग्रेसंस्थाप्यतत्रैकंसनैवेद्यंदेवायनिवेद्यव्रतोपदेष्टारंब्राह्मणंसंपूज्यतस्मैदशमोदकवायनंव्रतपूर्त्यैदद्यात् ॥ तत्रमंत्र० ॥ विनायकनमस्तुभ्यंसततंमोदकप्रिय ॥ अविघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ दशानांमोदकानांचदक्षिणाफलसंयुतं ॥ विप्रायतवतुष्ट्यर्थंवायनंप्रददाम्यहं ॥ ततःशक्त्याविप्रान्संभोज्यभूयसींदत्वा ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेत्वंगणेश्वर ॥ व्रतेनानेनमेनित्यंयथोक्तफलदोभवेतिप्रतिमांविसृज्य ब्राह्मणायदद्यात् ॥ विनायकस्यप्रतिमांवस्त्रयुग्मसमन्वितां ॥ तुभ्यंसंप्रददेविप्रप्रीयतांमेगजाननः ॥ गणेशःप्रतिगृह्णातिगणेशोवैददातिच ॥ गणेशस्तारकोभाभ्यांगणेशायनमोनमः ॥ विनायकगणेशानसर्वदेवनमस्कृत ॥ पार्वतीप्रियविघ्नेशममविघ्नंविनाशय ॥ स्वर्णपूजातर्पणादि गणेशगायत्र्याकुर्यात् ॥ जपमप्यष्टसहस्रादियथाश

क्तिकुर्यादितिनिर्णयामृते ॥ ततःपूर्वावशिष्टदशमोदकसहितंतैलवर्जमन्नंभुंजीतेति ॥ इदानींशिष्टास्तुब्राह्मणभोजनांतेदेवमविसृज्यस्वेच्छयायथाकुलाचारंवाकतिचिद्दिनानिसंस्थाप्यमंत्रपाठपुराणश्रवणनृत्यगीतादिभिरुत्सवंकृत्वातदंतेदेवंविसृज्यनद्यादौक्षिपंति ॥ तत्र ब्राह्मणान्भोजयेत्पश्चाज्जागरंचविशेषतइतिस्यमंतकोपाख्यानस्थंस्कांदं पूर्वोक्तंगाणेशंचमूलमितिभाति ॥ केचित्तु प्रतिमांविसृज्यगृहएवस्थापयंति ॥ इतिगणेशचतुर्थ्यांसिद्धिविनायकपूजासंपूर्णा ॥ ॥ छ ॥ ॥ छ ॥

॥४२॥ ऋषिपंचमीपूजा ॥ मध्याह्नेनद्यादौगत्वाऽपामार्गकाष्ठमन्यद्वाऽनिषिद्धं ( आम्रादि ) काष्ठमादाय ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच॥ब्रह्मप्रज्ञांचमेधांचत्वंनोधेहिवनस्पते॥इतिवनस्पतिंप्रार्थ्य॥मुखदौर्गंध्यनाशायदंतानांचविशुद्धये॥ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं॥ इतिदंतधावनंकृत्वातिलामलककल्केनकेशान्संशोध्यमृत्स्नानपूर्वंस्नात्वा (पुरुषकर्तृकोवैदिकःस्नानविधिर्ब्रह्मकर्मसमुच्चयस्थोत्सर्जनप्रयोगेद्रष्टव्यः ॥ अत्रव्यावहारिकःपौराणउच्यते ॥) आचमनादिदेशकालकीर्तनांतेममात्मनःकायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसमस्तपापक्षयद्वाराशरीरशुध्यर्थंऋषिपंचमीव्रतांगत्वेनअपामार्गकाष्ठैर्दंतधावनपूर्वकमष्टोत्तरशतस्नानानिकरिष्ये इतिसंकल्प्य॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि॥मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ स्नात्वाआचम्य ॥ (सुवासिन्या॥ हरिद्रेपीतवर्णेत्वंहारिणीजनरंजनी ॥ अतस्त्वांलेपयिष्यामिसौभाग्यंदेहिमेनघे॥ इतिहरिद्रांविलिप्यस्नात्वाआचम्य ॥ कुंकुमंकांतिदंदिव्यंकामिनीकामसंभवं॥स्नास्येहंकुंकुमेनातःप्रसन्नोभवमेहरे ॥ स्नात्वाआचम्य)॥ शरीरशुद्ध्यर्थभस्मगोमयमृत्तिकास्नानानिकरिष्ये ॥ भस्मस्नानं॥ सर्वरक्षाकरं

भस्मकामाद्यरिविनाशनं ॥ तस्यलेपनमात्रेणसर्वपापैःप्रमुच्यते ॥ स्नात्वाआचम्य ॥ गोमयस्नानं ॥ अग्रमग्रंचरंतीनामोषधीनाव
नेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा ॥ स्नात्वाआचम्य ॥ मृत्तिकास्नानं ॥ मृ
त्तिकेहरमेपापंयन्मयादुष्कृतंकृतं ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं ॥ स्नात्वाआचम्य ॥ अपामार्गकाष्ठेन ॥ मुखदौर्गंध्यना
शायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं ॥ एवं १०८ वारंस्नात्वा ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥
नर्मदेसिंधोकावेरिजलेस्मिन्संनिधिंकुरु ॥ इतितुलसीदलेनजलमालोड्य (संभवेमहासंकल्पंकृत्वा) गंगांप्रार्थयेत् ॥ नंदिनीन
लिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभूतागंगात्रिपथगामिनी ॥ भागीरथीभोगवतीजाह्नवीत्रिदशेश्वरी ॥ द्वादशैता
निनामानियत्रयत्रजलाशये ॥ स्नानयुक्तःस्मरेन्नित्यंतत्रतत्रवसेद्धिसा ॥ शरीरेजर्जरीभूतेव्याधिग्रस्तेकलेवरे ॥ औषधंजाह्नवीतो
यंवैद्योनारायणोहरिः ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयागंगेसर्वपापहराभव ॥ इतिप्रार्थ्यअर्घ्यादिदद्यात् ॥
एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमोस्तुते ॥ सूर्यनारायणायेदमर्घ्यं० ॥ भागीरथिनमस्तु
भ्यंसर्वपापप्रणाशिनि ॥ भक्त्यातुभ्यंमयादत्तंगृहाणार्घ्यंनमोस्तुते ॥ गंगायैइदमर्घ्यं० ॥ कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौ
तमः ॥ जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती ॥ अरुंधतीसहितकश्यपादिसप्तर्षिभ्यइदमर्घ्यं० ॥ इत्यर्घ्याणिदत्वा ॥ यन्मया
दूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ वस्त्रंनिष्पीड्य गंधपुष्पाक्षतहरिद्राकुंकुमादिभिर्गंगांतु
लसींसूर्यंचनाम्नापूजयेत् ॥ इतिस्नानविधिः ॥ ॥ अथपूजा ॥ ततःशुद्धेवाससीपरिधायनित्यकर्मांतेगृहमागत्याग्निहोत्रशाला

दौवेदिंकृत्वागोमयेनोपलिप्यरंगवल्लीश्वेतपुष्पादिभिरलंकृत्यसंभारान्संभृत्यआचमनादिदेशकालकथनांतेममश्रीकश्यपादिस
प्तर्षिप्रीतिद्वाराज्ञानतोऽज्ञानतोवारजस्वलावस्थायांमत्कृतभांडवस्त्रादिसंपर्कजनितदोषपरिहारादिकल्पोक्तफलसिद्ध्यर्थमृषि
पंचमीव्रतांगत्वेनऋषिपूजांक० ॥ गणेशपूजादिसंभारप्रोक्षणांते वेद्यांप्रतिमासुऋषीन्पूजयेत् ॥कश्यपायनमःकश्यपंआवाहया
मि अत्रयेन०भरद्वाजाय०विश्वामित्राय०गौतमाय०जमदग्नये०वसिष्ठाय०अरुंधत्यैनमः अरुंधतीमावाहयामि इत्यृषीनावा
ह्य॥मूर्तिंब्रह्मण्यदेवस्यब्रह्मणस्तेजउत्तमं॥भानुकोटिप्रतीकाशमृषिवृंदंविचिंतये॥ध्यानं॥आगच्छंतुमहाभागाश्चतुर्वेदस्वरूपिणः॥
यावत्पूजामहंकुर्वेकृपयाभवतामिमां ॥ आवाहनं ॥ कुशासनेपवित्रेस्मिंस्तिष्ठंतुमुनिसत्तमाः॥अरुंधत्यासमेतास्तेजटामुकुटधा
रिणः ॥ आसनं ॥ नभस्येशुक्लपंचम्यामर्चिताऋषिसत्तमाः ॥ पापंदहंतुमेसर्वंपाद्यंगृह्णंतुशोभनाः ॥ पाद्यं ॥ गंधपुष्पाक्षतोपेत
मर्घ्यंगृह्णीतभोद्विजाः ॥ प्रसादंकुरुतप्रीताःप्रणतस्यसदामम ॥ अर्घ्यं॥लोकानांतुष्टिकर्तारोयूयंसर्वेतपोधनाः ॥ नमोबोधर्मवि
ज्ञेभ्योगृह्णीताचमनंत्विदं ॥आचमनं ॥ मंदाकिनीगौतमीचयमुनाचसरस्वती॥नर्मदातुंगभद्राचताभ्यःस्नानंप्रगृह्यतां ॥ स्नानं
॥ पयोदधिघृतंचैवमधुशर्करयायुतं ॥ पंचामृतंमयादत्तमृषयःप्रतिगृह्यतां ॥पंचामृतं॥ गंधोदकं ॥ शुद्धोदकस्नानादिपूर्वपूजां
तेमहाभिषेकः ॥ यूयंसर्वेतपोनिष्ठाब्रह्मज्ञाःसत्यवादिनः ॥ वस्त्राणिप्रतिगृह्णंतुमुक्तिदाःसंतुमेसदा ॥ वस्त्राणि ॥ नानामंत्रैर्मंत्रि
तंचत्रिवृतंब्रह्मसूत्रकं॥प्रयच्छामिमुनिश्रेष्ठाःप्रत्येकंगृह्यतामिदं ॥ यज्ञोपवीतं ॥ मलयाचलसं० ॥ चंदनं ॥ रंजिताःकुंकुमौघेन
अक्षतास्तुसुशोभनाः ॥ गृह्णंतुममसंतुष्टाभवंतुमुनिसत्तमाः ॥ अक्षतान् ॥ कंठसूत्रंताडपत्रंहरिद्राकुंकुमांजनं ॥ सिंदूरालक्तकं

दास्येसौभाग्यद्रव्यमीश्वरि॥अरुंधत्यै०सौभाग्यद्रव्यं॥कस्तूर्याद्याश्रया०परिमलद्रव्यं॥माल्यादीनि०पुष्पाणि॥ अथपत्रपूजा॥ कश्यपायनमःतुलसीपत्रं॥अत्रये०अगस्ति०॥भरद्वाजाय०अपामार्ग०विश्वामित्राय० विल्व०॥ गौतमाय० अर्क०॥ जमदग्नये०दूर्वा०॥ वसिष्ठाय०शमी०॥ अरुंधत्यै० धत्तूर०॥वनस्पतिरसो०धूपं॥साज्यंचवर्ति०दीपं॥ नानापक्वान्नसंयुक्तंरसैःषड्भिः समन्वितं॥ गृह्णंतुऋषयःसर्वेनैवेद्यंवसुदायकाः॥नैवेद्यं॥ पूगीफलं० तांबूलं॥ इदंफलं०फलं॥हिरण्यगर्भ० दक्षिणां॥ कर्पूरपूरेण०नीराजनं॥यानिकानि०प्रदक्षिणां॥ नमोस्तुसुरवंद्येभ्योदेवर्षिभ्योनमोनमः॥ सर्वपापहराःसंतुवेदरूपाःसनातनाः॥ नमस्कारं॥कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः॥दमदग्निर्वसिष्ठश्चगृह्णंतुकुसुमांजलिं॥पुष्पांजलिं॥ ततोगंधाक्षतपुष्पफलयुतमर्घ्यंदद्यात्॥कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः॥जमदग्निर्वसिष्ठश्चसप्तैतेऋषयःस्मृताः॥ गृह्णंत्वर्घ्यंमयादत्तंतुष्टाभवंतुमेसदा(केचित्तु प्रत्येकमर्घ्यंददतितत्रार्घ्यमंत्राः॥कश्यपःसर्वलोकाद्यःसर्वभूतेषुसंस्थितः॥ नराणांपापनाशायऋषिरूपेणतिष्ठति॥कश्यपायनमःइदमर्घ्यंस०॥१॥ अत्रयेचनमस्तुभ्यंसर्वलोकहितैषिणे॥शुद्धरूपायसत्यायब्रह्मणेमिततेजसे॥ अत्रयेन०इदम०॥२॥ भरद्वाजनमस्तेस्तुसदाध्यानपरायण॥ महाजटिलधर्मात्मन्पातकंहरसर्वदा॥भरद्वाजाय० इदमर्घ्यं०॥३॥ विश्वामित्रनमस्तुभ्यंज्वलद्रूपमहाव्रत॥प्रत्यक्षीकृतगायत्रीतपोरूपेणसंस्थितः॥ विश्वामित्राय०इदमर्घ्यं०॥४॥ गौतमःसर्वलोकानांऋषीणांचमहाप्रियः॥ श्रौतानांकर्मणांचैवसंप्रदायप्रवर्तकः॥ गौतमाय० इदमर्घ्यं०॥५॥ जमदग्नेनमतुभ्यंमहातेजोमितद्युते॥ लोकेषुधर्मवृद्ध्यर्थंसर्वपापनिकृंतक॥ जमदग्नयेन० इदमर्घ्यं०॥ ६॥ नमस्तुभ्यंवसिष्ठायजटिलायमहात्मने॥धर्मरूपायसत्या

यलोकानांहितकारिणे ॥ वसिष्ठाय०इदमर्घ्यं० ॥७॥ अरुंधतिनमस्तुभ्यंवसिष्ठप्रियकारिणि ॥ पतिव्रतानांसर्वासांधर्मशीलप्र
वर्तके ॥ अरुंधत्यैन०इदमर्घ्यं०॥८॥) एतेसप्तर्षयःसर्वेभक्त्यासंपूजितामया ॥ सर्वेपापंव्यपोहंतुज्ञानतोज्ञानतःकृतं ॥ आवा
हनंन०प्रार्थना॥कृतव्रतस्यसांगतासिद्ध्यर्थंवायनप्रदानंकरिष्ये ॥ ब्राह्मणंसंपूज्य ॥ वायनंफलसंयुक्तंसघृतंदक्षिणायुतं ॥ द्विज
वर्यायदास्यामिव्रतसंपूर्तिहेतवे ॥ भवंतःप्रतिगृह्णंतुज्योतीरूपास्तपोधनाः ॥ न्यूनातिरिक्तकर्माणिमयायानिकृतानिहि॥क्षमध्वं
तानिसर्वाणियूयंसर्वेतपोधनाः ॥ विसर्जनं ॥ ततःकथांश्रुत्वाऽकृष्टभूम्युत्पन्नैःशाकैःश्यामाकैर्नीवारैर्वाहारंप्रकल्प्यऋषिध्या
नपराभवेत् ॥ इतिऋषिपंचमीपूजासमाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ४३ ॥ मुक्ताभरणसप्तमीपूजा ॥ भाद्रसप्तम्यांजलाशयेस्नात्वावाससीपरिधायगृहमेत्यमध्याह्नात्पूर्वमाचमनादिदेश
कालकीर्तनांतेममश्रीमदुमामहेश्वरप्रीतिद्वारासमस्तपापक्षयपूर्वकंदीर्घायुरनामयत्वपुत्रपौत्राद्यतुलसुखसौभाग्यसंपदभिवृद्धि
शिवलोकप्राप्त्याद्यभीष्टसिद्ध्यर्थंमुक्ताभरणव्रतांगत्वेनपूजांकरिष्ये॥गणेशपूजादिकृत्वापीठादौमंडलेउमयासहशिवंविलिख्यतद
ग्रेसौवर्णंराजतंसूत्रमयंवादोरकंनिधायदेवंपूजयेत् ॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदि
गंबरायनमःशिवायैचनमःशिवाय ॥ उमामहेश्वरौध्यायामि ॥ देवदेवमहेशानपरमात्मन्जगद्गुरो ॥ प्रतिपादितयासोमपूजया
पूजयाम्यहं ॥ उमामहेश्वराभ्यां आवाहनं ॥ अनेकरत्नखचितंसौवर्णमणिसंयुतं ॥ मुक्ताचितंमहादेवगृहाणासनमुत्तमं ॥ आ
सनं ॥ पाद्यंगृहाणदेवेशसर्वविद्यापरायण ॥ ध्यानगम्यसतांशंभोसर्वेश्वरनमोस्तुते ॥ पाद्यं ॥ इदमर्घ्यमनर्घ्यत्वममराधीशशं

कर ॥ किंकरीभूतयासोममयादत्तंगृहाणभोः ॥ अर्घ्यं ॥ गंगादिपुण्यतीर्थेभ्यःसमानीतंसुशीतलं ॥ जलमाचमनीयार्थंगृहाणे
शोमयासह ॥ आचमनं ॥ पुण्यतीर्थाहृतेनेशयत्नाच्छुद्धेनवारिणा ॥ स्नानंकुरुमहादेवशिवयाकांतयासह ॥ स्नानं ॥ मध्वाज्य
शर्करामिश्रसुधयापरिकल्पितं ॥ शंकरप्रीतयेतुभ्यंमधुपर्कंनिवेदये ॥ मधुपर्कं ॥ पयोदधिघृतंदेवमधुशर्करयायुतं ॥ पंचामृतं
मयादत्तंस्नानार्थंप्रति० ॥ पंचामृतं ॥ गंधोदकं ॥ पूर्वपूजामहाभिषेकांतेपीठेदेवंप्रतिष्ठाप्य ॥ स्नातस्यतेमहादेवप्रीत्यापापप्रणा
शन ॥ वस्त्रयुग्मंमयादत्तमहतंप्रतिगृह्यतां ॥ वस्त्रं ॥ उपवीतंसोत्तरीयंनानाभूषणभूषितं ॥ गृहाणसोमविमलंमयादत्तमिदंशु
भं ॥ उपवीतं ॥ मलयाचलसंभूतं० चंदनं ॥ अक्षताश्चसुर० अक्षतान् ॥ कंठसूत्रंताडपत्रं० सौभाग्यद्रव्यं ॥ कस्तूर्याद्याश्च
या० परिमलद्रव्यं ॥ माल्यादीनि० पुष्पाणि ॥ त्रैलोक्यपावनंतेद्यपरमात्मन्जगद्गुरो ॥ चंदनागुरुकर्पूरधूपंदास्यामिशंकर ॥
धूपं ॥ शुभवर्तियुतंसर्पिर्लोडितंवह्निनायुतं ॥ दीपमेकमनेकार्कप्रतिमंकलयेत्विमं ॥ दीपं ॥ पायसापूपकृसरंसुधारसगुडौदनं ॥
ददामिषड्रसंदिव्यंकिंकरीशंकरायते ॥ नैवेद्यं ॥ नारिकेलफलंजंबूद्राक्षानारिंगदाडिमं ॥ कूष्मांडंपुरतोभक्त्याकल्पितंप्रतिगृह्य
तां ॥ फलं ॥ पूगीफलं० तांबूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ कर्पूरपूरे० नीराजनं ॥ यानिकानि० प्रदक्षिणां ॥ महादेवनम
स्तुभ्यंप्रीत्यापापप्रणाशन ॥ अस्माभिस्तुकृतांपूजांसाधुवासाधुगृह्यतां ॥ नमस्कारं ॥ ज्ञानतोऽज्ञानतोवापिभवतोविहितात्र
या ॥ संपूरयसपर्यांतांविश्वेशसकलस्तुत ॥ पुष्पांजलिं ॥ मंत्रहीनं० प्रार्थनं ॥ देवदेवमहादेवसर्वसौभाग्यदायक ॥ गृह्णीयां
दोररूपंत्वांपुत्रपौत्रप्रवर्धनं ॥ दोरकग्रहणं ॥ सप्तसामोपगीतंत्वांचराचरजगद्गुरो ॥ सूत्रग्रंथिस्थितंहस्तेधारयामिस्थिरोभव ॥


॥ ४२ ॥

दोरकबंधनं ॥ हरपापानिसर्वाणितुष्टिंकुरुदयानिधे ॥ प्रसीदत्वमुमाकांतदीर्घायुःपुत्रदोभव ॥ इतिजीर्णदोरकमुत्तार्यसंपूज्यवि
प्रायदत्वाव्रतसंपूर्त्यैवायनंदद्यात् ॥ उपायनमिदं० ॥ शंकरःप्रतिगृह्णातिशंकरोवैददातिच ॥ शंकरस्तारकोस्माकंशंकरायनमो
नमः ॥ इतिमंत्रेणैकादशमंडकान्वेष्टकान्वासघृतान्दत्वास्वयंभुंजीत ॥ इतिमुक्ताभरणसप्तमी ॥ छ ॥ ॥ छ ॥
॥४४॥ ज्येष्ठागौरीपूजा ॥ पूजादिनात्पूर्वेद्युर्यथाचारंपटभित्तिलिखितमूर्तिंषुहेमादिप्रतिमासुपुस्तकेपुनद्याद्याहृतसिकता
सुवाज्येष्ठावाहनादिकृत्वारात्रौगीतादिनाजागरोत्सवःकार्यः॥आचम्यदेशकालौनिर्दिश्य ममश्रीज्येष्ठागौरीप्रीतिद्वाराविविध
वंध्यात्वदारिद्र्यादिसकलदोषनिरासपूर्वकंपुत्रपौत्राभिवृद्धिस्थिरसौभाग्यमहैश्वर्याद्यभीष्टसिद्ध्यर्थंज्येष्ठादेव्याआवाहनं तदंगत्वे
नपूजनंचकरिष्ये ॥ संभारप्रोक्षणांते ॥ एह्येहित्वंमहाभागेसुरासुरनमस्कृते ॥ ज्येष्ठेत्वंसर्वदेवेशिमत्समीपेसदाभव ॥ इतिमंत्रेणा
वाह्यपूजयेत् ॥ परेद्युर्देशकालौ० ज्येष्ठादेव्याःपूजनंकरिष्ये ॥ त्रिलोचनांशुक्लदंतींविभ्रतींराजतींतनुं ॥ विरक्तांरक्तनयनांज्ये
ष्ठांवैचिंतयाम्यहं ॥ इतिध्यात्वा ॥ पुत्रदारविवृद्ध्यर्थंलक्ष्म्याश्चैवविवृद्धये ॥ अलक्ष्म्याश्चविनाशायज्येष्ठेत्वामर्चयाम्यहमिति ॥
ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ॥ शर्वाण्यैतेनमस्तुभ्यंशांकर्यैतेनमोनमइतिमंत्रेणावाहनादिभिःपूजयेत्॥यद्वा—श्वेतासिं
हासनस्थातुश्वेतवस्त्रैरलंकृता॥वरंचपुस्तकंपाशंविभ्रत्यैतेनमोनमः ॥ आसनं ॥ ज्येष्ठेदेविनमस्तुभ्यंश्रेष्ठेदेविनमोनमः ॥ समु
द्रमथनोत्पन्नेगृह्यतांपाद्यमुत्तमं ॥ पाद्यं॥श्रीखंडकर्पूरयुतंनानापुष्पैःसुवासितं॥गृहाणार्घ्यंमयादत्तंज्येष्ठेदेविनमोनमः ॥ अर्घ्यं ॥
निर्मलंसलिलंगांगंश्रीज्येष्ठेवरदायिनि ॥ वासितंचसुगंधैस्तुगृहाणाचमनीयकं ॥ आचमनं ॥ नानातीर्थसमानीतंसुगंधिजलमु

त्तमं ॥ स्वर्णकुंभेनदेवेशिस्नानार्थंप्रति० ॥ स्नानं ॥ पयोदधिघृतंदेविमधुशर्करयायुतं॥पंचामृतंमयानीतंस्नानार्थंप्रतिगृ० ॥ पंचामृतं ॥ गंधोदकं ॥ गंधादिपूर्वपूजांतेमहाभिषेकः ॥ श्वेतवस्त्रसमायुक्तंक्षौमंकंचुकसंयुतं ॥ गृह्यतांचसुरश्रेष्ठेज्येष्ठेदेविनमो नमः ॥ वस्त्रं कंचुकंच ॥ मलयाचलसं० चंदनं ॥ अलंकारार्थे अक्षतान् ॥ सौभाग्यद्रव्याणि ॥ केतकीपाटलीजातिमल्लिकाचंप कानिच ॥ पद्मादीनिसुगंधीनिपुष्पाणिप्रतिगृह्यतां ॥ पुष्पाणि ॥ वनस्पति० धूपं ॥ साज्यंचवर्तिं० दीपं ॥ भक्त्यामयाप्रयत्नेन यदन्नंदीयतेतव॥तद्गृहाणसुरेशानिज्येष्ठेश्रेष्ठेनमोनमः ॥ पूरिकादिनैवेद्यं ॥ इदंफलं० फलं ॥ पूगीफलं० तांबूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ चंद्रादित्यौ० नीराजनं ॥ यानिकानि० प्रदक्षिणां ॥ ज्येष्ठायैते० ॥ विप्रप्रियेमहामायेसुरासुरसुपूजिते ॥ स्थूलसूक्ष्म मयेदेविज्येष्ठेत्वामर्चयाम्यहं ॥ नमस्कारं ॥ शार्ङ्गबाणाब्जखड्गारिप्रासतोमरमुद्गरैः ॥ अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं ॥ पुष्पांजलिं ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि ॥ प्रसीदत्वंमहामायेगृहाणार्घ्यंसरस्वति ॥ विशेषार्घ्यं ॥ त्वंलक्ष्मीस्त्वमु मादेवीत्वंज्येष्ठेसर्वदामरैः ॥ पूजितासिमयादेविवरदाभवमेसदा ॥ प्रार्थनं ॥ ततोविप्रेभ्योऽपूपान्दत्वास्वयंहविष्याशनपूर्वकं ब्रह्मचर्यंकुर्यात् ॥ तृतीयदिनेतुज्येष्ठादेव्याविसर्जनंकर्तुंतदंगत्वेनपंचोपचारैःपूजनं ॥ पूजांतेप्रार्थ्य ॥ ज्येष्ठेदेविसमुत्तिष्ठस्वस्था नंगच्छपूजिता ॥ ममाभीष्टप्रदानार्थंपुनरागमहेतवे ॥ इतिविसृज्यनद्यादौक्षिपेत् ॥ इतिज्येष्ठागौरीपूजा ॥ ॥ छ ॥

॥४५॥ अदुःखनवमीपूजा ॥ व्रतदिनेप्रातर्नद्यादौस्नात्वानित्यविधिंसमाप्यमौनीगृहमेत्याचमनादिदेशकालकथनांते मश्रीगौरीप्रीतिद्वारानिखिलदुःखोपशमपूर्वकंपुत्रपौत्रचिरजीवनसुखसौभाग्यादिकल्पोक्तफलसिध्यर्थं अदुःखनवमीव्रतांगपू

जनंक०॥गणेशपूजादिसंभारप्रोक्षणांतेगोमयोपलिप्तेशुद्धेदेशेमंडपिकांविधायरंगद्रव्येणभित्तिमालिप्यधूपयित्वा तत्रस्थापित
कलशोपरिपूर्णपात्रेगौरींपूजयेत्॥ दिव्यपात्रधरांदेवींविभूतिंचत्रिलोचनां॥ दुग्धान्नदाननिरतांगौरींत्वांचिंतयाम्यहं॥ ध्यानं॥
गौरींदुःखहरांदेवींशिवस्याधांगसंगिनीं॥सुनीलवस्त्रसंयुक्तांभक्त्यात्वावाहयाम्यहं॥ आवाहनं॥ प्रसन्नवदनेमातर्नित्यंदेवार्षिसं
स्तुते॥ मयाभावेनतेदत्तमासनंप्रतिगृह्यतां॥ आसनं॥ सर्वतीर्थाहृतंशुद्धंसर्वभूतोपजीवनं॥ मयादत्तंतुपानीयंपाद्यार्थंप्रतिगृ
ह्यतां॥ पाद्यं॥ गंगादिपुण्यतीर्थेभ्योमयानीतंसुनिर्मलं॥ गंधपुष्पाक्षतोपेतंगृहाणार्घ्यंसुरेश्वरि॥ अर्घ्यं॥ कर्पूरागुरुसंमिश्रंनि
र्मलंशिशिरंजलं॥ एलोशीरयुतंदेविगृहाणाचमनीयकं॥ आचमनं॥ प्रभासाद्यानितीर्थानिगंगाद्याश्चसरिद्वराः॥ प्राद्यानीतं
जलंदेविस्नानार्थंप्रतिगृह्यतां॥ स्नानं॥ पंचामृतंमहादेविपयोदधिघृतंमधु॥ शर्करासहितंभक्त्यादत्तंदेविगृहाणमे॥ पंचामृतं
गंधोदकं शुद्धोदकंच॥ पूर्वपूजांतेमहाभिषेकः॥ सर्वभूषाधिके० ॥ वस्त्रं कंचुकंच॥ श्रीखंडं०॥ चंदनं॥ अक्षतान्॥ सौभा
ग्यद्रव्यं॥ भूषणानि॥ माल्यादीनि० पुष्पाणि॥ अथांगपूजा॥ गौर्यैनमः पादौपूजयामि॥ धात्र्यै० जानुनी०॥ शिवायै०
ऊरू०॥ भद्रायै० कटी०॥ उमायै० स्तनौ०॥ दुर्गायै० कंठं०॥ काल्यै० बाहू०॥ अंबिकायै० मुखं०॥ भवान्यै०नेत्रे०॥
रुद्राण्यै० शिरः०॥ शर्वाण्यै० सर्वांगंपू०॥ वनस्पति० धूपं॥ साज्यंच० दीपं॥ शर्कराखंड० नैवेद्यं०॥ इदंफलं० फलं॥
पूगीफलं० तांबूलं॥ हिरण्यगर्भ०दक्षिणां॥ चंद्रादित्यौ०नीराजनं॥ यानिकानि० प्रदक्षिणां॥ नमोदेव्यै० नमस्कारं॥ जयं
तीमंगला०पुष्पांजलिं॥ आवाहनंन० प्रार्थनं॥ ततोविप्रंसंपूज्यतस्मैपक्वान्नफलयुतंवायनं उपायनमिदंतुभ्यमितिदत्वाकथां

श्रुत्वागौरींध्यायन्नुपवसेत् ॥ अशक्तौत्वहिंसितकेवलगलितफलाहारं पयःपानं हविष्याशनंवाकुर्यात् ॥ रात्रिंनृत्यगीतादिनानी त्वाप्रातर्नित्यकर्मांतेदेवींसंपूज्यसपत्नीकान्विप्रान्संभोज्य ॥ स्कंदमातर्नमस्तुभ्यंदुःखव्याधिविनाशिनि ॥ उत्तिष्ठयाहिभवनंवर दाभवपार्वति ॥ इतिदेवींविसृज्याचार्यायदक्षिणांदद्यात् ॥ इतिअदुःखनवमी ॥ ॥ छ ॥ ॥ छ ॥

॥ ४६ ॥ वामनद्वादशीपूजा ॥ कर्ताप्रातर्नद्यादौगत्वाकरिष्यमाणवामनजयंतीव्रतांगत्वेनसंगमस्नानंकरिष्ये ( आयुर्बलं० मुखदौर्गंध्य० ) इत्यादि यथाचारंदंतधावनंकृत्वा॥संगमस्तीर्थराजोसिसंगमःसरितांपतिः ॥ स्नानार्थंत्वांप्रपन्नोस्मिप्रसादंकुरुसंगम ॥ संगमप्रार्थनं ॥ यावैश्रवणसंयुक्ताद्वादशीपरमातिथिः ॥ तस्यांतुसंगमेस्नास्येसर्वपापविमुक्तये ॥ वरोवरेण्योवरदोवराहोधरणीधरः॥अपवित्रंपवित्रंमांकरोतुभगवान्हरिः ॥ इतिस्नात्वा ॥ करकंपूरयिष्यामिसरितांसंगमेजलैः ॥ पंचरत्नसमायुक्तंतेनतुष्यतुवामनः ॥ करकपूरणं ॥ पर्जन्योवरुणःसूर्यःसलिलंकेशवःशिवः ॥ त्वष्टायमोवैश्रवणःपापंहरतुमेसदा ॥ शिक्यस्थापनं ॥ अन्नंप्रजापतिर्विष्णुरुद्रेंद्रशशिभास्कराः ॥ अग्निर्वायुर्यमस्त्वष्टापापंहरतुमेसदा ॥ शिक्येदधिभक्तस्थापनं ॥ संभारानादायमध्याह्नात्परंपूजनं ॥ ॥ आचम्यदेशकालौस्मृत्वाममश्रीवामनप्रीतिद्वारासकलपापक्षयपूर्वकंरूपसौभाग्यमहैश्वर्यसुखसमृद्धिपित्रर्णविमुक्त्युभयकुलोद्धरणविष्णुसालोक्यादिकल्पोक्तफलसिद्ध्यर्थेवामनजयंतीव्रतंकरिष्ये ॥ तदंगत्वेनयथाशक्तिपूजनंचक० ॥ गणेशपूजादिसंभारप्रोक्षणांतेपीठादौकुंभंसंस्थाप्यतदुपरिस्वर्णरजतदारुवंशान्यतमनिर्मितेआढकमितैस्तिलैर्यवैर्गोधूमैर्वापूरितेऽहतवस्त्रकृष्णाजिनवेष्टितेपूर्णपात्रेहैमप्रतिमायांवामनंशक्तितःपार्श्वस्थितदंडकमंडलुछत्रपादुकाक्षमालाद्यु

पस्करयुतंपूजयेत्॥शांताकारंभुजग०॥अजिनदंडकमंडलुमेखलारुचिरपावनवामनमूर्तये ॥ मितजगत्रितयायजितारयेनिगम
वाक्पटवेबटवेनमः ॥ ध्यानं ॥ सहस्रशीर्षा०॥ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितः ॥ मायावीवामनःश्रीशःसोऽत्रायातुजगत्प
तिः ॥ आवाहनं ॥ पुरुषएवेदं० ॥ सुवर्णमणिसंयुक्तंमयाभक्त्याप्रकल्पितं ॥ सिंहासनमिदंदिव्यंगृह्यतांवामनप्रभो॥आसनं॥
एतावानस्य०॥गंगोदकंसमानीतंसुवर्णकलशेस्थितं॥वासितंपुष्पगंधैश्चपाद्यंमेप्रतिगृह्यतां॥पाद्यं ॥ त्रिपादूर्ध्व० ॥ गंधपुष्पफलै
र्युक्तंहेमपात्रेनिवेशितं ॥ स्वर्गंगासलिलंपुण्यमर्घ्यंस्वीकुरुकेशव॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ कर्पूरवासितंतोयंमंदाकिन्याःसमा
हृतं ॥ आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ॥ आचमनं ॥ यत्पुरुषेण० गंगासरस्वतीरेवापयोष्णीयमुनाजलैः ॥ स्नापितो
सितमयादेवतथाशांतिंकुरुष्वमे॥स्नानं॥आप्ययस्वेत्यादिभिः ॥ पंचामृतंमयानीतंपयोदधिघृतंमधु ॥ शर्करांपरयाभक्त्यास्ना
नार्थंप्रतिगृह्यतां ॥ पंचामृतं ॥ चारुगंधोदकंशीतंकर्पूरागुरुचंदनैः ॥ एलोशीरादिसंमिश्रंस्नानीयंगृह्यतांहरे ॥ गंधोदकं ।
गंधादिपूर्वपूजांतेमहाभिषेकः॥तंयज्ञंबर्हिषि० ॥ नमःकमलकिंजल्कपीतनिर्मलवाससे ॥ महाहवरिपुस्कंधघृष्टचक्रायचक्रिणे ॥
वस्त्रं ॥ तस्माद्यज्ञा० ॥ दामोदरनमस्तेस्तुत्राहिमांभवसागरात् ॥ उपवीतंसोत्तरीयंगृहाणपुरुषोत्तम ॥ उपवीतं ॥ तस्माद्यज्ञात्सं
र्वं०॥मलयाचलसंभूतं० चंदनं ॥ अक्षतान् ॥ अहिरिव० परिमलद्रव्यं॥तस्मादश्वा० माल्यादीनि०पुष्पाणि ॥ अथांगपूजा॥
वामनायनमःपादौपू०॥दामोदराय०जंघे०॥श्रीपतये०ऊरू० ॥ कामदेवाय० गुह्यं० ॥ जगत्पतये०नाभिं० ॥ विश्वधारिणे०
उदरं०॥योगिनाथाय० हृदयं० ॥ श्रीधराय० कंठं ॥ पंकजास्याय०मुखं ॥ सर्वात्मने० शिरः० ॥ यत्पुरुषं० वनस्पति० धूपं०॥

ब्राह्मणोस्य॰त्वमेवपृथिवीज्योतिर्वायुराकाशमच्युत॥त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां॥दीपं ॥ चंद्रमामनसो॰ ॥ अन्नं चतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्त्यानिवेदितंतुभ्यं॰ नैवेद्यं ॥ इदंफलं॰ फलं ॥ पूगीफलं॰ तांबूलं ॥ हिरण्यगर्भ॰दक्षिणां॥श्रियेजातः॰॥नीराजनंसुमंगल्यंकर्पूरोद्भासितंविभो॥चंद्रार्कवह्निसदृशंवामनप्रतिगृह्यतां ॥ नीराजनं ॥ नाभ्याआसी॰ ॥ नमोवामनरूपायनमस्तेस्तुत्रिविक्रम॥नमस्तेबलिबंधायवासुदेवनमोस्तुते॥नमस्कारं॥सप्तास्यासन्॰ यानिकानि॰प्रदक्षिणां ॥ यज्ञेनयज्ञ॰ ॥ मत्स्यंकूर्मंवराहंचनरसिंहंचवामनं ॥ रामंरामंचकृष्णंचअर्चयामिनमोनमः॥ पुष्पांजलिं ॥ नमस्तेपद्मनाभायनमस्तेजलशायिने ॥ तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे ॥ विशेषार्घ्यं ॥ जगदादिर्जगद्रूपोह्यनादिर्जगदंतकृत् ॥ जलाशयोजगद्योनिःप्रीयतांमेजनार्दनः ॥ नमोनमस्तेगोविंदभुवनेशत्रिविक्रम॥अघौघसंक्षयंकृत्वासर्वकामप्रदोभव ॥ मंत्रहीनं॰ प्रार्थनं ॥ एवंसंपूज्यगीतादिमंगलैरात्रौजागरित्वा प्रातर्नित्यकर्मांतेदेवंसंपूज्यविसृज्यविप्रंसंपूज्य शिक्यस्थजलकलशयुतंसोपस्करंतंदद्यात् ॥दानमंत्रः॥वामनंसर्वतोभद्रंद्विजायप्रतिपादये॥प्रीयतांतेनदेवेशोममनित्यंजनार्दनः॥ग्रहणमंत्रः ॥ वामनोबुद्धिदोदाताद्रव्यस्थोवामनःस्वयं ॥ वामनोस्यप्रतिग्राहीवामनायनमोनमः ॥ ततस्त्रीन्विप्रान्पृषदाज्यदध्योदनयुतान्नेनसंभोज्यकर्मसमाप्य स्वयंभुंजीत॥अथवा वाचकायप्रतिमावस्त्रादिदत्वावामनप्रीत्यर्थंब्रह्मचारिणंसंभोज्यतस्मैदंडच्छत्रोपानहशिक्यादिदद्यात् ॥ मंत्रस्तु॥दध्योदनयुतंशिक्यंवारिधानीयुतंविभो ॥ छत्रोपानहसंयुक्तंब्राह्मणायददाम्यहं ॥ एवंद्वादशवर्षंकृत्वोद्यापनंकुर्यात् ॥

॥ ४७ ॥ अनंतचतुर्दशीपूजा ॥ आचमनादिदेशकालौस्मृत्वाममसकुटुंबस्यक्षेमस्थैर्यायुरारोग्याद्यभिवृद्ध्यर्थंगजाश्वल

क्ष्मीप्राप्त्यर्थंसमस्तपापक्षयार्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमदनंतप्रेरणयाश्रीमदनंतप्रीत्यर्थंमयास्वीकृतस्यचतु
र्दशवर्षविधेयस्यानंतव्रतस्यमयियथावत्प्रतिष्ठासिद्ध्यर्थंप्रतिवर्षविहितंयथाशक्तियथाज्ञानेनयथामिलितोपचारैःपुरुषसूक्तेनश्री
सूक्तेनपुराणोक्तमंत्रैःमूलमंत्रेणचषोडशोपचारैरनंतपूजनमहंकरिष्ये॥(अथवा ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्री
मदनंतपूजांकरिष्येइतिसंकल्प्य)तदंगत्वेनशरीरशुद्ध्यर्थंभूशुद्ध्यादिपुरुषसूक्तादिन्यासान् कलशार्चनादिचकरिष्ये॥पृथ्वित्वये
त्यादि॰मनुज्ञांदातुमर्हसीतिभैरवाज्ञांगृहीत्वावामपादेनभूमिंत्रिस्ताडयेत् ॥ देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंर
क्षस्वेतिभूमौप्रादेशंकृत्वान्यसेत् ॥ तद्यथा ॥ करपज्जानुकटिपुनाभिहृत्कंठबाहुषु ॥ मुखाक्ष्णोर्मस्तकेचैववामादौपौरुषंन्यसेत् ॥
एवंपुरुषसूक्तन्यासः ॥ अथश्रीसूक्तन्यासः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयःश्रीर
ग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याबृहती व्यंजनानिबीजानि
स्वराःशक्तयः बिंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेंश्रीसूक्तन्यासेविनियोगः ॥ हिरण्यवर्णां॰ मूर्ध्नि ॥ तांम
आवह॰ नेत्रयोः ॥ अश्वपूर्वां॰ कर्णयोः ॥ कांसोस्मितां॰ नासिकायां ॥ चंद्रांप्रभासां॰ मुखे ॥ आदित्यवर्णे॰कंठे ॥ उपै
तुमां॰ ॥ बाह्वोः ॥ क्षुत्पिपासा॰ हृदये ॥ गंधद्वारां॰ नाभौ ॥ मनसःकाम॰ गुह्ये ॥ कर्दमेन॰ अपाने ॥ आपःस्रजंतु॰
ऊर्वोः ॥ आर्द्रांयःकरिणीं॰ जान्वोः ॥ आर्द्रांपुष्करिणीं॰ जंघयोः ॥ तांमआवह॰ पादयोः ॥ यःशुचिःप्र॰ सर्वांगे ॥ अथां
गुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायै॰ तर्जनीभ्यां॰ ॥ रजतस्रजायै॰ मध्यमाभ्यां॰ ॥ चंद्रायै॰

ब्राह्मणोस्य० त्वमेवपृथिवीज्योतिर्वायुराकाशमच्युत॥त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां॥दीपं ॥ चंद्रमामनसो० ॥ अन्नं चतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्त्यानिवेदितंतुभ्यं० नैवेद्यं ॥ इदंफलं० फलं ॥ पूगीफलं० तांबूलं ॥ हिरण्यगर्भ० दक्षिणां॥श्रियेजातः०॥नीराजनंसुमंगल्यंकर्पूरोद्भासितंविभो॥चंद्रार्कवह्निसदृशंवामनप्रतिगृह्यतां ॥ नीराजनं ॥ नाभ्याआसी० ॥ नमोवामनरूपायनमस्तेस्तुत्रिविक्रम॥नमस्तेबलिबंधायवासुदेवनमोस्तुते॥नमस्कारं॥सप्तास्यासन्० यानिकानि०प्रदक्षिणां ॥ यज्ञेनयज्ञ० ॥ मत्स्यंकूर्मंवराहंचनरसिंहंचवामनं ॥ रामंरामंचकृष्णंचअर्चयामिनमोनमः॥ पुष्पांजलिं ॥ नमस्तेपद्मनाभायनमस्तेजलशायिने ॥ तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे ॥ विशेषार्घ्यं ॥ जगदादिर्जगद्रूपोह्यनादिर्जगदंतकृत् ॥ जलाशयोजगद्योनिःप्रीयतांमेजनार्दनः ॥ नमोनमस्तेगोविंदभुवनेशत्रिविक्रम॥अघौघसंक्षयंकृत्वासर्वकामप्रदोभव ॥ मंत्रहीनं० प्रार्थनं ॥ एवंसंपूज्यगीतादिमंगलैरात्रौजागरित्वा प्रातर्नित्यकर्मांतेदेवंसंपूज्यविसृज्यविप्रंसंपूज्य शिक्यस्थजलकलशयुतंसोपस्करंतंदद्यात् ॥दानमंत्रः॥वामनंसर्वतोभद्रंद्विजायप्रतिपादये॥प्रीयतांतेनदेवेशोममनित्यंजनार्दनः॥ग्रहणमंत्रः ॥ वामनोबुद्धिदोदाताद्रव्यस्थोवामनःस्वयं ॥ वामनोस्यप्रतिग्राहीवामनायनमोनमः ॥ ततस्त्रीन्विप्रान्पृषदाज्यदध्योदनयुतान्नेनसंभोज्यकर्मसमाप्य स्वयंभुंजीत॥अथवा वाचकायप्रतिमावस्त्रादिदत्वावामनप्रीत्यर्थंब्रह्मचारिणंसंभोज्यतस्मैदंडच्छत्रोपानहशिक्यादिदद्यात् ॥ मंत्रस्तु॥दध्योदनयुतंशिक्यंवारिधानीयुतंविभो ॥ छत्रोपानहसंयुक्तंब्राह्मणायददाम्यहं ॥ एवंद्वादशवर्षंकृत्वोद्यापनंकुर्यात् ॥

॥ ४७ ॥ अनंतचतुर्दशीपूजा ॥ आचमनादिदेशकालौस्मृत्वाममसकुटुंबस्यक्षेमस्थैर्यायुरारोग्याद्यभिवृद्ध्यर्थंगजाश्वल

क्ष्मीप्राप्त्यर्थंसमस्तपापक्षयार्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमदनंतप्रेरणयाश्रीमदनंतप्रीत्यर्थंमयास्वीकृतस्यचतु
र्दशवर्षविधेयस्यानंतव्रतस्यमयियथावत्प्रतिष्ठासिद्ध्यर्थंप्रतिवर्षविहितंयथाशक्तियथाज्ञानेनयथामिलितोपचारैःपुरुषसूक्तेनश्री
सूक्तेनपुराणोक्तमंत्रैःमूलमंत्रेणचषोडशोपचारैरनंतपूजनमहंकरिष्ये॥(अथवा ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्री
मदनंतपूजांकरिष्येइतिसंकल्प्य)तदंगत्वेनशरीरशुद्ध्यर्थंभूशुद्ध्यादिपुरुषसूक्तादिन्यासान् कलशार्चनादिचकरिष्ये॥पृथ्वित्वये
त्यादि०मनुज्ञांदातुमर्हसीतिभैरवाज्ञांगृहीत्वावामपादेनभूमिंत्रिस्ताडयेत् ॥ देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंर
क्षस्वेतिभूमौप्रादेशंकृत्वान्यसेत् ॥ तद्यथा ॥ करपज्जानुकटिपुनाभिहृत्कंठबाहुषु ॥ मुखाक्ष्णोर्मस्तकेचैववामादौपौरुषंन्यसेत् ॥
एवंपुरुषसूक्तन्यासः ॥ अथश्रीसूक्तन्यासः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयःश्रीर
ग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याबृहती व्यंजनानिबीजानि
स्वराःशक्तयः बिंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेविनियोगः ॥ हिरण्यवर्णां० मूर्ध्नि ॥ तांम
आवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितां० नासिकायां ॥ चंद्रांप्रभासां० मुखे ॥ आदित्यवर्णे०कंठे ॥ उपै
तुमां० ॥ बाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥ मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु०
ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं० जंघयोः ॥ तांमआवह० पादयोः ॥ यःशुचिःप्र० सर्वांगे ॥ अथां
गुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायै० तर्जनीभ्यां० ॥ रजतस्रजायै० मध्यमाभ्यां० ॥ चंद्रायै०

अनामिकाभ्यां० ॥ हिरण्मयायै० कनिष्ठिकाभ्यां० ॥ लक्ष्म्यै० करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ केशवायनमःशिरसि ॥ नारायणाय०मुखे ॥ माधवाय०भुजयोः ॥ गोविंदाय० कंठे ॥ विष्णवे० पृष्ठे ॥ मधुसूदनाय० कुक्षौ ॥ त्रिविक्रमाय० कट्योः ॥ वामनाय० जंघयोः ॥ श्रीधराय० वामगुल्फे ॥ हृषीकेशाय० दक्षिणगुल्फे ॥ पद्मनाभाय० वामपादे ॥ दामोदराय० दक्षिणपादे ॥ १२ ॐनमोभगवतेवासुदेवायेतिमूलमंत्रेणषडंगोहृदयादिः ॥ ततः ॐ नमोभगवतेवासुदेवायेतिहृदयायनमः ॥ ॐ नमोनारायणायशिरसेस्वाहा ॥ ॐ नमोविष्णवेशिखायैवषट् ॥ ॐ नमोवामनायकवचायहुम् ॥ ॐनमःकेशवायनेत्रत्रयायवौषट् ॥ ॐनमोनृसिंहायअस्त्रायफट् ॥ ॐभूर्भुवःस्वरोमितिदिग्बंधः ॥ कलशस्येत्यादिमंत्रैःकलशपूजनं शंखंचंद्रार्कदैवत्यमित्यादिभिःशंखपूजांचकुर्यात् ॥ आगमार्थंतु० इतिमंत्रेणघंटानादंकुर्यात् ॥ अपवित्रःपवित्रोवा०गायत्र्या आत्मानंपूजाद्रव्याणिचप्रोक्षेत् ॥ येभ्योमाता०एवापित्रे०॥स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनदेवेस्मिन्संनिधोभव ॥ प्राङ्मुखोदेवममसंमुखोवरदोभव ॥ पूर्वोच्चरितएवंगुणविशेषण० श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीमदनंताराधनांगत्वेनयमुनापूजांकरिष्ये ॥ अथध्यानं ॥ क्षीरोदार्णवसंभूतेइंद्रनीलसमप्रभे ॥ त्रैलोक्यवंदितेदेविविष्णुरूपेनमोस्तु ते ॥ श्रीयमुनां ध्यायामि ॥ ॐहिरण्यवर्णा०॥सर्वतीर्थमयेदेवियमज्येष्ठेयशस्विनि ॥ आदित्यदुहितर्मातर्यमुनायैनमोस्तुते॥ यमुनांआवाहयामि ॥ ॐतांमआवह० ॥ कृष्णवेणिनमस्तुभ्यंकृष्णवर्णेसुलक्षणे ॥ सर्वसौभाग्यदेदेवियमुनायैनमोस्तुते॥यमुनायै० आसनं० ॥ ॐअश्वपू० ॥ वेदपादेनमस्तुभ्यंसर्वलोकहितप्रदे ॥ सर्वपापप्रशमनितुंगायैतेनमोस्तुते ॥ यमुनायै०पा

॥ ४७ ॥ ॥ ४८ ॥

र्घ्यं०॥ॐ कां॒सो॒स्मि॒तां०॥कृष्णेकृष्णांगसंभूतेजंतूनांपापहारिणि॥नमस्तेसरितांश्रेष्ठेगृहाणार्घ्यंनमोस्तुते ॥ यमुनायै० अर्घ्यं० ॥
ॐचं॒द्रांप्र॒भा॒सां० ॥ आत्मज्योतिर्नमोदेविसर्वानुग्रहकारिणि ॥ स्वधर्मनिरतेदेविगृहाणाचमनीयकं॥यमुनायै०आचमनीयं० ॥
ॐआ॒दि॒त्यव॑र्णे॒तप॒सो० ॥ गंगागोदावरीरेवापयोष्णीचसरिद्वरा ॥ कृष्णाचतुंगभद्राचस्नानार्थंतेनिवेदिताः॥ यमुनायै०शुद्धो
दकस्नानं० ॥ सर्वमंगलकार्यार्थंप्रधानत्वेनचार्चितं ॥ मधुपर्कंगृहाणेमंदेवेशित्वंप्रसीदमे ॥ यमुनायै० मधुपर्कं० ॥ कृष्णपा
दाब्जसंभूतेगंगेत्रिपथगामिनि ॥ जटाजूटेनमस्तुभ्यंभागीरथ्यैनमोस्तुते ॥ यमुनायै० मलापकर्षस्नानं० ॥ स्नानंपंचामृतंदेवि
गृहाणसरितोत्तमे ॥ अनाथनाथेसर्वज्ञेसर्वकामप्रदाभव ॥ पंचामृतस्नानं० ॥ सौरभेयीसमुत्पन्नंदेवपिंपितृतृप्तिदं ॥ स्नानार्थं
तेपयोदेविगृहाणसरितोत्तमे ॥ यमुनायै० पयःस्नानं० ॥ चंद्रमंडलसंकाशंसर्वदेवप्रियंदधि ॥ स्नानार्थंसरितांश्रेष्ठेगृहाणत्वं
नमोस्तुते ॥ यमुनायै० दधिस्नानं० ॥ सर्पिषाचमहादेविस्नपनंक्रियतेमया ॥ गृहाणशुद्धयादत्तंयमुनायैनमोनमः ॥ यमु०
घृतस्नानं० ॥ इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच ॥ गृहाणसरितांनाथेयमुनायैन० ॥ यमुना० मधु० ॥ सितयादेवदेवेशिस्नप
नंक्रियतेमया ॥ संगृहाणजगन्नाथेयमुनायैन० ॥ यमुनायै० शर्करा० ॥ आपोहिष्ठेतिशुद्धोदकेनसंस्नाप्य ॥ गंधाक्षतपुष्पाणि
समर्प्यश्रीसूक्तेनमहाभिषेकः ॥ ॐउपैतुमां० ॥ सिंहासनसमारूढेदेविभक्तजनप्रिये ॥ सर्वलक्षणसंपूर्णंवस्त्रयुग्मंगृहाणमे ॥ यमु
नायै० वस्त्रं० ॥ गोदावरिनमस्तुभ्यंसर्वाभीष्टप्रदायिनि ॥ सर्वसौभाग्यदेदेविगृहाणकंचुकींशुभां ॥ यमु० कंचुकीं० ॥ ॐ
क्षुत्पि॒पा॒सा०॥नंदिपादेनमस्तेस्तुशंकरप्रियवल्लभे ॥ कंठसूत्रंसोत्तरीयंगृहाणवरदाभव ॥ यमु० कंठसूत्रं० ॥ मणिमुक्ताफलैर्हारै

नूपुरैर्बाहुभूषणैः ॥ मुकुटाद्यैश्चसर्वैश्चभूषयेहंजनप्रिये०॥यमु० भूषणानि० ॥ ॐगंधद्वारां० ॥ चंदनागरुकस्तूरीरोचनंकुंकुमं तथा ॥ कर्पूरादिसमायुक्तंचंदनंप्रतिगृह्यतां ॥ यमुनायै० चंदनं० ॥ यमुनायैनमस्तुभ्यंसर्वाभीष्टप्रदायिनि ॥ सर्वसौभाग्य देदेविहरिद्राद्यंगृहाणमे ॥ यमुनायै० हरिद्रां० ॥ कुंकुमंकांतिदंदिव्यंकामिनीकामसंभवं ॥ कुंकुमेनार्चितेदेवियमुनेप्रतिगृह्य तां ॥ यमु० कुंकुमं० ॥ कालिकेकृष्णवर्णेत्वंसुभगेशक्तितारके ॥ अक्षिभ्यांकज्जलंदत्तंगृहाणपरमेश्वरि ॥ यमु० कज्जलं० ॥ कालरात्रिनमस्तुभ्यंनमस्तुभ्यंमहाबले॥ ताडपत्रंमयादत्तंगृहाणपरमेश्वरि ॥ यमुनायै० ताडपत्रं० ॥ अहिरिवभोगैः०॥कस्तू र्याद्याश्चयेगंधाभोगार्थंतेमयाहृताः ॥ अनेकगंधसंयुक्ताःप्रीत्यर्थंप्रतिगृह्यतां॥ यमुनायै० परिमलद्रव्यं ॥ अक्षताःपरमादिव्याः सर्वकामफलप्रदाः ॥ पूजासंरक्षणार्थायअक्षतान्प्रददाम्यहं ॥ यमुनायै० अक्षतान्० ॥ ॐमनसःकाम० ॥ मंदारपारिजाताद्यै रनेकैःकुसुमैःशुभैः॥ पूजयामिशिवेभक्त्यायमुनायैनमोनमः॥ यमुनायै० पुष्पाणि० ॥ ॥अथांगपूजा ॥ यमुनायैनमः पादौ पूजयामि॥ चंचलायै० जानुनीपू० ॥ कमलायै० कटिं० ॥ चित्रायै० नाभिंपू० ॥ मन्मथवासिन्यै० स्तनौ० ॥ ललितायै० भुजौ० ॥ रत्नकंठायै० कंठंपू० ॥ मायाशक्त्यै० मुखंपू० ॥ चंद्रशेखरायै० ललाटंपू० ॥ भीमरथ्यै० शिरःपू० ॥ यमुना यै० सर्वांगंपूजयामि॥ ॥अथनामपूजा॥ यमुनायै० मायायै० शंकरार्धधारिण्यै० कनककव्यै० उत्पलायै० धात्र्यै०सिंधवे० चूडामण्यै० शांतायै० त्रिगुणात्मिकायै० महायोगिन्यै० ब्रह्मांडरूपिण्यै० जटिलायै० तपस्विन्यै० गंगायै०नर्मदायै० गौ र्यै० भागीरथ्यै० तुंगायै० भद्रायै० कृष्णायै० वेण्यै० भीमरथ्यै० भवनाशिन्यै० कावेर्यै० सरस्वत्यै० सावित्र्यै० गायत्र्यै०

गोदावर्यै० गोमत्यै० गरुडायै० गिरिजायै० मलापहारिण्यै०श्रीयमुनायै०इतिनामपूजा ॥ ॐकर्दमेन०॥दशांगंगुग्गुलंधूपंसु
गंधंचमनोहरं॥आघ्रेयंसर्वदेवानांयमुनेप्रतिगृह्यतां ॥ यमु० धूपं० ॥ ॐ आपःस्रजंतु०॥घृताक्तवर्तिसंयुक्तंमहातेजोमयोज्ज्व
लं ॥ गृहाणमंगलंदीपंत्रैलोक्यतिमिरापहं ॥ यमु० दीपं० ॥ ॐ आर्द्रांयः०॥ सर्वभक्ष्यसमायुक्तंषड्रसैश्चसमन्वितं॥नैवेद्यंयमु
नेदेविगृह्यतांमेप्रसीदच ॥ यमु० नैवेद्यं० ॥ पानीयंपावनंश्रेष्ठंगंगादिसरितोद्भवं ॥ प्राशनार्थंमयानीतंप्रीत्यर्थंप्रतिगृह्यतां ॥ य
मु० नैवेद्यमध्येपानीयं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० उत्तराचमनीयं० करोद्वर्तनार्थेचंदनं० ॥ इदंफलमि
तिमहाफलं० ॥ पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं ॥ कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां ॥ यमुनायै० तांबूलं०॥न्यूनाति
रिक्तपूजायाःसर्वसंपूर्णहेतवे ॥ दक्षिणांकांचनींदेविस्थापयामितवाग्रतः॥यमु०दक्षिणां०॥श्रियेजात० ॥ घृतवर्तिप्रदीपाश्चमया
दत्ताहिभक्तितः ॥ नीराजनंगृहाणेदंयमुनेभक्तवत्सले॥यमु० नीराजनं०॥ ॐतांमआवह० ॥ सर्वपापहरेदेविसर्वोपद्रवनाशि
नि ॥ सरिच्छ्रेष्ठेजगद्वंद्येयमुनायैनमोनमः ॥ यमुनायै० नमस्कारान् ॥ ॐआर्द्रांपुष्करिणीं० यानिकानिचपापानिजन्मांतरकृ
तानिच ॥ तानितानिविनश्यंतिप्रदक्षिणपदेपदे० ॥ यमु० प्रदक्षिणाः ॥ ॐ यःशुचिःप्रयतो०॥नानाविधैःसुकुसुमैःपुष्पांजलि
मिमंशुभं ॥ गृहाणकृपयादेवियमुनायैनमोस्तुते ॥ यमुनायै० मंत्रपुष्पम् ॥ सुरासुरेंद्रादिकिरीटमौक्तिकप्रभाभिजुष्टंतवपादपंक
जं॥परात्परंचारुतरंसुमंगलंनमामिभक्त्याममकामसिद्ध्यै ॥ भवपत्निमहादेविइष्टकामप्रदायिनि ॥ अनंतव्रतसिद्धिंमेदेहित्वंयमु
नेधुना ॥ आवाहनंन०यस्यस्मृत्या०मंत्रहीनं०॥अनेनकृतपूजनेनयमुनादेवताप्रीयतां ॐतत्सद्ब्रह्मार्पणमस्तु ॥ ॥ अथशेष

पूजांकुर्यात् ॥ तत्रायंक्रमःकारिकोक्तः ॥ आराधितयमुनापश्चिमदेशेशालितंडुलराशौअतोदेवाइतिमंत्रेणपद्ममष्टदलंकृत्वा पंचरंगैःसुशोभनंपद्मंरंगवल्ल्यादिनाआयतनंचयथारुचिरंकृत्वापीठपूजांकुर्यात् ॥ अद्येत्यादि० श्रीमदनंताराधनांगत्वेनशेषपूजांकरिष्ये॥तत्रादौमंडपादिपूजांकरिष्ये ॥ ॥सामंडपपूजायथा ॥ पूर्वद्वारेश्रियैनमः नंदायै० सुनंदायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥ दक्षिणद्वारे ॥ द्वारश्रियै० चंडायै० प्रचंडायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥ पश्चिमद्वारे ॥ द्वारश्रियै० बलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥उत्तरद्वारे ॥ द्वारश्रियै० महाबलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै०मायाशक्त्यै०शंखनिधये० पद्मनिधयै० ॥ अथपीठपूजा ॥ मध्येवास्तुपुरुषायनमः मंडूकाय० कालाग्निरुद्राय० आधारशक्त्यै० कूर्माय० पृथिव्यै० अमृतार्णवाय० श्वेतार्णवाय० द्वीपेभ्यो० कल्पवृक्षेभ्यो० मणिमंदिराय० हेमपीठाय० धर्माय० अधर्माय० ज्ञानाय० अज्ञानाय० वैराग्याय० अवैराग्याय० ऐश्वर्याय० अनैश्वर्याय० सहस्रमणिफणान्वितायानंताय० ॥सर्वतत्त्वपद्माय० आनंदकंदाय० संविन्नालाय० विकारमयकेसरेभ्यो० प्रकृतिमयपत्रेभ्यो० सूर्यमंडलाय०चंद्रमंडलाय० वह्निमंडलाय० संसत्त्वाय० रंरजसे० तंतमसे० अंआत्मने० पंपरमात्माने० अंअंतरात्मने०ज्ञानात्मने०प्राणात्मने० कालात्मने० विद्यात्मने०॥ततःपूर्वादिदिक्षुक्रमेण० जयायै० विजयायै० अजितायै० अपराजितायै० नित्यायै० विमलासनायै० दोग्ध्र्यै० अघोरायै० मंगलायै० आधारशक्तिकमलासनाय० इतिपीठदेवताआवाह्यगंधादिभिःपूजयेत् ॥ ततस्त

कांडात्कांडात्० अ
त्राष्टदलेकलशस्थापनम्॥ॐमहीद्यौः०औषधयःसंवदंते०आकलशेषु०इमंमेगंगे०गंधद्वारां०याओषधीः० कांडात्कांडात्० अ
श्वत्थेवो० याःफलिनीर्या० सहिरत्नानि० हिरण्यरूपः०युवासुवासाः०पूर्णादर्वि०॥यन्मध्यस्थंडिलामेघाःसरितःसागरास्तथा॥
ब्रह्मांडकलशंतंतुपूजार्थंस्थापयाम्यहं॥ इतिकलशस्थापनमंत्रः॥ ॐतत्त्वायामि० वरुणंपंचोपचारैःपूजयेत्॥ ततःकलशेदेवता
आवाहयेत्॥ यथा केशवादिचतुर्विंशतिदेवताः मत्स्यादिदशदेवताश्चावाह्य॥ ततः अनिरुद्धायनमः अनिरुद्धमावाहयामि
एवमेवाग्रेपि प्रद्युम्नाय० संकर्षणाय० वासुदेवाय० अष्टवसुभ्यो० एकादशरुद्रेभ्यो० द्वादशादित्येभ्यो०ध्रुवाय० अध्वराय०
सोमाय० अद्भ्यो० अनलाय० प्रत्यूषाय० प्रभाताय० शिंशुमाराय० ब्रह्मणे० व्यासाय० दत्तात्रेयाय० विश्वरूपाय० अनं
ताय० एताःकलशेआवाह्य कलशोपरिस्थापितपूर्णपात्रेवस्त्रंप्रसार्य कुंकुमेनाष्टदलंलिखित्वातत्रपीठदेवतावाहनंकुर्यात्॥ य
था पीठस्यपूर्वादिदिक्षु गणपतयेनमः दुर्गायै० क्षेत्रपालाय० वास्तोष्पतये० मध्येसप्तमातृभ्यो० ॥ पुनःपूर्वादिषु इंद्राय०
अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० इत्यावाह्य॥ ॐनमोभगवतेवासुदेवायेतिमूलमंत्रे
णावाहयेत्॥ यथा अनंतंमोहिनीशक्तिसहितंआवाहयामि० १ वामनंश्रीशक्तिसहितं० २ शौरिणंपद्मिनीशक्तिसहितं० ३
वैकुंठंमहाबलशक्तिसहितं० ४ पुरुषोत्तमंअजाशक्तिसहितं० ५ पद्मनाभंमंगलाशक्तिसहितं ६ हृषीकेशंवरदाशक्तिसहितं ७
त्रिविक्रमंशुभाशक्तिसहितं० ८ मधुसूदनंभगवतीशक्तिसहितं ९ अच्युतंअपराजिताशक्तिसहितं १० अनंतंजयाशक्तिसहितं
११ गोविंदंविजयाशक्तिसहितं १२ कृष्णंसुभद्राशक्तिसहितं० १३ अपराजितंसर्वगाशक्तिसहितं० १४ श्रीमदनंतंलक्ष्मीश

क्तिसहितंआवाहयामिइत्यावाह्य ॥ अथाष्टदलेकर्णिकामध्ये परमदेवतायै० सव्ये सर्वगुरुभ्योनमः ॥ दक्षिणे सर्वदेवताभ्यो०॥
आग्नेयादिचतुष्कोणेषु गरुडाय० व्यासाय० दुर्गायै० सरस्वत्यै० ॥ पुनर्याम्यादिषु धर्माधिपतयेयमाय० पश्चिमे ज्ञानाधिपत
येवरुणाय० उत्तरे वैराग्याधिपतयेसोमाय० पूर्वे ऐश्वर्याधिपतयेइंद्राय० ॥ पुनःपूर्वे धर्माधिपतयेनिर्ऋतये० दक्षिणे ज्ञाना
धिपतयेदुर्गायै० पश्चिमे अवैराग्याधिपतयेकामायन० उत्तरे अनैश्वर्याधिपतयेरुद्राय० मध्येपरमपुरुषायानंतायनमः ॥ मंमं
डूकायनमः मंडूकंआवाहयामि ॥ एवंसर्वत्र ॥ कंकालाय० कुंकूर्माय० आंआधारशक्त्यै० पंप्रकृत्यै० शिंशिलारूपकमला
य० शंशेषाय० पंपृथिव्यै० क्षींक्षीरसिंधवे० नवरत्नद्वीपाय० रत्नोज्वलितमहामंडलाय० नवरत्नमयपारिजाताय०इतिएकै
कोपरिपूर्वतःमंडलानिसंपूज्य तदधःरत्नवेदिकायैनमः ॥ चतुरस्रस्याग्नेयादिकोणेषु आग्नेयेधर्माय० नैर्ऋते ज्ञानाय० वायव्ये
वैराग्याय० ऐशाने ऐश्वर्याय० ॥ चतुरस्रस्यपूर्वरेखायां अंअधर्माय० दक्षिणे अंअज्ञानाय० पश्चिमे अंअवैराग्याय० उत्तरे
अंअनैश्वर्याय०॥ ततःकर्णिकामध्येसप्ततिवलयोपेतायसहस्रफणायअनंताय० तन्मध्यफणोपरि आंआनंदकंदाय० संसंविन्ना
लाय० संसर्वतत्त्वकमलाय० पंप्रकृतिपत्रेभ्यो० विंविकारमयकेसरेभ्यो० पंपंचाशद्वर्णाढ्यायैकर्णिकायै० अंअर्कमंडलाय०
द्वादशकलाभ्यो० उंसोममंडलायषोडशकलाभ्यो० वंवह्निमंडलायदशकलाभ्यो० संसत्त्वायप्रबोधात्मने० रंरजसेप्रकृत्यात्म
ने० तंतमसेसोमात्मने० आंआत्मने० अंअंतरात्मने० पंपरमात्मने० ह्रींज्ञानात्मने० मांमायातत्त्वाय०कांकालतत्त्वाय०विं
विद्यातत्त्वाय० पंपरतत्त्वाय० ॥ ततःपूर्वकेसरेषुपीठशक्तीःपूजयेत् ॥ यथा ॥ विंविमलायै० उंउत्कर्षिण्यै० ज्ञांज्ञानायै० यांयो

गायै० पंप्रह्वायै० इंईशानायै० संसरस्वत्यै० कर्णिकायांअनुग्रहायै० ॥ ततःपुष्पाणिगृहीत्वा ॐ नमोभगवतेविष्णवेसर्वभूता
त्मनेवासुदेवायसर्वात्मनेसंयोगपीठात्मनेश्रीमदनंतायनमइतिपीठेर्पयेत्॥ ततःअष्टौभैरवानावाहयेत् ॥ असितांगभैरवायनमः
रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० ॥ ततःपूर्वे
विप्रवर्णश्वेतंसहस्रफणालंकृतंशेषंआवाहयामि ॥ आग्नेय्यांवैश्यवर्णनीलपंचशतफणालंकृतंतक्षकंआवाह० ॥ दक्षिणे विप्रवर्णे
कुंकुमाभंसहस्रफणालंकृतंअनंतंआवा० ॥ नैर्ऋत्यांक्षत्रियवर्णपीतंसप्तफणायुतंवासुकिंआवा० ॥ पश्चिमे क्षत्रियवर्णपीतंसप्तश
तफणालंकृतंशंखपालंआवा० ॥ वायव्यां वैश्यवर्णनीलंपंचशतफणालंकृतंमहापद्मंआवा० ॥ उत्तरेशूद्रवर्णश्वेतंत्रिंशत्फणालं
कृतंकंबलंआवा० ॥ ईशान्यां शूद्रवर्णश्वेतंत्रिंशत्फणालंकृतंकर्कोटकंआवा० ॥ इत्थंपीठदेवताआवाह्य ॥ तदस्तुमित्रावरुणा०
गृहावैप्रतिष्ठा० ॥ कृत्वादर्भमयंशेषंमुष्टिमात्रमिदंशुभं ॥ फणासमन्वितानंतशायिनंचचतुर्भुजं ॥ वस्त्रोपरिसप्तफणान्वितंस
लक्षणंदर्भमयंशेषंसंस्थाप्यपूजयेत् ॥ तद्यथा ॥ तक्षकंपन्नगाधीशंफणानेकशतोज्वलं ॥ दिव्यांबरधरंदीप्तंरत्नकुंडलमंडितं ॥
नानारत्नपरिक्षिप्तमुकुटद्युतिरंजितं ॥ फणामणिसहस्राढ्यैरसंख्यैःपन्नगोत्तमैः ॥ नागकन्यासहस्रेणसमंतात्परिवारितं ॥ दि
व्याभरणदीप्तांगंदिव्यचंदनचर्चितं ॥ कालाग्निमिवदुर्धर्षंतेजसादित्यसन्निभं ॥ ब्रह्मांडाधारभूतंतंयमुनांतर्निवासिनं ॥ फणैः
सप्तभिराश्लिष्टंविष्णुस्वापविराजितं ॥ दिव्याभरणदीप्तांगंदिव्यांबरविराजितं ॥ ध्यायाम्येतादृशंशेषंपूजार्थमिहतेनमः॥ इति
ध्यात्वा॥ ॐसहस्रशीर्षा०शेषंसप्तफणायुक्तंकालियंनागनायकं ॥ अनंतशयनार्थंत्वांभक्त्याआवाहयाम्यहं ॥ शेषायनमः आ

वाहनंस० ॥ ॐपुरुषएवेदं०॥नवनागकुलाधीशशेषोद्धारककाश्यप॥नानारत्नसमायुक्तमासनंप्रतिगृह्यतां॥शेषाय० आसनं०॥
ॐएतावानस्य०॥अनंतप्रियशेषेशजगदाधारविग्रह॥पाद्यंगृहाणभक्त्यात्वंकाद्रवेयनमोस्तुते॥शेषाय० पाद्यं०॥ॐत्रिपादू०॥
कश्यपानंदजनकमुनिवंदितहेप्रभो॥अर्घ्यंगृहाणत्वंशेषसादरंशंकरप्रिय॥शेषाय० अर्घ्यं०॥ तस्माद्विराळ०॥ सहस्रफणिरूपेण
वसुधोद्धारकप्रभो ॥ गृहाणाचमनंदेवपावनंचसुशीतलं ॥ शेषाय० आचमनंस० ॥ ॐयत्पुरुषेण० ॥ गंगादिपुण्यतीर्थैस्त्वा
मभिषिंचामिभूधर॥ वलभद्रावतारेशनंदनश्रीपतेःसखे॥ शेषाय० शुद्धोदकस्नानं०॥कुमाररूपिणेतुभ्यंदधिमध्वाज्यसंयुतं॥
मधुपर्कंप्रदास्यामिसर्पराजनमोस्तुते ॥ शेषाय० मधुपर्कं०॥ क्षीरंदधिघृतंचैवमधुशर्करयान्वितं ॥ पंचामृतस्नानमिदंस्वीकुरु
ष्वदयानिधे ॥ शेषाय० पंचामृतस्नानं० ॥ पुरुषसूक्तेनमहाभिषेकः॥ ॐतंयज्ञं० ॥कौशेययुग्मंदेवेशप्रीत्यातवमयार्पितं॥ पन्न
गाधीशनागेंद्रतार्क्ष्यशत्रोनमोस्तुते ॥ शेषाय० वस्त्रयुग्मं० ॥ ॐतस्माद्यज्ञा० ॥सुवर्णनिर्मितंसूत्रंपीतितिोरं जितंप्रभो॥अनेकर
त्नखचितंसर्पराजार्पयाम्यहं॥ शेषाय० यज्ञोपवीतं॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥कर्पूरकस्तूरिककेशराढ्यंगोरोचनंचागरुरक्त
चंदनं ॥ श्रीचंदनाढ्यंशुभदंसुगंधंगृहाणविष्णुप्रियतेमयार्पितं ॥ शेषाय० चंदनं ॥ काश्मीरपंकलिप्तांश्चशालीयानक्षतान्शु
भान्॥पातालाधिपतेतुभ्यमर्पयामिगृहाणभो॥ शेषाय० अक्षतान्० ॥ अनेकरत्नान्वितहेमकुंडलेमाणिक्यसंकाशितकंकणद्वयं॥
हीरैस्तुसंशोभितरत्नमुद्रिकांहैमंकिरीटंफणिराजतेर्पितं ॥ शेषाय० सर्वाभरणानि० ॥ अहिरिवेतिपरिमलद्रव्यं ॥ ॐतस्माद
श्वा०॥करवीरैर्जातिपुष्पैश्चंपकैर्वकुलैःशुभैः ॥ तवपूजांकरोम्यत्रविष्णुप्रियनमोस्तुते ॥ शेषाय० पुष्पाणि० ॥ अथांगपूजा ॥

सहस्रपदेनमः पादौपूजयामि ॥ गूढगुल्फाय० गुल्फौ० ॥ हेमजंघाय० जंघे० ॥ मंदगतये० जानुनी० ॥ पीतांवरधराय० कटिं० ॥ गंभीरनाभाय०॥नाभिं० ॥ वाताशनाय० उदरं० ॥ उरगाय०स्तनौ०॥कालियाय० भुजौ० ॥ कंवुकंठाय० कंठं० ॥ विषवक्राय० मुखं० ॥ मणिभूषणाय० ललाटं० ॥ सुलक्षणाय० शिरः० ॥ अनंतप्रियाय० सर्वांगंपूजयामि ॥ ततःसप्तफणाउदक्संस्थाःपूजयेत् ॥ शेषायनमः तक्षकाय० वासुकये० कालियाय० वलभद्राय० लक्ष्मणाय० सुब्रह्मणे०अनंतप्रियाय०॥ अथानामपूजा ॥ उरगाय० पन्नगाय० शंकरभूषणाय० अनंतशिखिने० पातालवासिने० यमुनांतर्वासिने० विषग्रहाय०विषहंत्रे० नागेंद्राय० नागकन्यापरिवृताय० शेषाय० नागलोकाधिपतये० इतिनामपूजा ॥ ॐयत्पुरुषं० वनस्पति०शेषाय० धूपं० ॥ ॐब्राह्मणोस्य० आज्यंचवर्तिं० शेषाय० दीपं० ॥ ॐचंद्रमाम० नैवेद्यंगृ०शेषाय० नैवेद्यं० ॥ मध्येपानीयं० उत्तरापोशनं० हस्तप्रक्षालनादि०॥इदंफलं० महाफलं०॥पूगीफलंमहत्० तांवूलं०॥हिरण्यगर्भ० दक्षिणां० ॥ श्रियेजात० ॥सर्पराजनमस्तुभ्यंतडित्संकाशभूधर ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणहरभूषण ॥ नीराजनं ॥ ॐनाभ्याआसी० ॥ अनंतसंसाररुचिःसदाहंकालीयनागाधिपतेसदात्वां ॥ नतोस्मिमत्वाकृपणंहिदीनंरक्षस्वमांशंकरभूषणेश ॥ नमस्कारान् ॥ ॐसप्तास्यासन्० यानिकानिच० प्रदक्षिणाः॥ ॐयज्ञेनयज्ञ० ॥ नानाकुसुमसंयुक्तंपुष्पांजलिमिमंप्रभो ॥ कश्यपानंदजनकसपदिप्रतिगृह्यतां ॥ मंत्रपुष्पं ॥ अनंतव्रतकल्पोक्तफलंदेहिफणीश्वर ॥ सांगपूजाफलंप्राप्तुंप्रार्थयेभक्तवत्सल ॥ आवाहनं० यस्यस्मृत्या०मंत्रहीनं० ॥ अनेनयथाशक्तियथाज्ञानेनयथामिलितोपचारैःकृतपूजनेनभगवान्श्रीशेषःप्रीयताम् ॐतत्सद्ब्रह्मार्पणमस्तु ॥ ॥

अथानंतपूजा० ॥ ॥ तत्रसमीपतःपात्रांतरेपाद्याद्यभिषेकांतकरणप्राशस्त्यात् चतुर्दशग्रंथियुतंकुंकुमाक्तदोरकद्वयमुपकल्प्य अग्न्युत्तारणंकुर्यात्॥अग्निःसप्तिमितिअग्निपदरहितंसूक्तंपठित्वातत्सहितंपुनःपठित्वाजलंपातयेत् एवंदोरकशुद्धिंविधायप्राण प्रतिष्ठांकुर्यात् ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरायऋषयः ऋग्यजुःसामानिछंदांसि पराप्राणशक्तिर्देवता आं बीजंह्रींशक्तिःक्रोंकीलकं दोरकयोःश्रीमदनंतप्राणप्रतिष्ठापनेविनियोगः ॥ॐआंह्रींक्रों अंयंरंलंवंशंषंसंहंळंक्षंअः क्रोंह्रींआं हंसः सोहं श्रीमदनंतस्यप्राणाइहप्राणाः ॥ ॐआंह्रीमित्यादिहंसःसोहं श्रीमदनंतस्यजीवइहस्थितः ॥ ॐआंह्रीमित्यादि श्रीमदनंत स्यसर्वेंद्रियाणि ॥ ॐ आंह्रींक्रोमित्यादि सर्वेंद्रियाणिवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहागत्यसुखंसुचिरंतिष्ठंतुस्वाहा ॐ असुनीते० १ चत्वारिवाक्० १ ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॐ १५ ॥ रक्तांभोधि स्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणान्॥बिभ्राणासृक्कपालंत्रिनयनलसिता पीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ इतिप्राणप्रतिष्ठा ॥ अथध्यानं ॥ नवाम्रपल्लवाभासं पिंगभ्रूश्मश्रुलोचनं ॥ पीतांबरधरंदेवंसर्वाभरणभूषितं ॥ समुद्रालंकृतंदिव्यंकौस्तुभाद्यैर्विराजितं ॥ शंखचक्रगदापद्मल क्ष्मीगरुडशोभितं ॥ ध्यायाम्येतादृशंभक्तवत्सलंशेषशायिनं ॥ शांताकारं० मेघश्यामं० इतिध्यात्वावाह्यपूजयेत् ॥ ॐसहस्रशीर्षा० ॐहिरण्यवर्णा० ॥ आगच्छानंतदेवेशतेजोराशेजगत्पते ॥ इमांमयाकृतांपूजांगृहाणपुरुषोत्तम ॥ ॐनमो

१ द्वादशार्णोमूलमंत्रोनंतपूजायांप्रशस्यते अतःसर्वोपचारेषुमूलमंत्रोत्रनिर्दिष्टवत्सर्वत्रप्रयोक्तव्यः ॥

भगवतेवासुदेवायश्रीमदनंतायनमःआवाहयामि ॥ अत्रचतुर्दशग्रंथिदेवतावाहनं ॥ तत्रादौपुंदोरके अनघायनमः अन
घंआवाहयामि १ इतिसर्वत्र वामनाय० २ शौरये० ३ वैकुंठाय० ४ पुरुषोत्तमाय० ५ पद्मनाभाय० ६ हृषीकेशाय० ७
माधवाय० ८ मधुसूदनाय० ९ अच्युताय० १० अनंताय० ११ गोविंदाय० १२ कृष्णाय० १३ अपराजिताय० १४॥
अथस्त्रीदोरके मोहिन्यै० १ श्रियै० ३ देव्यै० ३ पद्मिन्यै० ४ महाबलायै० ५ अजायै० ६ मंगलायै० ७ वरदायै० ८भग
वत्यै० ९ अपराजितायै० १० जयायै० ११ विजयायै० १२ सुभद्रायै० १३ सर्वगायै० १४ इत्यावाह्य ॥ नमस्तेजगदाधार
नमस्तेनंतमूर्तये ॥ नमस्तेदेवदेवेशपुराणपुरुषायते ॥ इतिनत्वा आगच्छभगवन्विष्णोस्थानेचात्रस्थिरोभव ॥ यावद्व्रतंसमा
प्येततावत्त्वंसंनिधोभव ॥ क्रियमाणांमयापूजांगृहाणसुरसत्तम॥इतिसंप्रार्थ्य ॥ ॐपुरुषएवेदं० ॐतांमआवह० ॥ नानारत्नस
मायुक्तंकार्तस्वरविभूषितं ॥ आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां ॥आसनं० ॥ ॐएतावानस्य० ॐअश्वपूर्वां०॥गंगादिसर्वती
र्थेभ्योजलमानीतमुत्तमं ॥ पाद्यार्थंदेवतेभक्त्यागृहाणपुरुषोत्तम ॥ ॐन० श्रीम० पाद्यं० ॥ ॐत्रिपादूर्ध्व०ॐकांसोस्मितां०॥
अनंतानंतदेवेशअनंतफलदायक ॥ नागेशानंतरूपोसिअर्घोयंप्रतिगृह्यतां ॥ ॐनमो० अर्घ्यं० ॥ ॐतस्माद्विराळ०॥ॐचंद्रांप्र
भासां०॥गंगाजलंसुगंधाद्यैःसंस्कृतंकनकेस्थितं ॥ आचम्यतांहृषीकेशत्रैलोक्यस्याघनाशन ॥ ॐनमो० आचमनीयं० ॥ ॐय
त्पुरुषेण० ॐआदित्यवर्णे०॥गंगाचयमुनाचैवगोदावरीसरस्वती ॥ तापीपयोष्णीरेवाचताभ्यःस्नानंकुरुप्रभो ॥ ॐनमो०मला
पकर्षस्नानं० ॥ आपोहिष्ठेतितृचेनच ॥ अनंतसर्वकामानामधीशसर्वसौख्यद ॥ मधुपर्कंगृहाणेदंमयादत्तमधोक्षज ॥ मधुवाते

तिऋचः३ ॐन० मधुपर्कं० ॥ पयोदधिघृतक्षौद्रशर्कराभिरनुक्रमात् ॥ पृथक्संस्नापयेदेवंमूलमंत्रमनुस्मरन् ॥ ॐआप्यायस्व०॥सुरभेस्तुसमुत्पन्नंदेवर्षिपितृतृप्तिदं ॥ मयादत्तंपयोदेवस्नानार्थंप्रतिगृह्यतां०॥ॐन० श्रीम० पयःस्नानं० ॥ ॐदधिक्राव्णोअ०॥ दध्नाचैवमहादेवस्नापनंक्रियतेमया ॥ गृहाणत्वंसुराधीशप्रसन्नोमांभवाव्यय ॥ ॐन० श्रीम० दधिस्नानं॥ ॐघृतंमिमिक्षे० ॥ सर्पिषाचजगन्नाथस्नापनंक्रियतेधुना ॥ गृहाणश्रद्धयानंततवप्रीत्यैमनोहरं ॥ ॐनमो०श्रीम० घृतस्नानं०॥ॐमधुवाताऋ० ॥ इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच ॥ स्नातुंगृहाणदेवेशततःशांतिंप्रयच्छमे ॥ ॐन० मधुस्नानं० ॥ ॐस्वादुःपवस्व० ॥ सितयाचसुरश्रेष्ठस्नापनंक्रियतेत्वयि॥ तस्माद्भक्तपराधीनप्रसन्नोभवसर्वदा०ॐनमो० शर्करास्नानं० ॥ गंधोदकेनदेवेशकुशपुष्पफलोदकैः॥ रत्नांबुनाचशुद्धेनस्नापयामिपृथक्पृथक् ॥ ॐगंधद्वारां० ॥ कृष्णागरुप्रचुरकर्दमगंधसारकस्तूरिकामलकचर्चितरोचनाद्यैः ॥ त्वांकेशरैःसुरुचिरैश्चसुगंधवार्भिर्भक्त्यानिरंतरमहंस्नपयामिदेव ॥ ॐनमो० गंधोदकस्नानं० ॥ शरासःकुशरासइतिऋक्॥ गोधूमदूर्वडशिराकुशपिंजुलैश्चकाशायवास्तुलसिवञ्जुलविल्वखंडैः॥ अश्वत्थवल्वजशरांकुरलाजधान्यैर्भक्त्यानिरंतरमहंस्नपयामिदेव ॥ ॐनमो० श्रीम० कुशोदक०॥ ॐओषधीःप्रतिमोदध्वमितिऋक्॥ कह्लारनीलकमलोत्पलपारिजातपुन्नागकैःकदलिचंपकपाटलैश्च ॥ विल्वप्रवालतुलसीशतपत्रजातीपुष्पैर्निरंतरमहंस्नपयामिदेव ॥ ॐन० पुष्पोदकस्नानं०॥खर्जूरपूगकदलीफलमातुलुंगदाडिंवकादिऋतुसंभवकैस्तथाच ॥धात्रीफलैःसुरुचिरैश्चतथाचपक्कैर्भक्त्यानिरंतरमहंस्नपयामिदेव ॥ ॐनमो० फलोदकस्नानं ॥ ॐसहिरत्नानीतिऋक् ॥ माणिक्यमुक्ताफलविद्रुमाद्यैर्गारुत्मकैःपुष्पकवज्रनीलैः ॥ गोमे

दकैःसंस्कृतचारुवार्भिर्भक्त्यानि० ॥ ॐनमो० रत्नोदकस्नानं० ॥ शुद्धोदकेनदेवेशस्वर्णकुंभाहृतेनच ॥ सर्वतीर्थोदकस्नानंगृ
हाणजगदीश्वर ॥ ॐनमो० शुद्धोदकस्नानं०॥पूर्वपूजांसमाप्यपुरुषसूक्तश्रीसूक्तविष्णुसूक्तादिभिर्महाभिषेकःकार्यः॥ॐनमो०
श्रीम० महाभिषेकः ॥ नखाग्रपातसंभूतसर्वदोषापनुत्तये ॥ अनंतशेषरूपत्वंगृहाणाचमनीयकं ॥ ॐनमो० आचमनीयं ॥
ऐश्वर्यपुत्रकामार्थधनधान्यसमृद्धये ॥ वास्तुवाहनसंभूततुष्टिपुष्टियशस्करं ॥ इतिदेवमभिषेकस्थानतउत्थाप्यशेषोपरिसंस्थाप
येत् ॥ तदस्तु० गृहावैप्रतिष्ठा० ॥ ॐतंयज्ञं० उपैतुमा०॥नवकांचनसंकाशंनिर्मलंमृदुलंशुभं॥ पीतांबरयुगंदेवदामोदरगृहाण
भो ॥ ॐनमो० वस्त्रयुग्मंस० ॥ आचमनं ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतं० ॐक्षुत्पिपासामलां०॥नारायणनमस्तुभ्यंत्राहिमां
भवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ ॐनमो० उपवीतं० ॥ आचमनं० ॥ तस्माद्यज्ञात्सर्वहुतऋचःसा० गंध
द्वारां० ॥कुंकुमागरुकर्पूरकुष्ठंरोचनसर्जकं ॥ जटामांसीमृगमदाविष्णोर्गंधाष्टकंविदुः॥मलयाचलसंभूतकस्तूरीकेशरान्वितं ॥
गंधंमनोहरंदेवअनंतप्रतिगृह्यतां ॥ ॐनमो० चंदनं० ॥ श्वेतान्कुंकुमसंयुक्तानुत्तमान्शालितंडुलान् ॥ गृहाणदेवदेवेशप्रस
न्नोभवतेनमः ॥ ॐनमो० अक्षतान्० ॥ केयूरहारमुकुटकुंडलेमेखलादिकं ॥ कौस्तुभंमुद्रिकादीनिअनंतप्रतिगृह्यतां ॥ ॐ
नमो० आभरणानि० ॥ ॐ तस्मादश्वा० ॐमनसःकाम० ॥ करवीरैर्जातिपुष्पैश्चंपकादिऋतूद्भवैः ॥ नानाविधैःसुकुसुमैःपू
जयामिरमापतिं॥ ॐनमो०श्रीम० यथालाभपुष्पाणि०॥ अहिरिवेत्यादिपरिमलद्रव्याणि ॥ लक्ष्म्यैसौभाग्यद्रव्याणिच ॥ अथ
नामपूजा ॥ ॐकारःसर्वत्रादौनामपूजासु ॥ ॐअनघाय० वामनाय० शौरये० वैकुंठाय० पुरुषोत्तमाय० पद्मनाभाय० हृषी

केशाय० माधवाय० मधुसूदनाय० अच्युताय० अनंताय० गोविंदाय० कृष्णाय० अपराजिताय० १४॥मोहिन्यै० श्रियै० देव्यै० पद्मिन्यै० महावलायै० अजायै० मंगलायै० वरदायै० भगवत्यै० अपराजितायै० जयायै० विजयायै०सुभद्रायै०सर्वगायै० १४ ॥ अथांगपूजा० ॥ अनंतायनमः पादौपूजयामि ॥ संकर्षणाय० गुल्फौपू० ॥ कालात्मने० जंघेपू० ॥ विश्वरूपिणे० जानुनीपू० ॥ विश्वात्मने० ऊरूपू० ॥ जगत्पतये० कटिंपू० ॥ सर्वभूतात्मने० गुह्यंपू० ॥ पद्मनाभाय० नाभिंपू० ॥ दामोदराय० उदरंपू० ॥ परमात्मने० हृदयंपू० ॥ मुकुंदाय० स्तनौपू० ॥ चतुर्भुजाय०हस्तान्पू०॥सर्वास्त्रधारिणे०वाहूपू०॥ कंवुग्रीवाय० कंठंपू० ॥ वाचस्पतये० मुखंपू० ॥ कमलपत्राक्षाय० नेत्रेपू० ॥ केशवाय० ललाटंपू० ॥ सर्वात्मने०शिरःपू०॥ सर्वेश्वराय० सर्वांगंपूजयामि ॥ चंचलायै० पादौपू० ॥ चपलायै० गुल्फौपू० ॥ अजायै० जानुनी० ॥ कमलायै०कटिं० ॥ क्षेत्रज्ञायै० नाभिं० ॥ मन्मथवासिन्यै० स्तनौ० ॥ महावलायै० वाहुद्वयं० ॥ उत्कंठायै० कंठं० ॥ श्रियै० मुखं० ॥ विजयायै० ललाटं ॥ भगवत्यै० शिरःपूज० ॥ सर्वेश्वर्यै० सर्वांगंपू० ॥ ॥ अथावरणपूजा ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० ब्रह्मणे० अनंताय० वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय०अंकुशाय० गदायै० त्रिशूलाय० अंवुजाय० चक्राय० ॥ दयाऽधेत्राहिसंसारसर्पान्मांशरणागतं ॥ भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं ॥ इत्यनंतायगंधंपुष्पंशंखोदकंचसमर्पयेदितिप्रत्यावरणं १ ॥ ध्रुवाय० अध्वराय० सोमाय० अद्भ्यो० अनिलाय०अनलाय० प्रत्यूषाय० प्रभासाय० ॥ दयाऽधेत्राहि० इतिद्वितीयावरणं २ ॥ वीरभद्राय० शंभवे० गिरिशाय० अजैकपदे० अहिर्बु

ध्याय० पिनाकिने० भुवनेश्वराय० कपिलाय० दिक्पतये० स्थाणवे० भवाय० ॥ दयाब्धेत्राहि० ३ ॥ धात्रे०विधात्रे०अ
र्यम्णे० मित्राय० अंशुमते० वरुणाय० इंद्राय० भर्गाय० विश्वतेजसे० पूष्णे० त्वष्ट्रे० विष्णवे० ॥ दयाब्धेत्राहि० ४॥ आदि
त्याय० सोमाय० भौमाय० बुधाय० गुरवे० शुक्राय० शनैश्चराय० राहवे० केतवे० ॥ दयाब्धेत्राहि० ५ ॥ वसंताय० ग्री
ष्माय० वर्षाभ्यो० शरद्भ्यो हेमंताय० शिशिराय० ॥ दयाब्धेत्रा० ६ ॥ मेषाय० वृषभाय० मिथुनाय० कर्काय० सिंहाय०
कन्यायै० तुलायै० वृश्चिकाय० धनुषे० मकराय० कुंभाय० मीनाय० ॥ दयाब्धे० ७ ॥ ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्ण
व्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० ॥ दयाब्धेत्राहि० ८॥ असितांगभैरवाय० रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय०
उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० ॥ दयाब्धेत्राहि० ९ ॥ मत्स्याय० कूर्माय० वराहाय०
नारसिंहाय० वामनाय० परशुरामाय० रामाय० कृष्णाय० बौद्धाय० कलंकिने० ॥ दयाब्धेत्राहि० १० ॥ दीप्तायै० सूक्ष्मा
यै० जयायै० भद्रायै० विभूत्यै० विमलायै० अमोघायै० विद्युतायै० विश्वतोमुख्यै० अनंतमुख्यै० ॥ दयाब्धेत्राहि० ११ ॥
मधवे० माधवाय० शुक्राय० शुचये० नभाय० नभस्याय० इषाय० ऊर्जाय० सहाय० सहस्याय० तपसे० तपस्याय० ॥ दया
ब्धेत्राहि० १२ ॥ लक्ष्म्यैनमः श्रियै० दुर्गायै० तुष्ट्यै० पुष्ट्यै० ऋद्ध्यै० शक्तये० कांत्यै० श्रीमहालक्ष्म्यै० ॥ दयाब्धेत्राहि० १३॥
शंखायुधाय० चक्रायुधाय० गदायुधाय० पद्मायुधाय० मुसलायुधाय० खड्गायुधाय० शार्ङ्गायुधाय० बाणायुधाय० ॥ दया
ब्धेत्राहि० १४ ॥ इतिचतुर्दशावरणानि ॥ अथपत्रपूजा ॥ अनंताय० तुलसीपत्रं० ॥ संकर्षणाय० भृंगराजपत्रं ॥ परमा

त्मने० जातीपत्रं०॥विश्वरूपिणे० अपामार्गपत्रं० ॥ विश्वनाथाय०त्रिल्वपत्रं० ॥ पद्मनाभाय० करवीरपत्रं०॥ महात्मने० शमीपत्रं० ॥ श्रीकंठाय० अर्जुनपत्रं० सर्वास्त्रधारिणे० धत्तूरपत्रं० ॥ वाक्पतये० विष्णुक्रांतपत्रं० ॥ केशवाय० दाडिमीपत्रं० सर्वात्मने० मातुलुंगप० ॥ महीधराय० देवदारुप० ॥ अच्युताय०मरुपत्रंसमर्पयामि १४ ॥ इतिपत्रपूजा ॥ अथ पुष्पपूजा०॥ अनंताय०पद्मपुष्पं०॥ विष्णवे०जातीपुष्पं०॥शिष्टेष्टाय० करवीरपुष्पं० ॥ केशवाय० चंपकपुष्पं० ॥ अच्युताय० कह्लारपु० ॥ सहस्रजिते० केतकीपु० ॥ अनंतरूपाय० पारिजातकपुष्पं० ॥ इष्टाय०शतपु० ॥ विशिष्टाय० पुन्नागपु० ॥ शिखंडिने० धत्तूरपु० ॥ नहुषाय० नंद्यावर्तपु० ॥ विश्ववाहवे० मल्लिकापु०॥महीधराय०मालतीपु० ॥ श्रीकंठाय० कर्णिकापुष्पं० १४ इतिपुष्पपूजा ॥ ॥ अथाष्टोत्तरशतनामावलिः ॥ ॐ अनंतायनमः अच्युताय० अद्भुतकर्मणे० अमितविक्रमाय० अपराजिताय० अखंडाय० अग्निनेत्राय० अग्निवपुषे० अदृश्याय० अत्रिपुत्राय० ॥१०॥ अट्टहासाय० अनाकुलाय० अघनाशिने० अनघाय० अप्सुनिलयाय० अर्हाय० अष्टमूर्तये० अनिरुद्धाय०अनिर्विण्णाय०अचंचलाय० ॥ २० ॥ अष्टदिक्पालमूर्तये० अखिलमूर्तये० अव्यक्ताय० अरूपाय० अनंतरूपाय० अभयंकराय० अक्षराय० अभ्रवपुषे० अयोनिजाय० अरविंदाक्षाय० ॥ ३० ॥ अशनवर्जिताय० अधोक्षजाय० अत्रिपुत्राय० अंबिकापतिपूर्वजाय०अपस्मारनाशिने० अव्ययाय० अनादिनिधनाय० अप्रमेयाय०अघशत्रवे० अमरारिघ्ने० ॥४०॥ अमरविघ्नहंत्रे० अनीश्वराय० अजाय० अनादये० अमरप्रभवे० अग्राह्याय० अक्रूराय० अनुत्तमाय० अर्हे० अमोघाय० ॥५०॥ अक्षयाय० अमृताय०

अघोरवीर्याय० अन्यंगाय० अविघ्नाय० अतींद्रियाय० अमिततेजसे० अष्टांगन्यस्तरूपाय० अनिलाय० अवशाय० ॥६०॥ अणोरणीयसे० अशोकाय० अनूकूलाय० अमिताशनाय० अरण्यवासिने० अप्रमत्ताय० अनलाय० अनिर्देश्यवपुषे० अहोरात्राय० अमृत्यवेन० ॥ ७० ॥ अकारादिहकारांताय० अनिमिषाय० अस्त्ररूपाय० अग्रण्याय० अप्रथिताय० असंख्याय० अमरवर्याय० अन्नपतये० अमृतपतये० अजिताय० ॥८०॥ अपांनिधये० अपांपतये० असुरघातिने० अमरप्रियाय० अधिष्ठानाय० अरविंदप्रियाय० अरविंदोद्भवाय० अष्टसिद्धिदाय० अनंतशयनाय० अनंतब्रह्मांडपतये० ॥९०॥ अशिववर्जिताय० अतिभूषणाय० अविद्याहराय० अतिप्रियाय० अकल्मषाय० अकल्पाय० अब्दादिकाय० अचलरूपाय० अघोराय० अक्षोभ्याय० ॥१००॥ अलक्ष्मीशमनाय० अतिसुंदराय० अमोघौघाधिपतये० अक्षताय० अमितप्रभावाय० अवनीपतये० अर्चिष्मते० अपवर्गप्रदाय० ॥ १०८ ॥ इत्यष्टोत्तरशतनामावलिः ॥ अथपुष्पमालांसमर्पयेत् ॥ तत्रमंत्रः ॥ वनमालांसुगंधाढ्यांनानापुष्पैःसमन्वितां ॥ पूजार्थसाधितांदेवप्रीत्यर्थंप्रतिगृह्यतां ॥ इतिमालासमर्पणं॥ ॐयत्पुरुषं० ॐकर्दमेन० ॥ दशांगंगुग्गुलंधूपंसुगंधंसुमनोहरं ॥ सर्वेषामुत्तमंधूपंगृहाणसुरपूजित ॥ ॐनमो० श्रीम० धूपं०॥ब्राह्मणोस्य० आपःस्रजंतु०॥ अग्निर्ज्योतीरविर्ज्योतिरात्मज्योतिरयंहरिः ॥ दीपोयंदेवराजेंद्रप्रीत्यर्थंप्रतिगृह्यतां ॥ ॐनमो० श्रीम० दीपंस० ॥ ॐचंद्रमाम० आर्द्रांयःकरिणीं०॥अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नैवेद्यंगृह्यतांदेवप्रसादंकुरुसर्वदा ॥ ॐनमो० श्रीम० नैवेद्यंस० ॥ पानीयंशीतलंस्वच्छंवस्त्रपूतंसुगंधयुक् ॥ भक्त्यादत्तंगृहाणत्वमनंतफलदायक ॥ ॐनमो० श्रीम० पानीयं० ॥ उत्तरापोशनं०

हस्तप्रक्षालनं० मुखप्रक्षालनं० ॥ चंदनंमलयोद्भूतंकर्पूरादिसमन्वितं ॥ करोद्वर्तनकंदेवअनंतप्रतिगृह्यतां ॥ ॐनमो० श्रीम०
करोद्वर्तनं० ॥ नालिकेरंमातुलिंगंकपित्थंकदलीफलं ॥ कूष्मांडकर्कटीयुक्तंगृह्यतामखिलार्थद ॥ इदंफलंमयादेव० ॐनमो०
श्रीम०महाफलं०॥पूगीफलंमहद्दिव्यं०ॐनमो०श्रीम०तांबूलं०॥अनंतगुणितांचैतांनानारत्नगुणैर्युतां ॥ दक्षिणांगृह्यतांदेवयथा
शक्तिनिवेदितां ॥ हिरण्यगर्भ० ॐनमो० श्रीम० दक्षिणां० ॥ ॐश्रियेजा॒तः० ॥ ज्ञानप्रकाशकंदेवगृहाणत्वंरमापते ॥ नीराज
नंसुमांगल्यंतिमिरस्यनिवारणं ॥ ॐनमो० श्रीम० नीराजनदीपं० ॥ ॐनाभ्यांआसीदं० ॐआ॒र्द्रांपुष्करिणीं० ॥ नमस्तेदेवदेवे
शनमस्तेधरणीधर ॥ नमस्तेसर्वनागेंद्रनमस्तेनंतमाधव ॥ ॐनमो० श्रीम० नमस्कारान्० ॥ ॐस॒प्तास्यासन्० ॥ तांम॒आवह०॥
प्रदक्षिणत्रयंदेवप्रणामंचकरोम्यहं॥तेनपापानिसर्वाणिव्यपोहंतुममाच्युत ॥ ॐनमो०श्रीम० प्रदक्षिणाः० ॥ ॐय॒ज्ञेनय॒ज्ञ० यः
शुचि॒ःप्रयतोभूत्वा०॥देवदेवकृपासिंधोत्राहिमांभवसागरात्॥अपराधंक्षमस्वाद्यगृहाणकुसुमांजलिं॥राजाधिराजा० ॐनमो०
मंत्रपुष्पं० ॥ गीतंवाद्यंनृत्यंछत्रंचामरंदर्पणंआंदोलनंसर्वराजोपचारार्थेअक्षतान्० ॥ अत्रस्तुत्यर्थंविष्णुसूक्तानिपुराणोक्तस्तोत्रा
णिचपठेत्॥ स्तुतिंकृत्वातद्विष्णोःपरमंपदमितिमंत्राभ्यांपुष्पांजलिंसमर्पयेत् ॥ अथप्रार्थना ॥ भुक्तिमुक्तिप्रदस्त्वंहिशरीरारो
ग्यदायक ॥ सर्वपापहरानंतत्राहिमांभवसागरात् ॥ नमस्तेदेवदेवेशदेवदेवजनार्दन ॥ लोकनाथनमस्तेस्तुसर्वान्कामान्प्रयच्छ
मे ॥ यथात्वंसर्वलोकानांनागादीनांचतक्षकः ॥ तथामांत्राहिदेवेशत्वदंघ्रीशरणागतं ॥ लक्ष्मीदेविनमस्तेस्तुसौभाग्यवरदायि
नि ॥ धनधान्यसुपुत्रादिदेहिमह्यंसुशोभने ॥ ४ ॥ आवाहनंन० यस्यस्मृत्या० मंत्रहीनं० कायेनवाचा० ॥ अनेनयथाशक्तिय

थाज्ञानेनयथामिलितोपचारैर्ध्यानावाहनादिषोडशोपचारैःकृतपूजनेनभगवान्श्रीमदनंतःप्रीयताम् ॥अथार्घ्यदानं॥ नमःसर्व
हितानंतजगदानंदकारिणे ॥ सर्गस्थित्यंतरूपायगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदद्यात् ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ अथदोरक
ग्रहणं ॥ स्वीकरोमिनवंसूत्रंममविज्ञानदोभव ॥ दोररूपेणमांरक्षपुराणपुरुषोत्तम ॥ अनंतसंसारमहासमुद्रमग्नंसमभ्युद्धरवासु
देव ॥ अनंतरूपेविनियोजयस्वअनंतसूत्रायनमोनमस्ते ॥ इतिनमस्कृत्वाग्रहणंकार्यं ॥ अनंतसर्वदेवेशभुक्तिमुक्तिफलप्रद ॥
अनंताख्यमिदंसूत्रंधारयामितवप्रियं ॥ संसारगह्वरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्वाः ॥ संपूज्यचत्रिभुवनेशम
नंतदेवंबध्नंतिदक्षिणकरेवरदोरकंते ॥ इतिमंत्रेणअनंतदोरकंस्वदक्षिणकरेबध्वालक्ष्मीदोरकंपत्नीवामकरेबध्नीयात् ॥ अनंतगु
णरत्नायविश्वरूपधरायच॥सूत्रग्रंथिषुसंस्थायअनंतायनमोनमः ॥ इति ॥ अनंतःसर्वदेवानामधिपःसर्वकामदः ॥ व्रतेनानेन
सुप्रीतोभवत्विहसदामम ॥ इतिनमस्कृत्य ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयानंतशरणागतवत्सल ॥ अ
द्यमेसफलंजन्मजीवितंचसुजीवितं ॥ यत्तवांघ्रियुगांभोजेमन्मूर्धाभ्रमरायते ॥ नमस्तेदेवदेवायविश्वरूपधरायच ॥ जीर्णदोरं
परित्यज्यनूतनेऽस्मिन्वसप्रभो ॥इतिजीर्णदोरकोत्तारणं ॥ नमस्तेदेवदेवेशविश्वरूपधरायच ॥ सूत्रग्रंथिषुसंतिष्ठअनंतायनमो
नमः ॥ इतिप्रार्थना ॥ अथजीर्णदोरकविसर्जनं ॥ अद्यपूर्वोच्चरित० जीर्णदोरकस्थश्रीमदनंतस्यगंधाद्युपचारैरुत्तरपूजांकरिष्ये
इतिसंकल्प्ययथावत्पूजांविधाय ॥ विसर्जयामिदेवेशजीर्णदोरस्थितंपरं ॥ संपूर्णमेव्रतंचास्तुदेवदेवनमोस्तुते ॥ अधिष्ठायनवेऽ
न्यस्मिन्यतोऽनंतनिवेशितः ॥ अतोजीर्णमधिष्ठानंविसर्जयरमापते ॥ संवत्सरकृतांपूजांसंपाद्यविधिवन्मया ॥ व्रजेदानीमनंत

त्वंस्वंलोकंहियदृच्छया ॥ संवत्सरकृतांपूजांगृहीत्वानंतविक्रम॥स्वस्थानंगम्यतांविष्णोत्राहिमांत्वमहर्निशं॥ न्यूनातिरिक्तानिप रिस्फुटानियानीहकर्माणिमयाकृतानि ॥ क्षम्याणिचैतानिममक्षमस्वप्रयाहितुष्टःपुनरागमाय ॥ इतिजीर्णदोरकविसर्जनं ॥ अथदोरकदानं ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंब्राह्मणपूजनंतस्मैअनंतदोरकदानंवायनदानंचकरिष्ये ॥ विप्रंसंपूज्य॥अनंतानं तदेवेशअनंतफलदायक ॥ अनंतानंतरूपायअनंतायनमोनमः ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ त्वत्प्रसादादहंविप्रमु च्येयंकर्मबंधनात् ॥ अनंतःप्रतिगृह्णातिअनंतोवैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ॥ सुपक्वान्सफलान्साज्या न्पुंनाम्नोघृतपाचितान् ॥ अनंतायप्रदास्यामिप्रसन्नोवरदोस्तुमे ॥ सधान्यंसफलंपक्वंजीर्णदोरसमन्वितं ॥ सदक्षिणंद्विजेंद्रायद दाम्यनंततुष्टये ॥ देवस्यत्वा० विप्रायवेदवि० एतद्वायनंसफलंसधान्यंश्रीमदनंतजीर्णदोरकसहितंसदक्षिणाकंतुभ्यमहंसंप्रददे नमम ॥ अनेनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयताम् ॥ कर्मणःसांगतासिद्ध्यर्थंब्राह्मणसमाराधनंकरिष्ये तेभ्योभूयसींदक्षिणां दातुमहमुत्सृज्ये ॥ श्रीमदनंतार्पणमस्त्वितिकर्मेश्वरार्पणंकृत्वासुहृद्युतोभुंजीत ॥ इतिअनंतव्रतपूजाविधिः ॥ ॥छ॥

॥४८॥ शारदनवरात्रपूजा ॥ कर्ताप्रातःकृतनित्यक्रियःपूजांगत्वेनसंकल्पपूर्वंशुक्लतिलैःस्नात्वापरिहितधौतवासाःकुंकु मचंदनादिकृतपुंड्रोवद्धशिखःपूर्वाह्णेदशघटीमध्येऽभिजिन्मुहूर्तेवापीठेपत्न्यासहप्राङ्मुखउपविश्याचमनादिदेशकालकीर्तनांते अमुकगोत्रस्यामुकशर्मणःसकुटुंबस्यसपरिवारस्यत्रिगुणात्मकश्रीदुर्गाप्रीतिद्वारा सर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यस मृद्धिपुत्रपौत्राद्यविच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीःकीर्तिलाभशत्रुपराजयविद्याविजयविविधश्रेयःसंपदाद्यभीष्टसिद्ध्यर्थं अद्यार

भ्यनवमीपर्यंतंप्रत्यहमुपवासादिनियमोपेतःश्रीमहाकालीमहालक्ष्मीमहासरस्वतीनवदुर्गापूजनमालावंधनाखंडदीपप्रज्वालन (वलिदानचंडिकास्तोत्रपाठतन्मन्त्रजपकुमारीपूजन) ब्राह्मणसुवासिनीभोजनादिविविधनियमरूपंशारदनवरात्रमहोत्सवंकरिष्ये॥(संकल्पेन्यदपिकुलाचारानुसारेणयथायथमूहनीयं॥)तदंगत्वेनप्रतिपदिविहितंकलशस्थापनादिकरिष्ये॥ गणेशंसंपूज्य स्वस्तिवाचनाद्यंतेआसनविधिंभूशुद्ध्यादिन्यासांश्चकरिष्ये॥ ॥ अथासनविधिन्यासाश्च ॥ यथा ॥ आसनाधोजलादिनात्रिकोणंविलिख्य ॐह्रींआधारशक्तिकमलासनायनमः इत्याधारशक्तिंसंपूज्य तदुपर्यनुद्धिन्नताकरंकुशकंवलाद्यन्यतममासनमास्तीर्य ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसनेविनियोगः॥ॐपृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ इतिमंत्रेणाधारशक्तिंसंप्रार्थ्य ॥ ॐभूर्भुवःस्वःइत्यासनंसंप्रोक्ष्य तदुपरिप्राङ्मुखउदङ्मुखो वाउपविश्य ॥ ॐअनंतासनायनमः ॥ कूर्मासनायनमः ॥ विमलासनायनमः ॥ पद्मासनायनमः ॥ योगासनायनमः ॥ आधारशक्त्यैनमः ॥ दुष्टविद्रावणनृसिंहासनायनमः मध्येपरमसुखासनायनमः इतिनत्वा ॥ ॐऊर्ध्वकेशिविरूपाक्षिमांसशोणितभक्षणे ॥ तिष्ठदेविशिखावंधेचामुंडेह्यपराजिते ॥ इतिमंत्रेणशिखामाबध्य ॥ ॥ अथवाह्यभूतशुद्धिः ॥ अपसर्पंत्विस्यस्यभूतान्यनुष्टुप् भूतोत्सारणेवि० ॥ ॐअपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं॥ सर्वेषामविरोधेनपूजाकर्मसमारभे॥ इतिभूतान्युत्सार्य ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिभैरवाज्ञांगृहीत्वा ॥ ॥ अथस्थलशुद्धिः ॥ देवतामंडपंचतुर्द्वारंवि

चिंत्य ॥ ॐअंतरितꣳरक्षोंतरिताअरातयःहुंफट्इतिमंडपांतःअक्षतान्क्षिप्त्वा ॥ वामतो गुंगुरुभ्योनमः ॥ दक्षिणतो भंभद्र
काल्यैनमः ॥ उपरिष्टात् गंगणपतयेनमः ॥ इतिद्वारदेवताःसंपूज्य ॥ ॥ अथविघ्नोत्सारणंआत्मरक्षणंच ॥ यथा ॥ मूलंप
ठन्दिव्यदृष्ट्यवलोकनेनदिव्यान्विघ्नानुत्सारयामि ॥ ॐफडितिप्रोक्षणेनांतरिक्षान्विघ्नानुत्सारयामि ॥ ॐफडितिवामपादपा
र्ष्णिघातेनभौमान्विघ्नानुत्सारयामि ॥ ॐअस्त्रायफट्इतितालत्रयेणदिग्वंधनंकृत्वा ॥ ॐनमःसुदर्शनायअस्त्रायफट्इतिमंत्रे
णच्छोटिकयावह्निप्राकारत्रयंविभाव्यभूशुद्ध्यादीनिकुर्यात् ॥ ॥ अथभूशुद्धिः ॥ गायत्र्याप्राणानायम्य हुंइतिबीजेनकुंडलि
नीमुत्थाप्य हृदिस्थंदीपकलिकाकारंजीवं ॐहंसःइतिमंत्रेणब्रह्मणिसंयोज्य स्वदक्षिणकुक्षिस्थंपापपुरुषंध्यात्वा यंइति १६ षोड
शवारोच्चारितवायुबीजेनपिंगलयापूरकेणतंपापपुरुषंशोषयित्वा कुंभके रंइति ६४ चतुःषष्टिवारोच्चारितवह्निबीजेनतंदग्ध्वापु
नःयंइति ३२ द्वात्रिंशद्वारोच्चारितवायुबीजेनतद्भस्मइडयारेचयेत् ॥ ब्रह्मरंध्रगतेचंद्रमंडलेऽमृतवर्षिणीं ॥ भवानींभूमिशुद्ध्य
र्थंभावयेदमृतेश्वरीं ॥ ततस्तन्मौलिनिष्पंदसुधाकल्लोलवृष्टिभिः ॥ चिंतयेन्मनसात्मानंभूमिशुद्धिरियंभवेत् ॥ इतिसंक्षेपतोभू
शुद्धिः ॥ ॥ अथभूतशुद्धिः ॥ इडयावायुमापूर्यकुंभकेलंवंरंयंहंइतिपंचभूतबीजानिसकृदावर्त्यपिंगलयारेचयेत् ॥ ततोवमि
त्यमृतबीजेनप्राणायामंकृत्वा सद्यासनात्मकंदेवीशरीरमुत्पाद्यसोहंइतिमंत्रेणकुंडलिनींब्रह्मणोवहृत्यतत्रस्थंजीवंहृदिनिधायकुं
डलिनींमूलाधारगतांविभावयेदितिसंक्षेपतोभूतशुद्धिः ॥ ॥ अथप्राणप्रतिष्ठा ॥ हृदिहस्तंदत्वा ॐआंह्रींक्रोंममप्राणाइहप्राणाः ॥
ॐआंह्रींक्रोंममजीवइहस्थितः ॥ ॐआंह्रींक्रोंममसर्वेंद्रियाणि ॥ ॐआंह्रींक्रोंममवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहा

गत्यसुखंसुचिरंतिष्ठंतुस्वाहा॥ॐअसुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं॥ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानः स्वस्ति ॥ ममगर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॥ ॐ १५वारं ॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचवाणान् ॥ विभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवी वालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ सुप्रतिष्ठितमस्तु ॥ इतिसंक्षेपेणप्राणप्रतिष्ठा ॥ ॥ अथमातृकान्यासोयथा॥अंजलिंवध्वा अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंवंभंमं यंरंलंवंशंषंसंहंळंक्षं इतिमातृकावीजान्यंजलिगतानिविभाव्य मूर्धादिपादांतंत्रिर्न्यसेदितिसंक्षेपः ॥ सहस्रशीर्षाषोळशनारायणःपौरुषमानुष्टुभंत्रिष्टुत्रंतं शरीरशुद्ध्यर्थेन्यासेपूजायांचविनि० ॥ पौरुषंन्यस्य ॥ श्रीसूक्तन्यासः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयः श्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभःचतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्यावृहतीव्यंजनानिवीजानिस्वराःशक्तयःविंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेपूजायांचविनियोगः ॥ ॐहिरण्यवर्णां० मूर्ध्नि ॥ तांमआवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितां० नासिकायां ॥ चंद्रांप्रभासां० मुखे० ॥ आदित्यवर्णे० कंठे ॥ उपैतुमां० वाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥ मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु० ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं० जंघयोः ॥ तांमआवह० पादयोः यःशुचिःप्र० सर्वांगे ॥ अथांगुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायै० तर्जनीभ्यां० ॥ रजत

स्रजायै० मध्यमाभ्यां० ॥ चंद्रायै० अनामिकाभ्यां० ॥ हिरण्मय्यै० कनिष्ठिकाभ्यां० ॥ लक्ष्म्यै० करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ (अथमूलषडंगन्यासः ॥ अस्यश्रीनवार्णमंत्रस्य ब्रह्मविष्णुरुद्राऋषयः गायत्र्युष्णिगनुष्टुभश्छंदांसि श्रीमहाकालीमहालक्ष्मीमहासरस्वत्योदेवताः नंदाशाकंभरीभीमाःशक्तयः रक्तदंतिकादुर्गाभ्रामर्योबीजानि अग्निवायुसूर्यास्तत्वानि श्रीजगदंबाप्रीत्यर्थेन्यासेपूजायांचविनियोगः ॥ ॐऐंअंगुष्ठाभ्यांनमः ॥ ॐह्रींतर्जनीभ्यांनमः ॥ ॐक्लींमध्यमाभ्यांनमः ॥ ॐचामुंडायैअनामिकाभ्यांनमः ॥ ॐविच्चेकनिष्ठिकाभ्यांनमः ॥ ॐऐंह्रींक्लींचामुंडायैविच्चे करतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥ ततोऽक्षरन्यासः ॐऐंनमः शिखायां ॥ ॐह्रींनमः दक्षिणनेत्रे ॥ ॐक्लींनमः वामनेत्रे ॥ ॐचांनमः दक्षिणकर्णे ॥ ॐमुंनमः वामकर्णे ॥ ॐडांनमः दक्षिणनासायां ॥ ॐयैंनमः वामनासायां ॥ ॐविंनमः मुखे ॥ ॐच्चेंनमः गुह्ये ॥ एवंविन्यस्याष्टवारंमूलमंत्रेणव्यापकंकुर्यात् ॥ अथाङ्गन्यासः ॥ ॐऐंप्राच्यैनमः ॥ ॐऐंआग्नेय्यैनमः ॥ ॐह्रींदक्षिणायैनमः ॥ ॐह्रींनैर्ऋत्यैनमः ॥ ॐक्लींप्रतीच्यैनमः ॥ ॐक्लींवायव्यैनमः ॥ ॐचामुंडायै उदीच्यैनमः ॐविच्चेईशान्यैनमः ॥ ॐऐंह्रींक्लींचामुंडायैविच्चे ऊर्ध्वायैनमः ॥ ॐऐंह्रींक्लींचामुंडायैविच्चेभूम्यैनमःइति॥) ततोनित्यवत्कलशादिदीपपूजांतेअपवित्रइतिसंभारान्प्रोक्षेत्॥ ततोघटस्थापनंतत्रप्रधानदेवतानांघटेस्थापनपक्षेस्वपुरतःमध्येएववेदिंकृत्वातदुपरिस्थापयेत्॥ अथवाकलशभिन्नासनेप्रधानदेवतास्थापनपक्षेमुख्यदेवतादक्षिणभागेवेदिंकृत्वातदुपरिस्थापयेत्॥ ॐमहीद्यौरितिभूमिंस्पृष्ट्वा ओषधयःसमितियवान्निक्षिप्यआकलशेष्वितिकुंभंसंस्थाप्य इमंमेगंगेइतिजलेनापूर्य गंधद्वारामितिगंधम्आओषधीरितिसर्वौष

धीः कांडात्कांडादितिदूर्वानिक्षिप्य अश्वत्थेवइतिपंचल्लवान् स्योनापृथिवीभवेतिसप्तमृदः याः फलिनीरितिफलं सहिरत्नानी
तिपंचरत्नानि हिरण्यरूपइतिहिरण्यं क्षिप्त्वा युवासुवासाइतिवस्त्रेणसूत्रेणवावेष्ट्य तदुपरिपूर्णादर्वीतिपूर्णपात्रंनिधाय ततःकुंभे
तत्त्वायामीतिवरुणमावाह्यपंचोपचारैःपूजयेत् ॥ ततःकलशाधःकृतवेद्युपरि ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानः
शर्मसप्रथः॥इतिमृदंविकीर्य तदुपरि ॥ ॐयेनंतोकायतनयायधान्यं१वीजंवहध्वेअक्षितं॥ अस्मभ्यंतद्धत्तनयद्वईमहेराधोविश्व
युसौभगं॥इतिधान्यंविकीर्य॥ॐपर्जन्यायप्रगायतदिवस्पुत्रायमीढुषे॥ सनोयवसमिच्छतु ॥ इतिजलंसिक्त्वा ॥ ॐवर्षंतुते
विभावरिदिवोअभ्रस्यविद्युतः॥ रोहंतुसर्ववीजान्यवब्रह्मद्विपोजहि॥इतिप्रार्थ्य॥घटंप्रार्थयेत् ॥ देवदानवसंवादेमथ्यमानेमहो
दधौ॥उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं ॥ त्वत्तोयेसर्वतीर्थानि देवाःसर्वेत्वयिस्थिताः॥त्वयितिष्ठंतिभूतानित्वयिप्राणाः
प्रतिष्ठिताः॥शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतः
कामफलप्रदाः ॥ त्वत्प्रसादादिमांपूजांकर्तुमीहेजलोद्भव ॥ सांनिध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥ आगच्छवरदेदेविदैत्यदर्पनि
पूदनि ॥ पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये ॥ सर्वतीर्थमयंवारिसर्वदेवसमन्वितं ॥ इमंघटंसमागच्छसांनिध्यमिहकल्पय ॥
इतिप्रार्थना॥ ततःघृतदीपस्थापनपक्षेदेवीदक्षिणतःस्थाप्यःतैलदीपस्थापनपक्षेदेवीवामतःउभयस्थापनपक्षेउभयत्र ॥ ॐ ऐंह्रीं
श्रींवास्तुपुरुषायनमः इतिगंधादिनास्थलंसंपूज्य तत्रगंधजलादिनात्रिकोणंविरच्य दीपाधारयंत्रंगंधादिनासंपूज्यतदुपरिघृतपू
र्णंतैलपूर्णंवापात्रंसंस्थाप्यदीपंप्रज्वाल्य ॐ ऐंह्रींश्रींदीपायनमःइतिपंचोपचारैःसंपूज्यप्रार्थयेत् ॥ अखंडदीपकंदेव्याःप्रीतयेनव

रात्रकं ॥ उज्वालयेअहोरात्रमेकचित्तोदृढव्रतः ॥ अस्मिन्क्षेत्रेदीपनाथनिर्विघ्नसिद्धिहेतवे ॥ लक्ष्मीयंत्रस्यपूजार्थमनुज्ञादातुमर्ह
सि ॥ इतिसंप्रार्थ्यघटेआसनांतरेवाथथाकुलाचारंपीठंपूजयेत् ॥ तच्चेत्थं ॥ ॐ आधारेमंमंडूकायनमः कालाग्निरुद्राय० मूल
प्रकृत्यै० आधारशक्त्यै० कूर्माय० अनंताय० वराहाय० पृथिव्यै० क्षुधासमुद्राय० रत्नद्वीपाय० सुवर्णद्वीपाय० नंदनोद्या ॥ ४८ ॥
नाय० मणिमंडपाय० सुवर्णमंडपाय० सुवर्णवेदिकायै० रत्नसिंहासनाय० धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० ॥
पूर्वादिदिक्षु अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० अनंताय० पद्माय० अंअर्कमंडलाय० उंसोममंडलाय० मं
वह्निमंडलाय० संसत्वाय० रंरजसे० तंतमसे० अंआत्मने० अंअंतरात्मने० पंपरमात्मने० ह्रींज्ञानात्मने० मायातत्त्वाय०
कालतत्त्वाय० विद्यातत्त्वाय० परतत्त्वाय ॥ अथाष्टदलेपुकर्णिकायांनवशक्तीर्विभावयेत् ॥ पूर्वादिप्रादक्षिण्येन इच्छायै०
ज्ञानायै० क्रियायै० कामिन्यै० कामदायिन्यै० रत्यै० रतिप्रियायै० नंदायै० मनोन्मनायै० मध्येमहाकालीमहालक्ष्मीमहासर
स्वतीभ्योनमः इतिपुष्पाक्षतैर्वापूजयेत् ॥ ततोगणपतिंचतुष्टयं ॥ गणानांत्वेतिईशान्यां गणपतिं ॥ जज्ञानंसप्तइतिआग्नेय्यांमातृः ॥
जातवेदसेइतिनैर्ऋत्यांदुर्गां क्षेत्रस्यपतिनाइतिवायव्यांक्षेत्रपालं ॥ पूर्वादिदिक्षुपूर्वेइंद्रत्वा० इंद्रं आग्नेयेअग्निंदूतं० अग्निं दक्षिणे
यमायसो० यमं नैर्ऋत्येमोषुणःपरा० नैर्ऋतिं पश्चिमेत्वंनोअग्ने० वरुणं वायव्येतववाय० वायुं उदीच्यांसोमोधेनुं० सोमं ईशा ॥ ५९ ॥
न्यांतमीशानं० ईशानंइति पीठदेवताआवाह्यसंपूज्य तदुपरिवस्त्रादौशक्तिगंधाष्टकेनकुंकुमेनवायंत्रंविलिखेत् ॥ तदित्थं ॥ विंदुं
त्रिकोणषट्कोणाष्टकोणद्वादशदलमिति ॥ तत्रत्रिकोणाद्बहिःषट्कोणांतःनवकोष्ठंविलिख्यतत्रप्रधानदेवताःस्थापयेत् ॥ तदित्थं ॥

त्रिखंडमुद्रयापुष्पंगृहीत्वास्वहृदिस्थांतेजोमयींदेवतांसंचिंत्यपुनस्तांमहाकालीमहालक्ष्मीमहासरस्वतीरूपेणविभाव्यब्रह्मरंध्रेण
नासाद्वाराउच्छ्वासनेनपुष्पेसमानीय ॥ध्यानं॥ अरुणकमलसंस्थातद्रजःपुंजवर्णाकरकमलधृतेष्टाभीतियुग्मांबुजाच॥मणिमुकु
टविचित्रालंकृताकल्पजालैर्भवतुभुवनमातासंततंश्रीःश्रियैनः ॥ चतुर्भुजांत्रिनेत्रांचवरदाभयपाणिकां ॥ रक्तांबरधरांदेवींदि
व्यरूपांनमाम्यहं ॥ अक्षस्रक्परशूगदेपुकुलिशंपद्मंधनुःकुंडिकांदंडंशक्तिमसिंचचर्मजलजंघंटांसुराभाजनं ॥ शूलंपाशसुदर्शने
चदधतींहस्तैःप्रवालप्रभांसेवेसैरिभमर्दिनीमिहमहालक्ष्मींसरोजस्थितां ॥ इतिमहालक्ष्मींध्यात्वातत्पुष्पंमध्यकोष्ठस्थत्रिकोणेसं
स्थापयेत् ॥एवं ॥खड्गंचक्रगदेपुचापपरिघान्शूलंभुशुंडींशिरःशंखंसंदधतींकरैस्त्रिनयनांसर्वांगभूषावृतां॥ नीलाश्मद्युतिमास्यपा
ददशकांसेवेमहाकालिकांयामस्तौत्स्वपितेहरौकमलजोहंतुंमधुंकैटभं॥इतिध्यात्वामहालक्ष्मीदक्षिणकोष्ठेमहाकालीमावाहयेत् ॥
एवं ॥ घंटाशूलहलानिशंखमुसलेचक्रंधनुःसायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतांशुतुल्यप्रभां ॥गौरीदेहसमुद्भवांत्रिजगतामा
धारभूतांमहापूर्वामत्रसरस्वतीमनुभजेशुंभादिदैत्यार्दिनीं ॥ इतिध्यात्वामहालक्ष्मीवामकोष्ठेमहासरस्वतीमावाहयेत् ॥एवमेवम
ध्यकोष्ठेमहालक्ष्मीपुरतआरभ्यतत्तन्मंत्रैर्नवदुर्गाःध्यात्वामहालक्ष्मीपरितआवाहयेत् ॥ तेमंत्राश्चयथा ॥ जगत्पूज्येजगद्वंद्येसर्व
शक्तिस्वरूपिणि ॥ पूजांगृहाणकौमारिजगन्मातर्नमोस्तुते ॥ शैलपुत्र्यैनमः शैलपुत्रींआवाहयामि० ॥ त्रिपुरांत्रिगुणाधारांमा
र्गज्ञानस्वरूपिणीं ॥ त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहं ॥ ब्रह्मचारिण्यै० २ ॥ कालिकांतुकलातीतांकल्याणहृदयांशिवां ॥
कल्याणजननींनित्यंकल्याणींपूजयाम्यहं ॥ चंद्रघंटायै० ३ ॥ अणिमादिगुणोदारांमकराकारचक्षुषं ॥ अनंतशक्तिभेदांतांका

माक्षींपूजयाम्यहं ॥ कूष्मांडायै० ४ ॥ चंडवीरांचंडमायांचंडमुंडप्रभंजिनीं ॥ तांनमामिचदेवेशींचंडिकांपूजयाम्यहं ॥ स्कंद मात्रेनमः ५ ॥ सुखानंदकरींशांतांसर्वदेवैर्नमस्कृतां ॥ सर्वभूतात्मिकांदेवींशांभवींपूजयाम्यहं ॥ कात्यायन्यैनमः ६ ॥ चंड वीरांचंडमायांचंडमुंडप्रभंजिनीं ॥ तांनमामिचदेवेशींगायत्रींपूजयाम्यहं ॥ कालरात्र्यैन० ७॥ सुंदरींस्वर्णवर्णांगींसुखसौभा ग्यदायिनीं ॥ संतोषजननींदेवींसुभद्रांपूजयाम्यहं ॥ महागौर्यै० ८॥ दुर्गमेदुस्तरेकार्येभयदुर्गविनाशिनीं ॥ पूजयामिसदाभ क्त्यादुर्गांदुर्गार्तिहारिणीं ॥ सिद्धिदायै० ९॥ इत्यावाह्य (अथवाप्रकारांतरेणकुलाचारानुरूपंदुर्गाध्यानं ॥ विद्युद्दामसमप्रभां मृगपतिस्कंधस्थितांभीषणांकन्याभिःकरवालखेटविलसद्धस्ताभिरासेवितां ॥ हस्तैश्चक्रदरालिखेटविशिखांश्चापंगुणंतर्जनींवि भ्राणामनलात्मिकांशशिधरांदुर्गांत्रिनेत्रांभजे॥इतिमहालक्ष्मीस्थानेदुर्गांध्यात्वाआवाहयेत्) ॥ श्रीमहाकालीमहालक्ष्मीमहास रस्वतीत्रिगुणात्मिकांनवदुर्गांध्यायामि ॥ हिरण्यवर्णां० सहस्रशीर्षा०॥तप्तकांचनसंकाशांमुक्ताभरणभूषितां ॥ रत्नसिंहासना सीनांवंदेतांवैमहेश्वरीं ॥ आवाहनं० तांमआवह० पुरुषएवेदं० ॥ खड्गशूलगदाहस्तामभयंदधतींकरैः ॥ गजारूढांमहादेवीं सर्वैश्वर्यप्रदायिनीं ॥ आसनं० ॥ अश्वपूर्वां० एतावान०॥ विद्याधरींमहादेवींपद्माभांलोकनायकां ॥ सर्वैश्वर्यप्रदांदेवींमहाल क्ष्मींप्रपूजये ॥ पाद्यं० ॥ कांसोस्मितां० त्रिपादूर्ध्व०॥ दधिदूर्वाक्षतायुक्तंगंगातोयसमन्वितं ॥ अर्घ्यंगृहाणभोदेविमयाभक्त्या निवेदितं ॥ अर्घ्यं० ॥ चंद्रांप्रभासां०तस्माद्वि० ॥ नानारत्नप्रभांदेवींनानागणसमन्वितां ॥ नारायणींमहालक्ष्मींवंदेतांविष्णुव ल्लभां॥ आचम० ॥ आदित्यवर्णे०यत्पुरुषेणह० ॥ आपोहिष्ठेतिमलापकर्षस्नानं ॥ ततःपंचामृतंआप्यायस्वेत्यादिमंत्रैःपौराणैश्च

पृथक्कार्यं ॥ दधिमध्वाज्यसंयुक्तशर्कराभिःसमन्वितं ॥ गंगोदकंसमानीतंत्वंगृहाणसुरेश्वरि ॥ गंधद्वारां० इतिगंधोदकं ॥ कनिं
क्रदत्० इतिमांगलिकस्नानं॥पूर्वपूजांसमाप्य ततःश्रीसूक्तेनपुरुषसूक्तेनचाभिषेकंकुर्यात्॥आचमनं॥उपैतुमां०तंयज्ञंबर्हिषि०॥
मुक्तामणिगणस्पर्शस्फुरत्कंचुकमुत्तमं ॥ पीतांबरंसोत्तरीयंगृहाणपरमेश्वरि ॥ वस्त्रं० ॥ आचमनं० ॥ क्षुत्पिपासा० तस्मा
द्यज्ञात्सर्वहुतःसंभृतं० ॥ नानासिद्धिप्रदांदेवींनानागुणविवर्धिनीं ॥ नानासूत्रधरांदेवींसर्वलोकमहेश्वरीं ॥ उपवस्त्रं० ॥
तप्तकांचनसंकाशांमहालक्ष्मींवरप्रदां ॥ नानाभरणशोभाढ्यांवंदेतांवरदासनां॥ कंचुकीं सर्वाभरणानिच० ॥ महागुणसमायु
क्तंनानामणिसमन्वितं ॥ कंठसूत्रंमयानीतंगृहाणभक्तवत्सले॥कंठसूत्रं० ॥ गंधद्वारां० तस्माद्यज्ञात्सर्वहुतऋचः० ॥ चंदनागरुक
र्पूरकुंकुमारोचनैस्तथा ॥ कस्तूर्यादिसुगंधंचसर्वांगेषुविलेपये ॥ गंधं० ॥ अक्षतान्निर्मलाञ्शुद्धान्मुक्तामणिसमप्रभान् ॥ गृहा
णेमान्महादेविदेहिमेनिर्मलांधियं ॥ अक्षतान्० हरिद्रां० कुंकुमं० सिंदूरं० कज्जलं० ॥ मनसःकाम०तस्मादश्वा०॥ मंदारपारि
जातादिपाटलीकेतकानिच ॥ जातीचंपकपुष्पाणिगृहाणेमानिशोभने ॥ पुष्पाणि० ॥ पद्मशंखजपुष्पादिशतपत्रैर्विचित्रितां ॥
पुष्पमालांप्रयच्छामिगृहाणत्वंसुरेश्वरि ॥ पुष्पमालां० ॥ दूर्वादलश्यामलेत्वंमहीरूपेहरिप्रिये ॥ अतोदूर्वाभिर्भवतींपूजयामिस
दाशिवे ॥ दूर्वांकुरान् ॥ अमृतोद्भवःश्रीवृक्षोमहादेवप्रियःसदा ॥ बिल्वपत्रंप्रयच्छामिपवित्रंतेसुरेश्वरि ॥ बिल्वपत्रं०॥ उग्र
द्वारेचोग्रमयिदुष्टासुरनिबर्हिणि ॥ पूजांकरोमिचार्वंगिपल्लवैर्नंदनोद्भवैः ॥ पल्लवान्० ॥ शरत्कालेसमुद्भूतांनिशुंभेमर्दितेत्व
या ॥ फलमालांवरांदेविगृहाणसुरपूजिते ॥ फलमालां० ॥ ॥ अथांगपूजा ॥ दुर्गायैनमः पादौपूजयामि ॥ महाकाल्यै०

गुल्फौ० ॥ मंगलायै० जानुद्वयं० ॥ कात्यायन्यै० ऊरू० ॥ भद्रकाल्यै० ॥ कटिं० ॥ कमलवासिन्यै० नाभिं० ॥ शिवायै० उदरं० ॥ क्षमायै० हृदयं० ॥ कौमार्यै० स्तनौ० ॥ उमायै० हस्तौ० ॥ महागौर्यै० दक्षिणवाहुं० ॥ वैष्णव्यै० वामवाहुं० ॥ रमायै० स्कंधौ० ॥ स्कंदमात्रे० कंठंपू० ॥ महिषमर्दिन्यै० नेत्रे० ॥ सिंहवाहिन्यै० मुखंपू० ॥ महेश्वर्यै० शिरः० ॥ कात्यायन्यै० सर्वांगंपूजयामि ॥ अथावरणपूजा ॥ महालक्ष्मीपश्चिमकोष्ठे स्वरयासहविरिंचयेनमः स्वरयासहविरिंचिश्रीपादुकां पूजयामि ॥ तद्दक्षिणकोष्ठे गौर्यासहरुद्रायनमः गौर्यासहितरुद्रश्रीपादुकांपू० ॥ वामकोष्ठे लक्ष्म्यासहहृषीकेशायनमः लक्ष्म्यासहहृषीकेशश्रीपादुकांपू० ॥ महालक्ष्मीपुरःकोष्ठेअष्टादशभुजायैनमः अष्टादशभुजाश्रीपादुकां० ॥ तद्वामकोष्ठे दशाननायैनमः दशाननाश्रीपादुकांपू० ॥ दक्षिणकोष्ठे अष्टभुजायै० अष्टभुजाश्रीपा० ॥ अभीष्टसिद्धिंमेदेहिशरणागतवत्सले ॥ भक्त्या समर्पयेतुभ्यंप्रथमावरणार्चनं ॥ १ ॥ प्रथमावरणार्चनेनश्रीमहालक्ष्मीःप्रीयतां ॥ षट्कोणेमहालक्ष्मींपूर्वकोणमारभ्ययथाक्रमं ऐंहृदयायनमः हृदयश्रीपादुकांपू० ॥ ह्रींशिरसेस्वाहा शिरःश्रीपा० ॥ क्लींशिखायैवषट् शिखाश्रीपा० ॥ चामुंडायैकवचायहुं कवचश्रीपा० ॥ विच्चेनेत्रत्रयायवौषट् नेत्रत्रयश्रीपा० ॥ ऐंह्रींक्लींचामुंडायैविच्चेअस्त्रायफट् अस्त्रश्रीपा० ॥ तत्रैवमहालक्ष्मीपुरःकोणमारभ्य हिरण्यायै० हिरण्याश्रीपा० ॥ चंद्रायै० चंद्राश्रीपा० ॥ रजतस्रजायै० रजतस्रजाश्री० ॥ हिरण्यस्रजायै हिरण्यस्रजाश्रीपा० ॥ हिरण्याक्षायै० हिरण्याक्षाश्रीपा० ॥ हिरण्यवर्णायै० हिरण्यवर्णाश्रीपा० ॥ अभीष्टसिद्धिं० ॥ २ ॥ ततःषड्दलेसंधिषु० ॥ देवीपुरोदलमारभ्य ॥ वसंताय० ॥ ग्रीष्माय० ॥ वर्षाभ्यः० ॥ शरद्भ्यः० ॥ हेमंताय० ॥ शिशिराय० ॥

अभीष्टसिद्धिं०॥३॥अष्टदलेमहालक्ष्मीपुरोदलमारभ्ययथाक्रमंप्रदक्षिणं ॥ ब्राह्म्यैनः ब्राह्मीश्रीपादुकां० ॥ एवंसर्वत्र ॥ माहे श्वर्यै० ॥ कौमार्यै० ॥ वैष्णव्यै० ॥ वाराह्यै० ॥ इंद्राण्यै० ॥ चामुंडायै० महालक्ष्म्यै० ॥ तत्रैवपूर्वक्रमेणप्रदक्षिणं ॥ पद्मा सनायै० ॥ पद्मवर्णायै० ॥ पद्मस्थायै० ॥ आर्द्रायै० ॥ तर्पयंत्यै० ॥ तृप्तायै० ज्वलंत्यै० ॥ हिरण्यप्राकारायै० ॥ तत्रैव पूर्वक्रमेणप्रदक्षिणं ॥ असितांगभैरवाय० ॥ रुरुभैरवाय० ॥ चंडभैरवाय० ॥ क्रोधभैरवाय० ॥ उन्मत्तभैरवाय० ॥ कपाल भैरवाय० ॥ भीषणभैरवाय० ॥ संहारभैरवाय० ॥ अभीष्टसिद्धिं० ॥४॥ महालक्ष्मीपृष्ठतः पूर्वदिशमारभ्य ॥ इंद्रायनमः इंद्रश्रीपा० ॥ एवंअग्नये० ॥ यमाय० ॥ निर्ऋतये० ॥ वरुणाय० ॥ वायवे० ॥ सोमाय० ॥ ईशानाय० ॥ अभीष्ट० ॥५॥ अष्टदलसंधिषु ॥ आदित्याय० सोमाय० ॥ अंगारकाय० ॥ बुधाय० ॥ बृहस्पतये० ॥ शुक्राय० ॥ शनैश्चराय० ॥ राहु केतुभ्यो० ॥ अभीष्टसिद्धिं० ॥ ६ ॥ द्वादशदलमूलेषुदेवीपुरोभागमारभ्यप्रदक्षिणं ॥ मेषाय० ॥ वृषभाय० ॥ मिथुनाय० ॥ कर्काय० ॥ सिंहाय० ॥ कन्यायै० ॥ तुलायै० ॥ वृश्चिकाय० ॥ धनुषे० ॥ मकराय० ॥ कुंभाय० ॥ मीनाय० ॥ अभीष्ट सिद्धिं० ॥ ७ ॥ द्वादशदलमध्येषुपूर्वदलमारभ्यप्रदक्षिणं ॥ मधवे० ॥ माधवाय० ॥ शुक्राय० ॥ शुचये० ॥ नभाय० ॥ नभस्याय० ॥ इषाय० ॥ ऊर्जाय० ॥ सहाय० ॥ तैपाय० ॥ तपसे० ॥ तपस्याय० ॥ अभीष्ट० ॥ ८ ॥ पुनःद्वादशदला ग्रेषुपूर्वक्रमेण ॥ दीप्तायै० ॥ सूक्ष्मायै० ॥ जयायै० ॥ विमलायै० ॥ लक्ष्म्यै० ॥ श्रियै० ॥ गौर्यै० ॥ तुष्ट्यै० ॥ बुद्ध्यै० ॥ शांतायै० ॥ कांत्यै० ॥ महालक्ष्म्यै० ॥ अभीष्ट० ॥ ९ ॥ कर्दमेन० ॥ यत्पुरुषं० ॥ दशांगंगुग्गुलंधूपंचंदनागरुसंयुतं ॥ सम

पिंतंमयाभक्त्यामहालक्ष्मिप्रगृह्यतां ॥ धूपं० ॥ आपंःस्रजं० ब्राह्मणोस्य० ॥ घृतवर्तिंसमायुक्तंमहातेजोमहोज्ज्वलं ॥ दीपंदास्या
मिगिरिजेसुप्रीताभवसर्वदा ॥ दीपं० ॥ आर्द्रांयःकरि० चंद्रमाम० ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नैवेद्यंगृह्यतांदे
विभक्तिंमेह्यचलांकुरु ॥ नैवेद्यं० ॥ गंधतोयंसमानीतंसुवर्णकलशेस्थितं॥ हस्तप्रक्षालनार्थायपानीयंतेनिवेदये ॥ हस्तप्रक्षा० ॥
द्राक्षाखर्जूरकदलीपनसाम्रकपित्थकं ॥ नारिकेलेक्षुजंब्वादिफलानिप्रतिगृह्यतां ॥ फलंस० ॥ एलालवंगकस्तूरीकर्पूरैःपुष्पवा
सितां ॥ वीटिकांमुखवासार्थमर्पयामिसुरेश्वरि ॥ तांबूलं० ॥ पूजाफलसमृद्ध्यर्थंतवाग्रेस्वर्णमीश्वरि ॥ स्थापितंतेनमेप्रीतापू
र्णान्कुरुमनोरथान्॥ दक्षिणां० ॥ श्रियेजातः०॥कौशेयवर्तिंसंयुक्तंगोघृतेनसमन्वितं ॥ नीराजनंमयादत्तंगृहाणपरमेश्वरि॥ नी
राजनं०॥आर्द्रांपु० नाभ्याआसी०नमस्तेदेवदेवेशिनमस्तेईप्सितप्रदे॥ नमस्तेदेवदेवेशिनमस्तेशंकरप्रिये॥ नमस्कारान्॥ तांम
आवह०सप्तास्या०यानिकानिच०प्रदक्षिणाः ॥ यःशुचिःप्रयतो० ॥ यज्ञेनयज्ञ० ॥ दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायके॥नम
स्तेस्तुमहालक्ष्मित्राहिमांपरमेश्वरि॥मंत्रपुष्पं॥ नानापुष्पकृतांमालांनानापुष्पैःसमन्वितां ॥ प्रयच्छामिसुरेशानिसुप्रीतावरदाभ
व ॥ मालार्पणं० ॥प्रार्थना ॥पूजाफलाग्निकार्याद्यैःसुकृतंयन्मयार्चितं ॥ तत्सर्वंफलदंमेस्तुभुक्तिमुक्त्यर्थदेहिमे ॥ लक्ष्मित्वत्प्रज्ञ
यानित्यंकृतापूजातवाज्ञया॥स्थिराभवगृहेह्यस्मिन्ममसंतानकारिणी ॥ न्यूनंवाप्यधिकंवापियन्मयामोहतःकृतं॥ सर्वंतदस्तुसंपू
र्णंत्वत्प्रसादान्महेश्वरि ॥ ममाभीष्टप्रदानित्यंभवसुप्रीतमानसा॥इतिप्रार्थना॥(अथवा आवाहनं०॥ मंत्रहीनं० ॥ महिषघ्निमहा
मायेचामुंडेमुंडमालिनि ॥ द्रव्यमारोग्यविजयंदेहिदेविनमोस्तुते ॥ भूतप्रेतपिशाचेभ्योरक्षोभ्यश्चमहेश्वरि॥ दैवेभ्योमानुषेभ्यश्च

भयेभ्योरक्षमांसदा॥कुंकुमेनसमालब्धेचंदनेनविलेपिते॥विल्वपत्रकृतापीडेदुर्गेत्वांशरणंगतः ॥ सर्वमंगल० ॥ रूपंदेहि०॥दुर्गे स्मृता० ॥ प्रार्थनं॥)ततोदुर्गास्तोत्रपाठार्थंब्राह्मणंवृत्वास्वयंवाकृत्वावैदिकमागमोक्तंवादुर्गामंत्रंयथाशक्तिजपित्वा॥ गुह्यातिगुह्यगोप्त्रीत्वंगृहाणास्मत्कृतंजपं॥सिद्धिर्भवतुमेदेवित्वत्प्रसादान्महेश्वरि ॥ इतिदेव्यैजपंनिवेद्य तस्याउपरिपुष्पमालांबध्नीयात् ॥ मंत्रः ॥ ग्रथितांतिलकह्लारजातिमंदारचंपकैः ॥पुष्पमालांप्रयच्छामिप्रथमेह्नितवांबिके ॥ यद्वा ॥ मालाहिसर्वदेवानांप्रीतिदा शुभदायतः ॥ लंवितासौमयाभक्त्यागृहाणजगदंबिके॥द्वितीयादिदिनेषु द्वितीयेह्नि तृतीयेह्नीत्याद्यूहनीयं ॥ ततो द्विवर्षादिदशवर्षांतांषोडशवर्षांतांवाऽप्राप्तरजस्कामुक्तलक्षणांकन्यांपादप्रक्षालनपूर्वकंरम्यासनउपवेश्य ॥ मंत्राक्षरमयींलक्ष्मींमातॄणांरूपधारिणीं ॥ नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहं॥ इतिमंत्रेणावाह्यगंधपुष्पहरिद्राकंचुकादिभिस्तांसंपूज्यशनैःपायसाद्यन्नंभोजयेत् ॥ ब्राह्मणभोजनमपिशक्त्याकुर्यात् ॥ अन्येविशेषाःकौस्तुभादौज्ञेयाः ॥ इतिनवरात्रपूजा ॥ ॥ ॥ छ ॥

॥ ४९ ॥ नवरात्रोत्थापनम् ॥ तत्रयथाकुलाचारमष्टम्यांनवम्यांदशम्यांवाविसर्जनदिनेसंकल्पादिकृत्वानित्यवद्देवदेवीपूजांतेतांप्रणम्यकृताञ्जलिः ॥ दुर्गांशिवांशांकरींब्रह्माणींब्रह्मणःप्रियां ॥ सर्वलोकप्रणेत्रींतांप्रणमामिसदाशिवां ॥ इत्यादिस्तोत्रैःस्तुत्वा महिषघ्नीत्याद्युक्तमंत्रैःप्रार्थ्य ॥ विधिहीनंक्रियाहीनंभक्तिहीनंयदर्चितं ॥ पूर्णंभवतुतत्सर्वंत्वत्प्रसादान्महेश्वरि ॥ मातःक्षमस्वेत्युक्त्वा ॐ दुर्गायैनमइत्यैशान्यामेकपुष्पनिक्षेपेणविसर्जयेत् ॥ स्थापितकलशोदकेनयजमानाभिषेकः ॥ ततोमृदादिमूर्तिंसत्त्वेस्रोतसितत्प्रवाहणंकर्तुमुत्थापयेत् ॥ तत्रमंत्रः ॥ उत्तिष्ठदेविचंडेशिशुभांपूजांप्रगृह्यच ॥ कुरुष्वममकल्याणमष्टा

भिःशक्तिभिःसह ॥ गच्छगच्छपरंस्थानंस्वस्थानंदेविचंडिके ॥ व्रजस्रोतोजलेवृद्ध्यैतिष्ठगेहेचभूतये ॥ ततोगीततूर्यमंत्रघोषैःस्रो
तोजलंनीत्वा ॥ दुर्गेदेविजगन्मातःस्वस्थानंगच्छपूजिता ॥ संवत्सरेव्यतीतेतुपुनरागमनायवै ॥ पूजामिमामयादेवियथाशक्ति
निवेदितां ॥ रक्षणार्थंसमादायव्रजस्थानमनुत्तमं ॥ इतिस्रोतसिप्रवाह्यतन्मनागृहमेत्यहस्तपादौप्रक्षाल्याचम्यपूजास्थानेयज
मानःसपरिवारउपविश्यविप्रभोजनादिसमाप्यबंधुभिःसहभुंजीत ॥ इतिशारदनवरात्रपूजाविधिःसविस्तरःसंपूर्णः ॥ ॥ ॥

॥ ५० ॥ उपांगललितापूजा ॥ व्रतकर्ताप्रातःसमुत्थाययथाविधिशौचाचमनादिकृत्वाअपामार्गकाष्ठैर्दंतधावनंकुर्यात् ॥
अपामार्गप्रार्थना ॥ आयुर्बलंयशोवर्चःप्रजापशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमंत्रेणकाष्ठंगृहीत्वागंगा
दितीर्थंगत्वादेशकालौसंकीर्त्यउपांगललिताव्रतांगत्वेनदंतधावनपूर्वकंअपामार्गपत्रैःअष्टाचत्वारिंशत्स्नानानिकरिष्ये ॥ दंतधा
वनमंत्रः ॥ मुखदुर्गंधिनाशायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं॥ ततोयथाविधिस्नात्वाप्रातराह्निकंकु
र्यात् ॥ दूर्वाप्रार्थना ॥ दूर्वेअमृतसंपन्नेशतमूलेशतांकुरे ॥ शतंनाशयपापानिशतमायुष्यवर्धनं ॥ त्वंदूर्वेअमृतोत्पन्नेवंदितासि
सुरासुरैः ॥ सौभाग्यसंपदोदेहिसर्वकामफलप्रदे ॥ यथाशाखाप्रशाखाभ्यांविस्तृतासिमहीतले ॥ तथाममापिसंतानंदेहित्वमज
रामरे ॥ एवंमंत्रैर्दूर्वांगृहीत्वागृहमागत्यमध्याह्नेमंगलस्नानंकृत्वावस्त्राभरणाद्यभियुक्तःसन्मंडपिकामध्येप्राङ्मुखःसपत्नीकउप
विश्य आचम्यप्राणानायम्यदेशकालौसंकीर्त्य अस्माकमित्यादिममसर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यवि
च्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थंश्रीउपांगललितादेवताप्रीत्यर्थंदेशकालानुसारतःयथाश

क्तियथाज्ञानेनयथामिलितोपचारद्रव्यैःध्यानावाहनादिषोडशोपचारपूजांकरिष्ये ॥ तदंगत्वेनकलशार्चनंशंखार्चनंघंटार्चनंपु
रुषसूक्तेनश्रीसूक्तेनचन्यासादिकरिष्ये॥ गणपतिंसंपूज्य ॥पृथ्वीत्यादिआसनेउपविश्य ॥ आधारशक्त्यैनमः कूर्मायनमः अनं
ताय० वराहाय० पृथिव्यैनमः इत्यासनंसंपूज्य ॥ अपसर्पंतु० अपक्रामंतु० इतिमंत्राभ्यांभूतान्युत्सार्य॥ भूर्भुवःस्वरोमित्यास
नेउपविश्य ॥ इतिदिग्बंधः ॥ तीक्ष्णदंष्ट्रमहाकायेति भैरवानुज्ञांगृहीत्वान्यासान्कुर्यात्॥ ऋष्यादिन्यासः ॥ लक्ष्मींदिरासुत
ऋषिभ्योनमः शिरसि ॥ अनुष्टुबादिछंदोभ्यो० मुखे॥महालक्ष्म्यै० हृदये ॥ स्वरादिभ्यो० गुह्ये ॥ अणिमादिभ्यो० पाद
योः ॥ अर्धचंद्रकलिकायै० सर्वांगे॥ अथषडंगन्यासः॥ हिरण्यायैनमः अंगुष्ठाभ्यांन० हृदयाय० ॥ चंद्रायै० तर्जनीभ्यां०
शिरसेस्वाहा ॥ रजतस्रजायै० मध्यमाभ्यां० शिखायै० ॥ हिरण्यस्रजायैन० अनामिकाभ्यां० कवचायहुं ॥ हिरण्याक्ष्यै०
कनिष्ठिकाभ्यां० नेत्रत्रयायवौषट्॥ हिरण्यवर्णायैन० करतलकरपृष्ठाभ्यां० अस्त्रायफट् ॥ ततः पुरुषसूक्तन्यासः ॥ श्रीसू
क्तन्यासः। हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आद्यमंत्रस्यलक्ष्मीर्ऋषिःउत्तरचतुर्दशमंत्राणामानंदकर्दमचिक्लीतेंदिरासुताऋ
षयः श्रीर्देवता आद्यास्तिस्रोनुष्टुभः चतुर्थीबृहती पंचमीषष्ठ्यौत्रिष्टुभौसप्ताद्याअनुष्टुभः अंत्याप्रस्तारपंक्तिःव्यंजनानिबीजानि
स्वराःशक्तयःबिंदवःकीलकं ममअलक्ष्मीपरिहारार्थेलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेपूजायांचवि०॥ ॐहिरण्यवर्णांहरिणीं० मूर्ध्नि
तांमआवह० नेत्रयोः अश्वपूर्वां० कर्णयोः कांसोस्मितां० नासिकयोः चंद्रांप्रभासां० मुखे आदित्यवर्णे० कंठे उपैतुमां०
हृदये क्षुत्पिपासा० नाभौ गंधद्वारां० गुह्ये० मनसःकाम० अपाने कर्दमेन० ऊर्वोः आपःस्रजंतु० जान्वोः आर्द्रांयःक०

जंघयोः आद्रांपुष्क० गुल्फयोः तांमआवह० पादयोः ॥ ततःकलशादिपूजाते स्वपुरतःमहीद्यौरित्यादिमंत्रैःकलशंप्रतिष्ठा
प्यउदकमापूर्यमुक्ताफलादिगंधाक्षतफलहिरण्यंचतत्तन्मंत्रैर्निक्षिप्य अश्वत्थेवइत्याम्रपल्लवंनिधाय पूर्णादर्वीतिमंत्रेणपूर्णपा
त्रंनिधाय तस्योपरिवस्त्रंप्रसार्यगंधादिनाअष्टदलंविलिख्यद्वारपूजांकुर्यात् ॥ पूर्वद्वारे गंगणपतयेनमः दक्षिणेद्वारे क्षंक्षेत्रपा
लाय० वामे वंवटुकाय० अधः यौंयोगिनीभ्यो० ॥ पूर्वादिचतुर्द्वारेषु पूर्वे गंगंगायै० दक्षिणे यंयमुनायै० पश्चिमे श्रींश्रियै०
उत्तरे ऐंसरस्वत्यै० एवंद्वारचतुष्टयंसंपूज्य पीठपूजांकुर्यात् ॥ पूर्वे कामगिरिपीठाय० दक्षिणे पूर्णगिरिपीठाय० पश्चिमे जालं
धरपीठाय० उत्तरे वीड्यानपीठाय० पूर्वदले गंगणपतये० क्षंक्षेत्रपालाय० मंमंडूकाय० वंवटुकभैरवाय० ॥ आग्नेयदले
जयायै० विजयायै० जयंत्यै० अपराजितायै० ॥ दक्षिणे चेतनायै० बुध्यै० निद्रायै० क्षुधायै० ॥ नैर्ऋत्यदले शक्त्यै०
तृष्णायै० क्षांत्यै० जात्यै० लज्जायै० ॥ पश्चिमदले शांत्यै० श्रद्धायै० कीर्त्यै० लक्ष्म्यै० धृत्यै० प्रीत्यै० ॥ वायव्यदले स्मृ
त्यै० छेदायै० तुष्ट्यै० मात्रे० ॥ उत्तरदले छायायै० शांत्यै० तृष्णायै० श्रद्धायै० ॥ ईशानदले क्षुधायै० निद्रायै० दयायै०
स्मृत्यै० ॥ एताःपंचविंशतिदेवताः अष्टदलेषुस्थापयेत् ॥ पीठमध्यभागे ॥ ॐकूर्मायनमः आधारशक्त्यै० शेषाय० पृथि
व्यै० पद्माय० संविन्नालाय० पद्मनाभाय० अनंताय० एताअष्टदेवताअष्टदलेषुस्थापयेत् ॥ अथाष्टदलेषुद्वंद्वंदेवतेआवा
हयेत् ॥ ब्राह्म्यै० हंसवाहिन्यै० माहेश्वर्यै० वृषभारूढायै० कौमार्यै० मयूरवाहनायै० वैष्णव्यै० गरुडवाहनायै० वाराह्यै०
दंष्ट्रोद्धृतवसुंधरायै० नारसिंह्यै० ऐंद्र्यै० गजारूढायै० स्कंदगणेशयुतायै० चामुंडायै० मुंडमथनायै० ॥ कर्णिकायांमध्ये

ब्राह्म्यै० नंदजायै० हेमगर्भायै० सुरक्तायै० रक्तदंतिकायै० शार्कंभर्यै० नीलपत्रासिन्यै० धरायै० तेजोमंडल
दुर्धर्षायै० अजितायै० महाकाल्यै० महालक्ष्म्यै० महासरस्वत्यै० मध्येश्रीउपांगललितायै० इतिपीठपूजा ॥ ततःसुवर्णादिप्र
तिमादौ ॥ निजासनेनियुक्तासिललितेभक्तवत्सले ॥ उपांगललितेनुज्ञांदेहिमेव्रतसिद्धये ॥ इतिव्रतानुज्ञांगृहीत्वा ॥ अथध्या
नं ॥ नीलकौशेयवसनांहेमाभांकमलासनां ॥ भक्तानांवरदांनित्यंललितांचिंतयाम्यहं ॥ श्रीललितांध्यायामि ॥ सहस्रशीर्षा०
हिरण्यवर्णां० ॥ आगच्छललितेदेविसर्वसंपत्प्रदायिनि ॥ यावद्व्रतंसमाप्येततावत्त्वंसंनिधाभव ॥ आवाहयामि पुरुषएवेदं०
तांम आवह० ॥कार्तस्वरमयंदिव्यंनानामणिगणान्वितं ॥ अनेकशक्तिसंयुक्तमासनंप्रतिगृह्यतां ॥ आसनं० ॥ एतावानस्य० अ
श्वपूर्वां० ॥गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं ॥ तोयमेतत्सुखस्पर्शपाद्यार्थप्रतिगृह्यतां ॥पाद्यं० ॥त्रिपादूर्ध्व० कांसोस्मितां० ॥
नि[illegible]नांत्वमनर्घ्यगुणाह्यसि ॥ तथापिभक्त्याराधेत्वांगृहाणार्घ्यंनमोस्तुते ॥ अर्घ्यं० ॥तस्माद्विरा० चंद्रांप्रभासां० ॥
पा[illegible]शीतलं ॥ तोयमाचमनीयार्थंललितेप्रतिगृह्यतां ॥ आचमनीयं० ॥ यत्पुरुषेण० आदित्यवर्णे० ॥
ता[illegible]श्लक्ष्णं ॥ तापत्रयविनिर्मुक्तललितेप्रतिगृह्यतां ॥ मलापकर्षस्नानं० ॥ पयोदधिसमायुक्तंमधुपर्कम
याहृतं ॥ [illegible]प्रतिगृह्यतां ॥ मधुपर्कं० ॥ पंचामृतंमयानीतंपयोदधिघृतंमधु ॥ शर्करादिसमायुक्तंस्नाना
र्थंप्रतिगृह्यतां ॥ [illegible]:पृथक्पंचामृतस्नानांतेपूर्वपूजांसमाप्य पुरुषसूक्तेनश्रीसूक्तेनचमहाभिषेकः ॥आचमनं ॥
तदस्तुमित्रा० [illegible]पूर्वादिचतुर्दिक्षु ॥ गणपतयेनमः सप्तमातृभ्यो० दुर्गायै० क्षेत्राधिपतये० ॥

पुनःपूर्वाद्यष्टदिक्षु इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० मध्येउपांगललितायै० उपांगललितांस्थापयामिपूजयामि॥ तंयज्ञं० उपैतुमां०॥सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां ॥जगन्मात्रे० वस्त्रं०॥तस्माद्यज्ञात्सर्वहुतःसंभृतं०क्षुत्पिपासा०॥मुक्तामणिगणोपेतमनर्घ्यंचसुखप्रदं ॥ त्वदर्थमुपवस्त्रंचललितेप्रतिगृह्यतां ॥ उपवस्त्रं० ॥ अनेकरत्नखचितंसर्वाभरणभूषितं ॥ गृहाणभूषणंदेविइष्टसिद्धिंचदेहिमे ॥ सर्वाभरणं० ॥ तस्माद्यज्ञात्सर्वहुतऋचः०गंधद्वारां०मलयाचलसंभूतंघनसारंमनोहरं ॥ हृदयानंदनंचारुचंदनंप्रतिगृह्यतां ॥चंदनं० ॥ अक्षताश्चसुरश्रेष्ठकुंकुमाक्ताःसुशोभिताः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वरि ॥ अक्षतान्० ॥ कंठसूत्रंचसौभाग्यंतथातेपादभूषणं ॥ नासामुक्तंचजननिकुसुमंचार्पितंमया॥ पुष्पैःकुंकुमसिंदूरैस्तांबूलैःकंठसूत्रकैः ॥ वासोभिर्भूषणैःशक्त्याललितेपूजयाम्यहं ॥ कंठसूत्रं० हरिद्रारं० कुंकुमंकां० कालिकेकृ० कज्जलं०॥तस्मादश्वा अ० मनसःकाम०॥चंपकैःपारिजाताख्यैर्जातीमालतिकादिभिः ॥ मंदारशतपत्रैश्चपूजयामिसुरेश्वरि ॥ पुष्पाणि० ॥ अहिरिवभोगैः० परिमलद्रव्याणि०॥ अथांगपूजा ॥ दुर्गायै० पादौपूज० ॥ कपिलायै० गुल्फौ०॥ सावित्र्यै० जानुनी० ॥ सरस्वत्यै० जंघेपू० ॥ भद्रकाल्यै० कटिं० ॥ मंगलायै० नाभिं० ॥ शिवायै० उदरं० ॥ क्षांत्यै० हृदयं० विश्वरूपिण्यै० बाहू० ॥ धात्र्यै० ॥ हस्तौ० ॥ स्वधायै० कंठं० ॥ महिषमर्दिन्यै० मुखं ॥ नारायण्यै० नासिकां० ॥ रौद्रमुख्यै० श्रोत्रे० ॥कुमार्यै० ललाटं० ॥ सिंहवाहिन्यै० नेत्रे० ॥ कालरात्र्यै० शिरःपूज० ॥ श्रीउपांगललितायै० सर्वांगंपू० ॥ अथावरणपूजा० ॥ महाविद्यायै० जगन्मात्रे० महालक्ष्म्यै०शि

वप्रियायै० विष्णुप्रियायै० शुभायै० शांतायै० सिद्धायै० सिद्ध्यै० सरस्वत्यै० क्षमायै० कांत्यै० प्रभायै० ज्योत्स्नायै० पार्व
त्यै० सर्वमंगलायै० ॥ अभीष्टसिद्धिंमेदेहिशरणागतवत्सले॥भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं ॥१॥ अनेन० ॥ हिंगुलायै०
चंडिकायै० दांतायै० पद्मायै० लक्ष्म्यै० हरिप्रियायै० त्रिपुरमर्दिन्यै० नंदिन्यै० सुनंदायै० सुरवंदितायै० महामायायै०
वेदमात्रे० सुधायै० धृत्यै०प्रीत्यै० प्रियायै० प्रसिद्धायै० मृडान्यै० ॥ अभीष्ट० द्वितीयाव० २ ॥ विंध्यवासिन्यै० हि
माचलवासिन्यै० पद्मायै० पृथिव्यै० नारदसेवितायै० पुरुहूतायै० प्रियायै० कांत्यै० कामिन्यै० पद्मलोचनायै० प्रह्लादिन्यै०
महामात्रे० दुर्गायै० दुर्गतिनाशिन्यै०ज्वालामुख्यै० सुनेत्रायै० ॥ अभीष्टसिद्धिं० तृतीयाव० ३ ॥ कुमुदवासिन्यै० दुर्ग
मायै० दुर्लभायै० विद्यायै० स्वर्गवत्यै० त्रिपुरवासिन्यै० अपर्णायै० शांभव्यै० मायायै० मदिरायै० मृदुहासिन्यै० नारा
यण्यै० महानिद्रायै० योगनिद्रायै० प्रभाविन्यै० ॥अभीष्टसि० चतुर्था० ४ ॥ कालरात्र्यै० महारात्र्यै० महाकाल्यै० कुले
श्वर्यै० प्रज्ञापरिमितायै० तारायै० मधुभंजिन्यै० मधुमत्यै० तोतुलायै० तुलजायै० ताम्रायै० मनोन्मन्यै० माहेश्वर्यै०क्षी
रार्णवसुतायै० हारायै० ॥ अभीष्टसि० ५ ॥ बालिकायै० हंसवाहिन्यै० शार्ङ्गाकारायै० वसुधाकारायै० चेतनायै० कोपना
यै० क्षित्याधारायै० अर्धबिंबधारिण्यै० धरायै० विश्वमात्रे० कुलवत्यै० सुवस्त्रायै० प्रद्युम्नायै० सुचेतनायै० जगद्धात्र्यै०
राज्यलक्ष्म्यै० ॥ अभीष्ट० ६ ॥ गणेशाय० सप्तमातृभ्यो० दुर्गायै० क्षेत्राधिपतये० गौर्यै० शंभुपत्न्यै० भक्तवत्सलायै०
भक्तप्रियायै० मधुकैटभनाशिन्यै० शुंभमर्दिन्यै० निशुंभनाशिन्यै० भगवत्यै० मुनित्राणदायिन्यै० देवाराधितायै० विष्णु

पूजितायै० महालक्ष्म्यै० ॥ अभीष्टसि० ७ ॥ महासरस्वत्यै० भुवनेश्वर्यै० दक्षकन्यायै० हिमाचलसुतायै० पार्वत्यै० भद्रकाल्यै० उमायै० चंडिकायै० कालिकायै० आर्यायै० दुर्गायै० भव्यायै० विश्वरूपायै० धात्र्यै० शाकंभर्यै० इंद्राण्यै० भूतदायिन्यै० सारायै० रक्तबीजहंत्र्यै० अंबिकायै० शंभुपत्न्यै० ॥ अभीष्ट० ८ ॥ रक्तदंतिकायै० स्थूलायै० सूक्ष्मायै० सौम्यायै० दुष्टदैत्यनाशिन्यै० विश्वनाथायै० विधिपूजितायै० विश्ववंदितायै० लिंगधारिण्यै० ललितायै० कामचारिण्यै० विश्वकायायै० मदोत्कटायै० रंभायै० मार्गदर्शिन्यै० बिल्वप्रियायै० भद्रेश्वर्यै० रुद्राण्यै० कालिकायै० मुकुटेश्वर्यै० श्रीउपांगललितायै० ॥ अभीष्टसिद्धिं० ९ ॥ अथपत्रीपूजा ॥ देव्यै० मल्लिकापत्रं ॥ महाशक्त्यै० जातीपत्रं० ॥ शिवायै० करवीरपत्रं० ॥ प्रकृत्यै० चूतपत्रं० ॥ भद्रायै० जंबीरपत्रं ॥ निद्रायै० चंपकपत्रं० ॥ नित्यायै० पनसपत्रं० ॥ गौर्यै० पुंनागपत्रं० ॥ धात्र्यै० शमीपत्रं० ॥ ज्योत्स्नायै० अर्कपत्रं० १० ॥ चंद्ररूपिण्यै० धत्तूरपत्रं० ॥ सरस्वत्यै० बिल्वपत्रं० ॥ कल्याण्यै० कपित्थप० ॥ प्राणदायै० विष्णुक्रांतपत्रं० ॥ वृद्ध्यै० दाडिमीपत्रं० ॥ सिद्ध्यै० बदरीपत्रं० ॥ कौमार्यै० नारंगप० ॥ नैर्ऋत्यै० मालतीप० ॥ लक्ष्म्यै० अपामार्गपत्रं० ॥ शर्वाण्यै० धात्रीपत्रं० २० ॥ दुर्गायै० कदंबपत्रं० ॥ सुगंधायै० श्रीपत्रं० ॥ शारदायै० बकुलपत्रं० ॥ पार्वत्यै० नागपत्रं० ॥ ख्यातरूपिण्यै० केतकीपत्रं० ॥ कृष्णायै० शतपत्रं० ॥ सौम्यै० अर्जुनपत्रं० ॥ रौद्रायै० वटपत्रं० ॥ नित्यायै० मंदारपत्रं० ॥ चेतनायै० पाटलीपत्रं० ३० ॥ ऋद्ध्यै० शतावरीपत्रं ॥ भगवत्यै० पलाशपत्रं० ॥ जयायै० अगस्तिपत्रं ॥ छायारूपिण्यै० भृंगराजपत्रं ॥ शक्त्यै० शारदीपत्रं० ॥ तृष्णायै० कदलीपत्रं० ॥ बुद्ध्यै०

देवदारुपत्रं० ॥ कांतरूपिण्यै० अशोकपत्रं ॥ लज्जारूपिण्यै० तुलसीपत्रं ॥ शांतरूपिण्यै० चंदनपत्रं० ४० ॥ सुधारूपिण्यै० दूर्वापत्रं० ॥ कांतिरूपिण्यै० कंकतीपत्रं ॥ लक्ष्म्यै० कौमोदकीपत्रं० ॥ धृतिरूपिण्यै० कुमुदपत्रं० ॥ पार्वत्यै० गोकर्णपत्रं ॥ महादेव्यै० हरिद्रापत्रं० ॥ खड्गिन्यै० सुरंगपत्रं० ॥ लज्जितायै० मातुलुंगपत्रं० ४८ ॥ इतिपत्रपूजा ॥ अथाष्टोत्तरशतनामपूजा ॥ गौर्यै० जगन्मात्रे० जनेंद्रायै० शारदायै० हंसवाहिन्यै० राजलक्ष्म्यै० वषट्कारायै० सुधारायै० राजार्चितायै० दंडिन्यै० १० ॥ क्रियावत्यै० सद्भूत्यै० तारिण्यै० श्रद्धायै० सद्गतये० शरण्यायै० सिद्ध्यै० मंदाकिन्यै० गंगायै० यमुनायै० २० ॥ सरस्वत्यै० गोदावर्यै० विपाशायै० कावेर्यै० शरयवे० चंद्रभागायै० कौशिकप्रियायै० गंडक्यै० शिवायै० नर्मदायै० ३० ॥ कर्मनाशायै० चर्मण्वत्यै० वेदिकायै० वेत्रवत्यै० वितस्तायै० वरदायै० वरवाहनायै० सत्यभूत्यै० साध्व्यै० चक्षुष्मत्यै० ४० ॥ कुंडभासिन्यै० एकचक्षुष्यै० सहस्राक्ष्यै० सुश्रोण्यै० भगमालिन्यै० सेनान्यै० श्रेष्ठायै० पताकिन्यै० गुहायै युद्धकांक्ष्यै० ५० ॥ दयारंभायै० विपत्प्रणाशिन्यै० पंचमप्रियायै० परायै० कलायै० कांत्यै० स्त्रीशक्त्यै० मोक्षदायिन्यै० ऐंद्र्यै० ६० ॥ माहेश्वर्यै० ब्राह्म्यै० कौमार्यै० शिखिवाहिन्यै० इलायै० भगवत्यै० इक्षुधन्विन्यै० अनेकाग्रायै० कामधेनवे० कृपावत्यै० वज्रायुधायै० ६० ॥ चंडपराक्रमायै० सुपर्णायै० स्थित्यै० ईशकांतायै० संहारकायै० एकाग्रायै० महेज्यायै० शतपत्रवाहिन्यै० महाभुजायै० ८० ॥ भुजंगभूषणायै० षट्चक्रक्रमवासिन्यै० षट्चक्रक्रमभेदिन्यै० शमायै० कामस्थायै० कामभूषणायै० सुस्मितायै० सुमुखायै० क्षमायै० मूलप्रकृत्यै० ९० ॥ ऐश्वर्यै० अजायै० बहुवर्णायै० पुरुषा

र्थप्रकृत्यै० रक्तायै० नीलायै० श्यामायै० कृष्णायै० पीतायै० सितायैनमः १०० ॥ कर्बुरायै० कालस्वरूपायै० महादेव्यै० दुष्टदैत्यनाशिन्यै० कदंववनवासिन्यै० शंभुपत्न्यै० पांचालिन्यै० श्रीउपांगललितायैनमः १०८ ॥ यत्पुरुषं० कर्दमेनप्रजा० ॥ देवद्रुमरसोद्भूतःकालागरुसमन्वितः ॥ आघ्रेयस्तेमयादत्तोधूपोयंप्रतिगृह्यता ॥ धूपंस० ॥ ब्राह्मणोस्य० आपःस्रजंतु० ॥ चक्षुर्दसर्वलोकानांतिमिरस्यनिवारणं ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि ॥ दीपं ॥ चंद्रमामनसो० आर्द्रांयःकारिणीं० ॥ मोदकापूपलड्डूकवटकोदुंवरादिभिः ॥ सघृतंपायसान्नंचनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं० ॥ मध्येपानीयं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनार्थेचंदनं० ॥ इदंफलं० उपांगल० फलं० ॥ नागपर्णैश्चसंयुक्तंकर्पूरैलालवंगकं ॥ पूगीफलसमायुक्तंतांवूलंप्रतिगृह्यतां ॥ तांवूलं० ॥ हिरण्यगर्भ० दक्षिणां० ॥ अथदूर्वापूजा ॥ प्रार्थनामंत्रास्तुप्रागेवलिखितास्तैः संप्रार्थनपूर्वकमर्पयेत् ॥ दूर्वांकुरान्समग्रांश्चत्वारिंशत्तथाष्टभिः ॥ अधिकान्हस्तआदायअर्पयेद्भक्तितःसुधीः ॥ अंकुरेपुगंधपुष्पाक्षतान्निक्षिप्य ॥ मंत्रस्तु ॥ वहुप्ररोहासततममृताहरितालता ॥ यथेयंललितेमातस्तथामेस्तुमनोरथाः ॥ अथाष्टचत्वारिंशन्नामभिःपूजयेत् ॥ शंभुपत्न्यैनमः दूर्वांकुरान्समर्पयामीत्येवंसर्वत्र भक्तप्रियायै० भक्ताभिलषितदायिन्यै० मधुकैटभनाशिन्यै० महिषासुरमर्दिन्यै० शुंभभंजिन्यै० निशुंभनाशिन्यै० भगवत्यै० मुनित्राणदायिन्यै० देवाराधितायै० १० विष्णुपूजितायै० महाकाल्यै० महासरस्वत्यै० दक्षयज्ञविध्वंसिन्यै० अंविकायै० हिमाचलसुतायै० पार्वत्यै० भद्रकाल्यै० उमायै० चंडिकायै० २० कमलवासिन्यै० आर्यायै० विश्वरूपायै० धात्र्यै० शाकंभर्यै० इंद्रायै० भूतिदायै० सारायै० रक्तवीजहंत्र्यै० सरस्व

त्यै० ३० शंभुशक्त्यै० सर्वेश्वर्यै० रक्तदंतिकायै० स्थूलायै० सूक्ष्मायै० सत्यसंधायै० दुष्टदैत्यनाशिन्यै० चंचलायै०विश्व
जायै० भक्ताभिलषितदायै० ४० विधिपूजितायै० विश्ववंदितायै० युद्धकांक्षिण्यै० दयारंभायै० पंचमप्रियायै० परायै०
अपरायै० मोक्षदायिन्यै०४८इतिदूर्वापूजनं ॥ श्रियेजात० ॥ कौशेयवर्तिसंयुक्तंगोघृतेनसमन्वितं ॥ नीराजनंमयादत्तंगृहाण
परमेश्वरि॥ इतिनीराजनं ॥ नाभ्याआसी० आर्द्रांपुष्करिणीं० ॥ दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायिके ॥ नमस्तेस्तुमहाल
क्ष्मित्राहिमांपरमेश्वरि॥ नमोदेव्यै०नमस्कारान्०॥सप्तास्या०तांमआवह०॥ शिवेसदानंदमयेत्र्यधीश्वरिश्रीपार्वतिज्ञानघनेंत्रि
केशिवे ॥ मातर्विशालाक्षिभवानिसुंदरित्वामन्नपूर्णांशरणंप्रपद्ये ॥ प्रदक्षिणाः ॥ यज्ञेनयज्ञ० यःशुचिःप्रय०यद्वाग्वद० देवीं
वाच० प्रणोदेवी० राजाधिराजाय० तदुप्येषु० ॥श्रीउपांगललितायै० मंत्रपुष्पं ॥ गीतंवाद्यंनृत्यंछत्रंचामरंदर्पणंसर्वराजोप
चारार्थेअक्षतान् ॥ अथप्रार्थना ॥ नमस्तुभ्यंजगद्धात्रि० ॥ सापराधोस्मिशरणंप्राप्तस्त्वांजगदंबिके ॥ इदानीमनुकंप्योहंयद्वां
छसिकुरुष्वतत् ॥ पुत्रान्देहियशोदेहिदेहिसौभाग्यसंपदौ ॥ विद्यांधनंचमेदेहिसर्वान्कामांश्चदेहिमे ॥ इतिप्रार्थना ॥ अथार्घ्य
दानं ॥ अर्घ्यपात्रेशुद्धोदकंगंधपुष्पाक्षतान्दूर्वाहिरण्यंचनिक्षिप्य ॥ अर्घ्यमंत्रः ॥ नमस्तेललितेमातर्भक्तकामप्रपूरके ॥ गृहा
णार्घ्यंमयादत्तंव्रतस्यपरिपूर्तये ॥ श्रीउपांगललितायै० इदमर्घ्यं० निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि ॥ तथापिभक्त्या
राध्येत्वांगृहाणार्घ्यंनमोस्तुते ॥ श्रीउपांगल० इदमर्घ्यं० ॥ आवाहनंनजानामि०यस्यस्मृत्या० मंत्रहीनं० ॥ अनेनयथाशक्ति
षोडशोपचारैःकृतपूजनेनभगवत्युपांगललितादेवताप्रीयतां ॥ कर्मणःसांगतासिद्ध्यर्थंब्राह्मणपूजांकरिष्ये ॥ वायनप्रदानंकरि

ष्ये ॥ ततोवायनमादायविंशतिवटकादिभिः ॥ भक्त्याद्येतेनमंत्रेणब्राह्मणायनिवेदयेत् ॥ उपांगललितादेव्याव्रतसंपूर्तिहेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददाम्यहं ॥ विप्रायवेदविदुषे० ॥ ततोयथाशक्तिब्राह्मणसुवासिनीदंपतीसमाराधनंकरिष्ये ॥ ततःकथांसमाकर्ण्यवाणकापूपसंख्यया ॥ स्वयमेवतदेवान्नंवाग्यतःसहबांधवैः ॥ रात्रौजागरणंकुर्यान्नृत्यगीतादिमंगलैः ॥ प्रभातेपूजयेद्देवींततःकुर्याद्विसर्जनं ॥ सवाहनाशक्तियुतावरदापूजितामया ॥ मातर्मामनुगृह्याथगम्यतांनिजमंदिरं ॥ पीठदेवतानांयांतुदेवगणाःसर्वेपूजामादायेतिविसर्जनम् ॥ इत्युपांगललितापूजा ॥ ॥ छ ॥ ॥ छ ॥

॥ ५१ ॥ रविवारपूजा ॥ प्रातरुत्थायमौनेनस्नात्वा नित्यकर्मांते नागवल्लीदलेरक्तचंदनेनद्वादशपरिधिकमर्कवद्वर्तुलंमंडलं विरच्य तत्रसंज्ञायुतंसूर्यंपूजयेत् ॥ देशका० ममसंज्ञायुतश्रीसूर्यप्रीतिद्वारासकलदौर्भाग्यदुरितदोषनिरासपूर्वकंअक्षय्यसौभाग्यकुलाभ्युदयधनधान्यसमृद्ध्यायुरारोग्यसुखाभिवृद्ध्याद्यभीष्टसिद्ध्यर्थं श्रावण(आश्विन)रविवारप्रयुक्तंसंज्ञायुतश्रीसूर्यपूजनं करिष्ये ॥ संभारप्रोक्षणांते ध्येयःसदा० इतिध्यात्वा नाम्नापौराणमंत्रैर्वा रक्तगंधाक्षतजपापुष्पखंडशर्करायुतनारिकेलबीजनैवेद्याद्युपचारैःसंपूज्य नीराजनांते द्वादशप्रदक्षिणानमस्कारान्कृत्वापुष्पांजलिंदत्वा पट्टतंतुनिर्मितंपद्ग्रंथियुतंरक्तसूत्रंदेवाय समर्प्यस्वकंठेबद्ध्वाभूमौजानुनीनिपात्य रक्तगंधादियुतजलेन मित्रादिनामभिर्वक्ष्यमाणमंत्रेणवाद्वादशार्घ्यान्दद्यात् ॥ नमःसहस्रकिरणसर्वव्याधिविनाशन ॥ गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे ॥ ततोवायनंदत्वापरमान्नेनदंपतीसंभोजयेत् ॥ ॥

॥ ५२ ॥ सरस्वतीपूजा ॥ कर्तामंगलस्नानंकृत्वाक्षौमंवासःपरिधाय स्रग्वितानादिशोभितेमंडपेभद्रपीठेसर्वाणिपुस्तका

निसंस्थाप्य नित्यकर्मांतेगृहीतोपकरणआचम्यप्राणानायम्य देवादीनभिवाद्य देशकालौस्मृत्वा ममश्रीसरस्वतीप्रीतिद्वारासर्व शास्त्रार्थविज्ञानविमलकीर्तिपुत्रपौत्राभिवृद्धिधनधान्यसंपदाद्यभीष्टसिद्ध्यर्थं मूलनक्षत्रविहितंसरस्वत्यावाहनं तदंगभूतंपूजनं चक० गणेशपूजादिकृत्वा ॐ प्रणोदेवी० ॥ अत्रागच्छजगद्वंद्येसर्वलोकैकपूजिते ॥ मयाकृतामिमांपूजांगृहाणत्वंसरस्वति ॥ सरस्वत्यैनमःसरस्वतीमावाहयामीत्यावाह्य वैदिकपौराणनाममंत्रैरेतदन्यतमेनवादेवींसंपूज्य पूर्वाषाढासुपूजनंकरिष्ये ॥ इति संकल्प्यावाहनवर्जंविविधपुष्पफलनैवेद्यादियुतंपूजनंकार्यं ॥ तत्र ध्यानमंत्रस्त्रिपुरासिद्धांते ॥ सुरासुरैःसेवितपादपंकजाकरे विराजत्कमनीयपुस्तका ॥ विरिंचिपत्नीकमलासनस्थितासरस्वतीनृत्यतुवाचिमेसदा ॥ सहस्र० ॥ अत्रागत्यजगद्वंद्येसर्वलोकैक पूजिते ॥ मयाकृतामिमांपूजांगृहाणजगदीश्वरि॥ॐ सरस्वत्यैआवाहनाभावात्पुष्पंसमर्प्य ॥ पुरुष० ॥ अनेकरत्नसंयुक्तंसुवर्णेन विराजितं ॥ मुक्तामण्यंकितंचारुआसनंतेददाम्यहं ॥ आसनं ॥ एतावा० ॥ गंधपुष्पाक्षतैर्युक्तंशुद्धतोयेनसंयुतं ॥ शुद्धस्फटि कतुल्यांगिपाद्यंतेप्रतिगृह्यतां ॥ पाद्यं० ॥ त्रिपादू० ॥ भक्ताभीष्टप्रदेदेविदेवदेवादिवंदिते ॥ आधारादिजगद्धात्रिददाम्यर्घ्यंगृ हाणमे ॥ अर्घ्यं ॥ तस्माद्विराळ०॥पूर्णचंद्रसमानास्येकोटिसूर्यसमप्रभे॥भक्त्यासमर्पितंतुभ्यंगृहाणाचमनीयकं॥आचमनीयं०॥

१ ध्यानांतरं॥प्रणवासनमारूढांतदर्थत्वेननिश्चितां॥अंकुशंचाक्षसूत्रंचपाशपुस्तकधारिणीं ॥ मुक्ताहारसमायुक्तांमोदरूपांमनोहरां ॥ सितेनदर्पणाभेन वक्त्रेणपरिशोभितां॥सुस्तनींवेदमध्यांतांचंद्रार्धकृतशेखरां॥जटाकलापसंयुक्तांपूर्णचंद्रनिभाननां ॥ त्रिलोचनांमहादेवींस्वर्णनूपुरधारिणीं ॥ कटकैःस्वर्ण रत्नाढ्यैर्महावलयशोभितां॥कंबुकंठींसुताम्रोष्ठींसर्वाभरणभूषितां ॥ केयूरैर्मेखलाद्यैश्चद्योतयंतींजगत्त्रयं॥शब्दब्रह्मात्मिकांध्यायेध्यानकामःसमाहितः ॥

यत्पुरुषेण० ॥ सुवर्णकलशानीतैर्नानागंधसुवासितैः॥शुद्धोदकैःस्नानमिदंस्वीकुरुष्वसुरेश्वरि ॥ स्नानं०॥ कमलभवनजायेकोटि
सूर्यप्रकाशेशिवदशुचिविलासेकोमलाहारयुक्ते॥ दधिमधुघृतयुक्तःस्वर्णपात्रस्थितोयःशुचिरयिमधुपर्कोगृह्यतांवेदवंद्ये ॥ मधुप
र्कं० ॥ दधिक्षीरघृतोपेतंशर्करामधुसंयुतं ॥ पंचामृतस्नानमिदंस्वीकुरुष्वसुरेश्वरि ॥ पंचामृतस्नानं० ॥ महाभिषेकः॥तंयज्ञं०॥
शुक्लवस्त्रद्वयंदेविविमलंकुटिलालके ॥ भक्त्यासमर्पितंवाणिब्रह्माणिप्रतिगृह्यतां ॥ वस्त्रं० ॥ तस्माद्यज्ञा० ॥ शब्दब्रह्मारणे
देविशब्दशास्त्रकृतालये ॥ ब्रह्मसूत्रंगृहाणत्वंब्रह्मशक्रादिपूजिते ॥ कंठसूत्रं० ॥ कटकमुकुटहारैर्नूपुरैरंगदाद्यैर्विविधमणिसुयु
क्तैर्मेखलामुक्तहारैः ॥ कमलवनविलासेकामदेत्वंगृहाणप्रकटितकरुणार्द्रेभूरिशोभूषणानि ॥ आभरणानि० ॥ तस्माद्य० श्री
खंडचंदनं० गंधं० ॥ अक्षताश्च० अक्षतान्० ॥ हरिद्रां० कुंकुमं० अहिरिव० नानापरिमलद्रव्यं ॥ तस्मादश्वा० ॥ माल्या
दीनि० पुष्पाणि० ॥ अथांगपूजा ॥ ब्रह्माण्यै० पादौपूजयामि ॥ ब्रह्मण्यमूर्तये० गुल्फौ० ॥ जगत्स्वरूपायै० जंघे० ॥ जग
दादये० जानुनी० ॥ चारुविलासिन्यै० ऊरू० ॥ कमलभूतये० कटिं ॥ जन्महीनायै० जघनं ॥ गंभीरनाभये० ना
भिं० ॥ वारिपूज्यायै० उदरं ॥ लोकमात्रे० स्तनौ० ॥ विशालवक्षसे० वक्षःपू० ॥ सुविपश्चितायै० कंठं० ॥ स्कंदपूज्या
यै० स्कंधौ० ॥ दीर्घसुवाहवे० वाहून्० ॥ पुस्तकधारिण्यै० हनुं० ॥ श्रोत्रियसंभवायै० श्रोत्रे० ॥ वेदस्वरूपायै० वक्रं० ॥
सुनासायै० नासिकां० ॥ विंवसमानोष्ठ्यै० ओष्ठौ० ॥ कमलचक्षुषे० नेत्रे० ॥ तिलकधारिण्यै० भालं० ॥ चंद्रमूर्तये० के
शान्० ॥ सरस्वत्यै० शिरःपू० ॥ ब्रह्मरूपिण्यै० सर्वांगं० ॥ पुनरेतैर्नामभिःपुष्पाणिसमर्पयेत् ॥ यत्पुरुषं ॥ वनस्पतिरसोद्भू०

धूपं० ॥ ब्राह्मणोस्य० आज्यंचवर्तिसं० दीपं० ॥ चंद्रमा० ॥ अपूपान्विविधान्स्वादून्शालिपिष्टोपपाचितान् ॥मृदुलान्गुड
संमिश्रान्सजीरकमरीचिकान् ॥ कदलीपनसाम्राणांसुपक्वानिफलानिच ॥ कंदमूलव्यंजनादिसोपस्करंमनोहरं ॥ अन्नंचतुर्वि
धोपेतंक्षीरान्नंसघृतंदधि ॥ नैवेद्यं० ॥ शीतोदकंचसुस्वादुकर्पूरैलादिवासितं ॥ मध्येमध्येगृहाणेदंकामधेनुशताधिके ॥ पानी
यं० ॥ इदंफलमितिफलं० ॥ तांबूलंचसकर्पूरंपूगनागदलैर्युतं ॥ गृहाणदेविदेवेशितत्वरूपेनमोस्तुते ॥ तांबूलं ॥ हिरण्यग
र्भगर्भस्थं० दक्षिणां० ॥ श्रियेजातः०॥नीराजनंगृहाणत्वंजगदानंददायिनि ॥ जगत्तिमिरमार्तंडमंडलेतेनमोनमः ॥ महानीराज
नदीपंकर्पूरदीपंच ॥ ततःशिष्यादिसंयुक्तः नाभ्याआसी० ॥ पाहिपाहिजगद्वंद्येनमस्तेभक्तवत्सले॥ नमस्तुभ्यंनमस्तुभ्यंनमस्तु
भ्यंनमोनमः ॥ इतिनमस्कुर्यात्॥सप्तास्यां० यानिकानिच०प्रदक्षिणाः॥यज्ञेन० ॥ शारदेलोकमातस्त्वमाश्रिताभीष्टदायिनि ॥
पुष्पांजलिंगृहाणेमंमयाभक्त्यासमर्पितं ॥ पुष्पांजलिं० ॥ पूजांतेप्रार्थयेत् ॥ पाशांकुशधरावाणीवीणापुस्तकधारिणी ॥ ममव
क्त्रेवसेन्नित्यंदुग्धकुंदेंदुनिर्मला ॥ यथानदेविभगवान्ब्रह्मालोकपितामहः ॥ त्वांपरित्यज्यसंतिष्ठेत्तथाभववरप्रदा ॥ वेदाःशा
स्त्राणिसर्वाणिनृत्यगीतादिकंचयत् ॥ नविहीनंत्वयामातस्तथामेसंतुसिद्धयः ॥ लक्ष्मीर्मेधाधरापुष्टिर्धृतिस्तुष्टिःप्रभामतिः ॥ ए
ताभिःपाहितनुभिरष्टाभिर्मांसरस्वति ॥ ततोब्राह्मणंसंपूज्य तस्मैचतुर्दशलड्डुकवायनंसघृतंसदक्षिणंमंत्रेणदद्यात् ॥ सरस्वति
नमस्तुभ्यंवरदेभक्तवत्सले ॥ उपायनंप्रदास्यामिविद्यावृद्धिंकुरुष्वमे ॥ भारतीप्रतिगृह्णातिभारतीवैददातिच ॥ भारतीतारि
कोभाभ्यांभारत्यैतेनमोनमः ॥ ततःकथांश्रुत्वाविप्रान्संभोज्य स्वजनयुतस्तैलवर्जंस्वयंचभुक्त्वा रात्रिंनृत्यगीताद्युत्सवेननये

त् ॥ एवं प्रत्यहंयथाशक्तिकार्यं ॥ अथोत्तराषाढासुबलिदानं तदंगभूतंपूजनंचसंकल्प्य पूजांतेपायसादिबलिंदत्वा श्रवणेवि सर्जनंकर्तुंतदंगभूतंपूजनंक० ॥ पूर्ववत्संपूज्य ॥ उत्तिष्ठदेविकल्याणिगृहीत्वापूजनंमम ॥ स्वस्थानंगच्छसुभगेकामान्देहिसर स्वति ॥ इतिविसर्जयेत् ॥ इतिसरस्वतीपूजा ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ५२ ॥ महालक्ष्मीपूजा ॥ नित्यकर्मांते ॥ करिष्यामिव्रतंदेवित्वद्भक्त्यात्वत्परायणा ॥ तदविघ्नेनमेयातुसमाप्तिंत्वत्प्र सादतः॥इतिप्रार्थ्याचम्यदेशकालौसंकीर्त्यममश्रीमहालक्ष्मीप्राप्तिद्वाराअलक्ष्मीपरिहारपूर्वकंस्थिरसौभाग्यपुत्रपौत्रधनधान्यस मृद्धिसकलैश्वर्यदीर्घायुःक्षेमादिकल्पोक्तफलसिद्ध्यर्थंमहालक्ष्मीव्रतांगत्वेनपूजांकरिष्ये॥गणेशपूजादिसंभारप्रोक्षणांतेकदलीस्तं भादिमंडितेपीठेवेद्यांवाष्टदलोपरिलक्ष्मींसंस्थाप्यपूजयेत् ॥ ध्यायामितांमहालक्ष्मींकर्पूरक्षोदपांडुरां ॥ शुभ्रवस्त्रपरीधानांमुक्ता भरणभूषितां ॥ पंकजासनसंस्थानांस्मेराननसरोरुहां ॥ शारदेंदुकलाकांतिंस्निग्धनेत्रांचतुर्भुजां ॥ पद्मयुग्माभयवरव्यग्रचारुक रांबुजां ॥ अभितोगजयुग्मेनसिच्यमानांकरांबुना ॥इतिध्यात्वाषोडशोपचारैःसंपूज्यपुष्पांजल्यंतेपात्रनिहितदोरकोपरिषोडशा र्घ्यान्दत्वानमस्कुर्यात् ॥ महालक्ष्मिजगन्मातःसुखसौभाग्यदायिनि ॥ देहिमेसकलान्कामान्गृहाणार्घ्यंनमोस्तुते ॥ ततोदोरकवं धनं॥ रात्रौवाचारात् ॥ तत्र लक्ष्म्यैनमइति दोरकंप्रतिग्रंथ्यभिमंत्र्य॥धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियं ॥ तुरगान्दंतिनःपु त्रान्महालक्ष्मिप्रयच्छमे॥इतिवामकरेवध्वाप्रार्थयेत् ॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे ॥ लक्ष्मीदेवियथासित्वंमयिनित्यात

१ महाष्टम्यामिदंपंचवर्षात्मकंघटाध्मानरूपंव्रतंप्रायश्चित्तपावनकुलेप्रसिद्धमितिव्रतराजे ॥ विशेषपूजाप्रकारस्त्वग्रेयोजितलक्ष्मीपूजावज्ज्ञेयः ॥

थाभव॥क्षीरोदार्णवसंभूतेकमलेकमलालये॥प्रयच्छसर्वकामान्मेविष्णुवक्षःस्थलालये॥पुत्रान्देहियशोदेहिदेहिसौभाग्यमव्ययं॥
कुरुश्रियंमहालक्ष्मिअश्रियंचाशुनाशय॥ ततो गोधूमपिष्टनिर्मितान्षोडशलड्डुकादिभक्ष्यविशेषान्दीपांश्चसौभाग्यद्रव्यसहिता
न्वंशपात्रेनिधायविप्रायदद्यात्॥ तत्रमंत्रः॥क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरी॥ व्रतेनानेनमेदेवीप्रीयतांविष्णुवल्लभा॥ इंदि
राप्रतिगृह्णातिइंदिरावैददातिच॥ इंदिरातारकोभाभ्यामिंदिरायैनमोनमः॥ ततःसुवासिनीभ्योहरिद्राकुंकुमवस्त्रादिदत्वाश
क्त्याविप्रान्संभोज्यकथांश्रुत्वास्वयंचदीपपिंडिकासहितंभुक्त्वारात्रौजागरोत्सवंकृत्वाप्रातर्देवींसंपूज्यलक्ष्मीदेविगृहाणत्वंदोर
कंयन्मयाधृतं॥ व्रतंसंपूर्णतांयातुकृपांकुरुसदामयि॥इतिदोरकमुत्तार्यदेव्यग्रेनिधायदेवींविसर्जयेत्॥ पंकजंदेविसंत्यज्यमम
वेश्मनिसंविश॥ यथासपुत्रभृत्याहंस्वस्थास्यांत्वत्प्रसादतः॥ इतिसंप्रार्थ्यनमेत्॥ इतिमहाष्टम्यांविहितामहालक्ष्मीपूजा॥ ॥

॥ ५४ ॥ अथापराजितापूजा ॥ अपराह्णेग्रामादैशान्यामाचमनादिकृत्वा ममसपरिवारस्यक्षेमायुःपुष्टिमहैश्वर्यविजयसं
पदाद्यभीष्टसिद्धिद्वाराश्रीपरमे० अपराजितापूजनंक० ( राजातु दुरितनाशसकलशत्रुपराभवपूर्वकंविजययशःश्रेयोर्थबलसंप
दभिवृद्धिधनधान्यसमृद्ध्याद्यभीष्टसिद्ध्य इत्यादिवदेत् )॥ गणेशपूजांते उपलिप्तभूमौचंदनादिनालिखिताष्टदलपद्ममध्येमृ
न्मयींलतारूपांवा अपराजितायैनमइत्यपराजितां तद्दक्षिणेक्रियाशक्त्यैनमइतिजयां वामेउमायैनमइतिविजयांचावाह्य षोड
शोपचारैःसंपूज्यनत्वा॥ इमांपूजांमयादेवियथाशक्तिनिवेदितां॥ रक्षणार्थंसमादायव्रजस्वस्थानमुत्तममितिविसृजेत्॥ राजा
तुप्रणामांते॥चारुणामुखपद्मेनविचित्रकनकोज्ज्वला॥ जयादेवीशिवेभक्तासर्वकामान्ददातुमे॥ कांचनेनविचित्रेणकेयूरेणवि

राजिता ॥ विजयातुमहाभागाकरोतुविजयंमम ॥ हारेणसुविचित्रेणभास्वत्कनमेखला ॥ अपराजितारुद्रभक्ताकरोतुविजयं ममेतिप्रार्थ्य हरिद्रारंजितवस्त्रेदूर्वायुतसिद्धार्थान्प्रदक्षिणंवलयाकारेणाबध्य ॥ सदापराजितेयस्मात्त्वंलतासूत्तमामता॥सर्वकामार्थसिद्ध्यैत्वांतस्मात्पूजितवानहं ॥ भवापराजितेदेविममसर्वसमृद्धये॥पूजितायांत्वयिश्रेयोममास्तुदुरितंहतमिति तद्वलयमभिमंत्र्य ॥ जयदेवरदेदेविदशम्यामपराजिते ॥ धारयामिभुजेदक्षेजयलाभाभिवृद्धये ॥ त्वलमाधेहिवलयंमयिशत्रौपराभवं॥ त्वद्धारणाद्भवेयुर्मेधनधान्यसमृद्धयः ॥ इतिदक्षिणभुजेधृत्वाप्राग्वद्विसृजेत् ॥ ॥ छ ॥ ॥ छ ॥

॥ ५५ ॥ शमीपूजाअश्मंतकपूजाच ॥ ततः सर्वेजनाग्रामाद्बहिरैशानदिक्स्थांशमीमभावेश्मंतकंवापूजयेयुः ॥ सीमोल्लंघनंत्वस्मात्प्राक्पश्चाद्वाकार्यं ॥ राजात्वश्वमारुह्यसामात्यपुरोहितःशमीमूलंगत्वावतीर्यदेशकालौस्मृत्वा ममसपरिवारस्यनिखिलदुरितामंगलाधिव्याधिदुःखनिरासपूर्वकं यात्रायांविजयक्षेमैश्वर्यायुरारोग्यसौमंगल्याद्यभीष्टसिद्धिद्वाराश्रीपरमे० शमीपूजनंक० (शम्यलाभेऽश्मंतकपूजनं०) गणेशपूजास्वस्तिवाचनांते शमीमूलेदिक्पालान्वास्तुदेवताश्चसंपूज्य ॥ अमंगलानाशमनींशमनींदुष्कृतस्यच ॥ दुःखप्रणाशिनींधन्यांप्रपद्येहंशमींशुभां ॥ इतिशमींध्यानादिभिःसंपूज्य प्रार्थयेत् ॥ शमीशमयतेपापंशमीलोहितकंटका ॥ धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी ॥ करिष्यमाणयात्रायांयथाकालंसुखंमया॥तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते ॥ अश्मंतकपूजनेतु ॥ अश्मंतकमहावृक्षमहादोषनिवारण ॥ इष्टानांदर्शनंदेहिकुरुशत्रुविनाशनं ॥ इतिप्रार्थ्यराजाशत्रोर्मूर्तिंकृत्वाशस्त्रेणविध्येत्॥ततःशमीमूलगतामार्द्रांसाक्षतांमृदमादायमंगलगीततूर्यघोषैःसहगृहमेत्यवस्त्राभरणा

दिस्वजनैःसहधृत्वास्त्रीभिर्नीराजितोविप्रेभ्योदक्षिणांतांबूलंचदत्वाशिषोगृहीत्वासर्वान्गृहंप्रतिविसृजेत् ॥ ॥ ७ ॥

॥ ५६ ॥ छत्रशस्त्रादिपूजनं ॥ आचम्यदेशकालावुच्चार्यममसपरिवारस्यकीर्त्यायुर्यशोबलविजयादिलौहाभिसारिककर्मकल्पोक्तफलावाप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंछत्रचामरगजाश्वादिराजचिह्नपूजांकरिष्येइतिसंकल्प्यछत्रचामरादिदेवताभ्योनमइतिमंत्रेणपूजयित्वाप्रार्थयेत् ॥ तत्रपृथक्पृथक्मंत्राः ॥ यथांबुदश्छादयतिशिवायेमांवसुंधरां ॥ तथाछादयराजानंविजयारोग्यवृद्धये ॥ इतिछत्रस्य १ ॥ शशांककरसंकाशक्षीरडिंडीरपाडुर ॥ प्रोत्सारयाशुदुरितंचामरामरदुर्लभ ॥ इतिचामरस्य २ ॥ शक्रकेतोमहावीर्यश्यामवर्णार्चयाम्यहं ॥ पत्रिराजनमस्तेस्तुयथानारायणध्वज ॥ काश्यपेयारुणभ्रातर्नागारेविष्णुवाहन ॥ अप्रमेयदुराधर्षरणेदेवारिसूदन ॥ गरुत्मान्मारुतगतिस्त्वयिसन्निहितोयतः ॥ साश्ववर्मायुधान्योधान्रक्षत्वंचरिपून्दह ॥ इतिध्वजस्य ३ ॥ हुतभुग्वसवोरुद्रावायुःसोमोमहर्षयः ॥ नागकिन्नरगंधर्वयक्षभूतगणग्रहाः ॥ प्रमथस्तुसहादित्यैर्भूतेशोमातृभिःसह ॥ शक्रःसेनापतिःस्कंदोवरुणश्चाश्रितस्त्वयि ॥ प्रदहंतुरिपून्सर्वान्राजाविजयमृच्छतु ॥ यानिप्रयुक्तान्यरिभिरायुधानिसमंततः ॥ पतंतूपरिशत्रूणांहतानितवतेजसा ॥ हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा ॥ कालनेमिवधेयद्वद्यद्वत्त्रिपुरघातने ॥ शोभितासितथैवाद्यशोभयास्मांश्चसंचर ॥ नीलश्वेलामिमांदृष्ट्वानश्यंत्वाशुनृपारयः ॥ व्याधिभिर्विविधैर्घोरैःशस्त्रैश्चयुधिनिर्जिताः ॥ पूतनारेवतीनाम्नीकालरात्रिश्चयास्मृता ॥ दहचाशुरिपून्सर्वान्पताकेत्वंमयार्चिता ॥ इतिपताकायाः ४ ॥ असिर्विशसनःखड्गस्तीक्ष्णधारोदुरासदः ॥ श्रीगर्भोविजयश्चैवधर्माधारस्तथैवच ॥ एतानितवनामानिस्वयमुक्तानिवेधसा ॥ नक्षत्रंकृत्तिकातेतु

गुरुर्देवोमहेश्वरः ॥ रोहिण्यश्वशरीरंतेदैवतंचजनार्दनः ॥ पितापितामहोदेवस्त्वंमांपालयसर्वदा ॥ नीलजीमूतसंकाशस्तीक्ष्ण दंष्ट्रःकृशोदरः ॥ भावशुद्धोमर्षणश्चअतितेजास्तथैवच ॥ इयंयेनधृताक्षोणीहतश्चमहिषासुरः ॥ तीक्ष्णधारायशुद्धायतस्मैखड्गा यतेनमः ॥ इतिखड्गस्य ५ ॥ सर्वायुधानांप्रथमंनिर्मितासिपिनाकिना ॥ शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभं ॥ चंडिका याःप्रदत्तासिसर्वदुष्टनिवर्हिणी ॥ तथाविस्तारिताचासिदेवानांप्रतिपादिता ॥ सर्वसत्वांगभूतासिसर्वाशुभनिवर्हिणी॥ छुरिके रक्षमांनित्यंशांतिंयच्छनमोस्तुते ॥ इतिछुरिकायाः ६ ॥ रक्षांगानिगजान्रक्षरक्षवाजिधनानिच ॥ ममदेहंसदारक्षकट्टारकन मोस्तुते ॥ इतिकट्टारकस्य ७ ॥ सर्वायुधमहागात्रसर्वदेवारिषूदन ॥ चापमांसमरेरक्षसाकंशरवरैरिह ॥ धृतःकृष्णेनरक्षार्थसं हारायहरेणच ॥ त्रयीमूर्तिगतंदेवंधनुरस्त्रंनमाम्यहं ॥ इतिधनुषः ८ ॥ प्रासपातयशत्रूंस्त्वमनयाकाममायया ॥ गृहाणजीवि तंतेषांममसैन्यंचरक्षतां ॥ इतिकुंतस्य ९ ॥ शर्मप्रदस्त्वंसमरेचर्मसैन्येयशोद्यमे ॥ रक्षमांरक्षणीयोहंतापंनयनमोस्तुते ॥ इति चर्मणः १० ॥ प्रोत्सारणायदुष्टानांसाधूनांरक्षणायच ॥ ब्रह्मणानिर्मितश्चासिव्यवहारप्रसिद्धये ॥ यशोदेहिसुखंदेहिजयदोभ वभूपतेः॥ ताडयस्वरिपून्सर्वान्हेमदंडनमोस्तुते ॥ इतिकनकदंडस्य ११ ॥ दुंदुभेत्वंसपत्नानांघोरोहृदयकंपनः ॥ भवभूमि पसैन्यानांतथाविजयवर्धनः॥यथाजीमूतघोषेणप्रहृष्यंतिचबर्हिणः॥तथास्तुतवशब्देनत्रस्यंत्वस्मद्विषोरणे॥इतिदुंदुभेः १२ ॥ पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलं ॥ विष्णुनाविधृतोनित्यमतःशांतिप्रदोभव ॥ इतिशंखस्य १३॥ विजयोजयदोजेता रिपुघातीशुभंकरः॥दुःखहाधर्मदःशांतःसर्वारिष्टविनाशनः ॥ एतेवैसन्निधौयस्मात्तवसिंहामहाबलाः ॥ तेनसिंहासनेनत्वंवेदै

मंत्रैश्चगीयसे ॥ त्वयिस्थितःशिवःशांतस्त्वयिशक्रःसुरेश्वरः ॥ नमस्तेसर्वतोभद्रभद्रदोभवभूपतेः ॥ त्रैलोक्यंजयसर्वस्वसिंहास
ननमोस्तुते ॥ इतिसिंहासनस्य १४ ॥ महेंद्रनिर्मितेदिव्येदेवराजादिसेविते ॥ शिविकेपाहिमांनित्यंसदात्वंसंन्निधाभव ॥ इति
शिबिकायाः १५ ॥ गंधर्वकुलजातस्त्वंमाभूयाःकुलदूषकः ॥ ब्राह्मणःसत्यवाक्येनसोमस्यवरुणस्यच ॥ प्रभावाच्चहुताशस्यवर्ध
यत्वंतुरंगमान् ॥ तेजसाचैवसूर्यस्यमुनीनांतपसातथा ॥ रुद्रस्यब्रह्मचर्येणपवनस्यबलेनच ॥ स्मरत्वंराजपुत्रत्वंकौस्तुभंचमणिं
स्मर ॥ यांगतिंब्रह्महागच्छेन्मातृहापितृहातथा ॥ भूमिहानृतवादीचक्षयित्रश्चपराङ्मुखः ॥ सूर्याचंद्रमसौवायुर्यावत्पश्यंतिदुष्कृ
तं ॥ व्रजाश्वतांगतिंक्षिप्रंतच्चपापंभवेत्तव ॥ विकृतंयदिगच्छेथायुद्धाध्वनितुरंगम ॥ रिपून्विजित्यसमरेसहभर्त्रासुखीभव ॥
इतिअश्वस्य १६ ॥ कुमुदैरावणौपद्मःपुष्पदंतोथवामनः ॥ सुप्रतीकोंजनोनीलएतेष्टौदेवयोनयः ॥ तेषांपुत्राश्चपौत्राश्चवनान्य
ष्टौसमाश्रिताः ॥ मंद्रोभद्रोमृगश्चैवगजःसंकीर्णएवच ॥ वनेवनेप्रसूतास्तेस्मरयोनिंमहागज ॥ यांतुत्वावसवोरुद्राआदित्याःस
मरुद्गणाः ॥ भर्तारंरक्षनागेंद्रस्वामिवत्प्रतिपाल्यतां ॥ अवाप्नुहिजयंयुद्धेगमनेस्वस्तिनोव्रज ॥ श्रीस्तेसोमाद्बलंविष्णोस्तेजःसूर्या
ज्जवोऽनिलात् ॥ स्थैर्यंमेरोर्जयंरुद्राद्यशोदेवात्पुरंदरात् ॥ युद्धेरक्षंतुनागास्त्वांदिशश्चसहदैवतैः ॥ अश्विनौसहगंधर्वैःपांतुत्वां
सर्वतःसदा ॥ इतिगजस्य १७ ॥ छत्रादिष्वन्यतमद्येषांसद्मसुयत्सुलभंतत्संपूज्यतत्तन्मंत्रैःप्रार्थयेत् ॥ ॥ छ ॥

॥ ५७ ॥ कोजागरीपूजा ॥ देशकालोत्कीर्तनांतेममलक्ष्मींद्रप्रीतिद्वारासकलदुःखदारिद्र्यनिरासपूर्वकंदीर्घायुरारोग्यपु
त्रपौत्रमहैश्वर्यसुखसंपदभिवृद्धिकुलाभ्युदयाद्यभीष्टसिद्ध्यर्थंकोजागरव्रतांगभूतंलक्ष्मींद्रपूजनंकरिष्ये ॥ आसनविधिंन्यासान्क

लशाद्यर्चनंनिर्विघ्नतायैगणपतिपूजाचक० ॥ पृथ्वीत्यादिपुरुषसूक्तन्यासांते ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदक
र्दमचिक्लीतेंदिरासुताऋषयःश्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः
अंत्याबृहती व्यंजनानिबीजानि स्वराःशक्तयः विंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थंश्रीसूक्तन्यासेपूजायांच
विनियोगः ॥ ॐ हिरण्यवर्णां० मूर्ध्नि ॥ तांमआवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितांहिरण्य० नासि
कायां ॥ चंद्रांप्रभासां० मुखे० ॥ आदित्यवर्णे० कंठे ॥ उपैतुमां० बाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥
मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु० ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं०जंघयोः ॥
तांमआवह० पादयोः ॥ यःशुचिःप्र० सर्वांगे ॥ अथांगुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायैनमः त
र्जनीभ्यां० ॥ रजतस्रजायै० मध्यमाभ्यां० ॥ चंद्रायैनमः अनामिकाभ्यां० ॥ हिरण्मय्यैनमः कनिष्ठिकाभ्यां० ॥ लक्ष्म्यैन
मः करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ ततःकलशार्चनादिसंभारप्रोक्षणांतेपीठपूजा ॥ गुंगुरुभ्यो० पंपरमगुरुभ्यो० पंप
रात्परगुरुभ्यो० पंपरमेष्ठीगुरुभ्यो० ॥ वामभागे गंगणपतयेनमः दुंदुर्गायै० क्षंक्षेत्रपालाय० मध्येआधारशक्त्यै० मूलप्रकृ
त्यै० कालाग्निरुद्राय० मंमंडूकाय० कूर्माय० वराहाय० अनंताय० भूम्यै० अमृतार्णवाय० रत्नद्वीपाय० हेमगिरये० नंद
नोद्यानाय० मणिभूम्यै० रत्नमंडपाय० कल्पतरवे० रत्नसिंहासनाय० इतिसंपूज्य ॥ आग्नेयादिषु धर्माय० ज्ञानाय० वैरा
ग्याय० ऐश्वर्याय० ॥ पूर्वादिषु अधर्माय अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ऊर्ध्वंब्रह्मणेनमः अधःअनंताय० मध्ये

वास्तुपुरुषाय० इत्यावाह्य ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय इत्यष्टौलोकपाला नावाह्य॥गणपतिचतुष्टयं गणपतये० दुर्गायै० क्षेत्रपालाय०वास्तोष्पतये० चतुर्दिक्ष्वावाह्यसंपूज्य॥ ततऐरावतारूढौलक्ष्मींद्रौ तत्रसक्तुमिवतितेतिलक्ष्मीं इंद्रत्वावृषभमितींद्रंचआवाहयेत्॥ अथध्यानं ॥ यासापद्मासनस्थाविपुलकटितटीपद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिताशुभ्रवस्त्रोत्तरीया॥लक्ष्मीर्दिव्यैर्गजेंद्रैर्मणिगणखचितैः स्नापिताहेमकुंभैर्नित्यंसापद्महस्तामभव सतुगृहेसर्वमांगल्ययुक्ता ॥ चतुर्दंतगजारूढोवज्रपाणिःपुरंदरः ॥ शचीपतिश्चध्यातव्योनानाभूषणभूषितः ॥ श्रीलक्ष्मींद्रदेवते ध्यायामीतिध्यात्वा॥ॐ हिरण्यवर्णां० सहस्रशीर्षा० ॥ आगच्छेहमहालक्ष्मिसर्वसंपत्प्रदायिनि ॥ यावद्व्रतंसमाप्येतताव्स्त्वंस न्निधाभव॥आवाहयामि ॥ तांमआवह० पुरुषएवेदं० ॥अनेकरत्नसंयुक्तंनानामणिगणान्वितं ॥ कार्तस्वरमयंदिव्यमासनंप्रति गृह्यतां ॥ आसनं० ॥ अश्वपूर्वां० एतावानस्य० ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं ॥ तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्य तां ॥ पाद्यं० ॥ कांसोस्मितां० त्रिपादूर्ध्व०॥निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि ॥ ऐरावतस्थितेदेविगृहाणार्घ्यंनमोस्तुते ॥ अर्घ्यं० ॥चंद्रांप्रभासां० तस्माद्विराळ० ॥ कर्पूरेणसुगंधेनसुरभिस्वादुशीतलं ॥ तोयमाचमनीयार्थंलक्ष्मित्वंप्रतिगृह्यतां ॥ आ चमनीयं०॥ आदित्यवर्णे० यत्पुरुषेण० ॥ मंदाकिन्याःसमानीतैर्हेमांभोरुहवासितैः॥ स्नानंकुरुष्वदेवेशिसलिलैश्चसुगंधिभिः ॥ स्नानं० ॥ दधिमधुसमायुक्तंपात्रयुग्मसमन्वितं ॥ मधुपर्कंगृहाणत्वंशुभदाभवशोभने ॥ मधुपर्कस० ॥ कनिक्रदद्दिति सुगंध तैलेनमंगलस्नानं० आप्यायस्वेतिपंचामृतस्नानं० आपोहिष्ठेतिशुद्धोदकस्नानं० पूर्वपूजांसमाप्य श्रीसूक्तादिभिर्महाभिषेकः ॥

तदस्तुमित्रा० गृहावैप्रतिष्ठा०॥मध्येऐरावतस्थितलक्ष्मींद्रमूर्तींस्थापयामि ॥ उपैतु० तंयज्ञं० ॥ पट्टकूलयुगंदेविकंचुकेनसमन्वितं॥परिधेहिकृपाकृत्वादुर्गेदुर्गार्तिनाशिनि ॥ वस्त्रं ॥ क्षुत्पिपासा० तस्माद्यज्ञात्सर्वहुतः ॥ स्वर्णसूत्रमयंदिव्यंब्रह्मणानिर्मितंपुरा ॥ उपवीतंमयादत्तंगृहाणपरमेश्वरि ॥ उपवीतं० ॥ गंधद्वारां० तस्माद्यज्ञात्सर्वहुतऋचः० ॥ श्रीखंडंचंदनं० चंदनं ॥ सौभाग्यसूत्रंवरदेसुवर्णमणिसंयुते ॥ कंठेबध्नामिदेवेशिसौभाग्यंदेहिमेसदा ॥ कंठसूत्रंस० ॥ ताडपत्रंमयादेविहेमनिर्मितमुत्तमं ॥ कर्णाभ्यांभूषणंदेविगृहाणजगदंबिके ॥ ताडपत्रं० ॥ हारकंकणकेयूरमेखलाकुंडलादिभिः ॥ रत्नाढ्यंकुंडलोपेतंभूषणंप्रतिगृह्यतां ॥ अलंकारान्० ॥ हरिद्रारंजितेदेविसुखसौभाग्यदायिनि ॥ तस्मात्त्वांपूजयाम्यत्रदुःखशांतिंप्रयच्छमे॥हरिद्रां० ॥ कुंकुमंकांतिदंदिव्यंकामिनीकामसंभवं ॥ कुंकुमेनार्चितेदेविप्रसीदपरमेश्वरि ॥ कुंकुमं० ६॥ सिंदूरमरुणाभासंजपाकुसुमसंनिभं ॥ पूजितासिमयादेविप्रसीदपरमेश्वरि ॥ सिंदूरं० ॥ चक्षुर्भ्यांकज्जलंरम्यंसुभगेशांतिकारके ॥ कर्पूरज्योतिरुत्पन्नंगृहाणपरमेश्वरि ॥ कज्जलं० ॥ अक्षताश्चसु० अक्षतान्० ॥ चंदनागरुकर्पूरकुंकुमंरोचनंतथा ॥ कस्तूर्यादिसुगंधांश्चसर्वांगेषुविलेपये ॥ अहिरिवेतिपरिमलद्रव्यं० ॥ मनसःकाममा० तस्मादश्वा० माल्यादीनि० पुष्पंस० ॥ मुक्ताफलयुतांमालांरत्नवैडूर्यसुप्रभां ॥ माणिक्यस्वर्णग्रथितांगृह्यतांवरदेनमः ॥ रत्नमालां० ॥ पुष्पैर्नानाविधैर्दिव्यैःकुमुदैरथचंपकैः ॥ पूजार्थंग्रथितातुभ्यंमालेयंप्रतिगृह्यतां ॥ पुष्पमालांसमर्प० ॥ अथांगपूजा ॥ लक्ष्म्यैनमः पादौपूजयामि जयंत्यै० गुल्फौ० कात्यायन्यै० जंघे० शांत्यै० गुह्यं० वरदायै० नाभिं० देव्यै० स्तनौ० महाबलायै० बाहू० दैत्यनाशिन्यै० हस्तौ० ऐरावतस्थितायै० कंठं० सरस्वत्यै०

मुखं० वंशरूपिण्यै० नेत्रे० भक्तिप्रियायै० ललाटं० जगदात्मिकायै० शिरःपू० लक्ष्मींद्रसहितायै० सर्वांगंपू० ॥ अथप
त्रीपूजा ॥ लक्ष्म्यैनमः चंपकपत्रंसमर्पयामि गौर्यै० करवीरपत्रं० नित्यायै० विष्णुक्रांतप० प्रकृत्यै० जातीपत्रं० सुरवंदि
तायै० विल्वप० शाकंभर्यै० पारिजातप० कल्याण्यै० दाडिमीप० सिद्ध्यै० सेवंतिकाप० कौमार्यै० धत्तूरप० दुर्गायै०वकु
लप० शांतिरूपिण्यै० तुलसीप० पार्वत्यै० शमीप० जगन्मात्रे० अपामार्गप० लोकवंदितायै० गोकर्णप० शांत्यै०अगस्ति
प० इतिपत्रीपूजा ॥ अथपुष्पपूजा ॥ लक्ष्म्यै० सुवर्णपुष्पं० ऐरावतस्थितायै० पद्मपु० लोकवंदितायै० सेवंतिकापुष्पं० वै
ष्णव्यै० गोकर्णपुष्पं विद्युल्लतायै० मुनिपुष्पं० सिद्धिदायै० जपापुष्पं० वेदमात्रे० केतकीपु० जयायै० जातीपु० इंदिरा
यै० तगरपु० प्रकृत्यै० करवीरपु० शांत्यै० धत्तूरपु० ऋद्ध्यै० पारिजातपु० सिद्ध्यै० वकुलपु० तुष्ट्यै० विष्णुक्रांतपु० कर
वीरक्षेत्राधिपत्यायै० चंपकपु० इतिपुष्पपूजा॥अथावरणपूजा० ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै०
चामुंडायै० लक्ष्म्यै० सिद्धिदायै० अभीष्टसिद्धिं० १ ॥ गजाननायै० सिंहमुखायै० गृध्रास्यायै० कालतुंडिकायै०उष्ट्रग्रीवा
यै० हयग्रीवायै० वाराह्यै० अभीष्टं० २ ॥ दुर्गायै० सिंहवाहिन्यै० महादेव्यै० कालरात्र्यै० धर्मचारिण्यै० कालिकायै०
महालक्ष्म्यै० सरस्वत्यै० अभीष्ट० ३ ॥ इंद्राद्यष्टौलोकपालान्० अभीष्ट० ४ ॥ दीप्तायै० सूक्ष्मायै० जयायै० विजयायै०
भद्रायै० विभूत्यै० विमलायै० आधारायै० विद्युल्लतायै० विश्वतोमुख्यै० अभीष्टसिद्धिं० ५ ॥ असितांगभैरवाय० रुरु०
चंड० क्रोध० उन्मत्त० कपाल० भीषण० संहार० अभीष्ट० ६ ॥ आदित्यादिनवग्रहान् अभीष्ट० ७ ॥ इत्यावरणपूजा ॥

अथलक्ष्म्यष्टोत्तरशतनामभिः अक्षतपुष्पैःपूजाकार्या ॥ कर्दमेनप्र० यत्पुरुषं० ॥ दशांगंगुग्गुलंधूपंकृष्णागरुसमन्वितं॥धूपंदे
विप्रदास्यामिलक्ष्मित्वंप्रतिगृह्यतां ॥ धूपं० ॥ आपःस्रजंतु० ब्राह्मणोस्य० आज्यंचवर्तिं० दीपं० ॥ आर्द्रांपु० चंद्रमाम०॥ मो
दकापूपलड्डूकवटकोदुंबरादिभिः ॥ संयुतंपायसेनान्नंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं० ॥ आचम्यतांत्वयादेविभक्तिंमेह्यचलांकु
रु ॥ ईप्सितंमेवरंदेहिपरत्रचपरांगतिं ॥ आचमनं० ॥ करोद्वर्तनकंदेविसुगंधैःपरिवासितैः ॥ ईप्सितंमेवरंदेहि० ॥ करोद्वर्त
नं० ॥ पूगीफलमितितांबूलं० हिरण्यगर्भेतिदक्षिणां० इदंफलमितिफलं० ॥ श्रियेजात०॥चक्षुर्दंसर्वलोकानांतिमिरस्यनिवा
रणं ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि ॥ इतिनीराजनं० ॥ आर्द्रांयःक० नाभ्याआसीत्० अन्यथाशरणं० नमस्का
रः ॥ तांमआवह० सुप्तास्यां० यानिकानिच० प्रदक्षिणाः॥यःशुचिः०यज्ञेनयज्ञ० नमोमहद्भ्योनमो०॥ नमस्तेसर्वदेवानांवरदा
सिहरिप्रिये ॥ यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् ॥ विचित्रैरावतस्थायभास्वत्कुलिशपाणये॥पौलोम्यालिंगितांगायस
हस्राक्षायतेनमः ॥ इतिमंत्रपुष्पं ॥ गीतंवाद्यंनृत्यमि० ॥ प्रार्थना ॥ नमोदेव्यै० ॥ समस्तसंपत्सुखदांमहाश्रियंसमस्तकल्याण
करींमहाश्रियं ॥ समस्तसौभाग्यकरींमहाश्रियंभजाम्यहंज्ञानकरींमहाश्रियं ॥ समस्तभूतांतरसंस्थितात्वंसमस्तभोक्त्रीश्वरिवि
श्वरूपे ॥ तन्नास्तियत्त्वद्व्यतिरिक्तवस्तुत्वत्पादपद्मंप्रणमाम्यहंश्रीः ॥ शांत्यैनमोस्तुशरणागतरक्षणायैकांत्यैनमोस्तुदुरितक्षयका
रणायै ॥ क्षांत्यैनमोस्तुकमनीयगुणाश्रयायैधात्र्यैनमोस्तुधनधान्यसमृद्धिदायै ॥ सर्वमंगलसंपूर्णासर्वैश्वर्यसमन्विता ॥ आयां
हिश्रीमहालक्ष्मीस्त्वत्कलामयितिष्ठतु ॥ इतिप्रार्थना ॥ पूजायायत्कृतंकर्मज्ञानतोज्ञानतोपिवा ॥ तत्सर्वंक्षम्यतांदेविप्रसीदपरमे

श्वरि ॥ इतिपूजासमर्पणं ॥ निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि ॥ तथापिभक्त्यालक्ष्मित्वंगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यं दत्वा यस्यस्मृत्येतिनत्वा कर्मणःसांगतासिद्ध्यर्थंब्राह्मणपूजांकरिष्ये॥ अनेनकोजागरव्रतपूजनेनभगवत्यौलक्ष्मींद्रदेवतेप्रीयेतां व्रतसांगतार्थंव्रतकथाश्रवणंअक्षक्रीडांचकरिष्ये ॥ नारिकेलोदकंपीत्वाअक्षक्रीडांसमारभेत् ॥ नारिकेलान्पृथुकांश्चदेवपितृभ्यः ब्राह्मणेभ्यश्चोपहारंसमर्प्यबंधुभिःस्वयंभक्षयेत् ॥ विप्रेभ्योभूयसींदत्वाशिषोग्राह्याः ॥ इतिकोजागरीपूजासंपूर्णा ॥ ॥ छ ॥

॥५८॥ कार्तिकस्नानं ॥ मुहूर्तावशिष्टरात्रौतीर्थादौगत्वाविष्णुंस्मृत्वा देशकालौ० ममानेकजन्मार्जितमहापातकादिसमस्तपापक्षयद्वाराश्रीराधादामोदरप्रीत्यर्थंकार्तिकस्नानमहंकरिष्ये इतिसंकल्प्य ॥ नमःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेस्तुहृषीकेशगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदत्वा ॥ कार्तिकेऽहंकरिष्यामिप्रातःस्नानंजनार्दन ॥ प्रीत्यर्थंतवदेवेशदामोदरमया सह ॥ ध्यात्वाऽहंत्वांचदेवेशजलेस्मिन्स्नातुमुद्यतः ॥ तवप्रसादात्पापंमेदामोदरविनश्यतु ॥ इतिमंत्राभ्यांस्नात्वा पुनरर्घ्यंदद्यात् ॥ तत्रमंत्रौ ॥ व्रतिनःकार्तिकेमासिस्नातस्यविधिवन्मम ॥ गृहाणार्घ्यंमयादत्तंदनुजेंद्रनिषूदन ॥ नित्येनैमित्तिकेकृष्णकार्तिकेपापनाशिनि ॥ गृहाणार्घ्यंमयादत्तंराधयासहितोहरे ॥ अर्घ्यं ॥ अयंविधिःप्रतिदिनंसमानःआदावनुदितहोमवत् ॥ मलापकर्षणनित्यस्नानंसंध्यावंदनंचकृत्वातदनंतरंकार्तिकस्नानंकुर्यादितिकमलाकरः॥ अशक्तस्यतुकार्तिकस्नानेननित्यस्नानस्यप्रसंगसिद्धिः। यथाकन्याग्निहोत्रेणनित्याग्निहोत्रस्य॥ अपिवातंत्रं तंत्रपक्षेनित्यस्नानंकार्तिकस्नानंचतंत्रेणकरिष्यइतिसंकल्प्य नमःकमलनाभाय० इत्यर्घ्यंदत्वानित्यस्नानमंत्रान्पठित्वास्नायात्॥ नित्यस्नानार्घ्यंतेव्रतिनःकार्तिकेमासीतिमंत्राभ्यामर्घ्यंदद्यात्॥

॥ ५९ ॥ आकाशदीपः ॥ ममश्रीराधादामोदरप्रीतिद्वारादिव्यतेजोरूपैश्वर्यसंपदभिवृद्धिपूर्वकं समस्तपित्रुद्धारविष्णुभ वनप्राप्त्यादिफलसिद्ध्यर्थं अद्यारभ्यमासपर्यंतंप्रत्यहमाकाशदीपदानंकरिष्ये ॥ ततोगृहादनतिदूरेगोमयोपलिप्तेसचंदनजलो क्षितेदेशेऽष्टदलालंकृते यथोक्तप्रमाणनिखातस्तंभोपरिघंटाष्टकस्रग्वस्त्रपताकाकलशादिशोभितंपरितोदलस्थिताष्टदीपंमध्येऽ भ्रकादिकरंडस्थितंमहाप्रकाशंदीपंप्रज्वाल्यगंधादिनासंपूज्यप्रदक्षिणांते ॥ दामोदरायनभसितुलायांदोलयासह॥ प्रदीपंतेप्रय च्छामिनमोनंतायवेधसे ॥ इतिसमर्प्यनमस्कुर्यात् ॥ अयंदीपःपूर्वजैःसहस्त्रोद्धारायप्रत्यब्दंप्रतिसद्मदेयः ॥ ॥ छ ॥

॥ ६० ॥ धात्रीपूजनविधिः ॥ आचम्यदेशकालोत्कीर्तनांतेममसमस्तपापक्षयपूर्वकपुत्रपौत्रादिसंततियशोबलप्रज्ञामेधा [illegible]ग्यारोग्यविष्णुभक्तिप्राप्त्यर्थंधात्रीपूजांकरिष्ये ॥ संभारप्रोक्षणांते ॐ धात्र्यैनमइतिनाममंत्रेणधात्रींहरिद्राकुंकुमादिसौ व्यसमर्पणपूर्वकंषोडशोपचारैःसंपूज्यनाममंत्रैःपुष्पाणिसमर्पयेत् ॥ ॐधात्र्यै० शांत्यै० कांत्यै० मेधायै० प्रकृत्यै० विष्णु यै० महालक्ष्म्यै० रमायै० कमलायै० इंद्राण्यै० लोकमात्रे० कल्याण्यै० कमनीयायै० सावित्र्यै० जगद्धात्र्यै० गायत्र्यै० अव्यक्तायै० विश्वरूपायै० सुरूपायै० अब्धिभवायै० २१इति॥ततोधात्रीमूलेसव्येनैवमंत्राभ्यांतर्पणंकार्यं॥ पितापि न्येअपुत्रायेचगोत्रिणः॥वृक्षयोनिगतायेचयेचकीटत्वमागताः॥ रौरवेनरकेयेचमहारौरवसंज्ञके ॥ तिर्यग्योनिगताये ंडमध्यगाः॥ पिशाचत्वंगतायेचयेचप्रेतत्वमागताः॥तेपिवंतुमयादत्तंधात्रीमूलेऽक्षयंपयः ॥ आब्रह्मस्तंबपर्यंतंदेवर्षि वाः॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः॥ ततोधात्रींसूत्रेणवेष्टयेत् ॥ दामोदरनिवासायैधात्र्यैदेव्यैनमोनमः॥सूत्रे

णानेनत्वभ्रामिसर्वदेवनिवासिनीं॥ततोधात्र्यैनमःइतिचतुर्दिक्ष्वन्नवलीन्दत्वाऽष्टदिक्ष्वष्टौदीपान्प्रज्वाल्यसमर्पयेत्॥ इमेदीपाम
यादत्ताःप्रदीप्ताघृतपूरिताः ॥ धात्रिदेविनमस्तुभ्यमतःशांतिंप्रयच्छमे ॥ ततोधात्रीमष्टकृत्वःप्रदक्षिणीकृत्यनमेत् ॥ धात्रिदे
विनमस्तुभ्यंसर्वपापक्षयंकरि ॥ पुत्रान्देहिमहाप्राज्ञेयशोदेहिबलंचमे ॥ प्रज्ञांमेधांचसौभाग्यंविष्णुभक्तिंचशाश्वतीं॥ नीरोगंकु
रुमांनित्यंनिष्पापंकुरुसर्वदा ॥ सर्वस्वंकुरुमांदेविधनवंतंतथाकुरु ॥ संवत्सरकृतंपापंदूरीकुरुममाक्षये ॥ ततोघृतपूर्णंसहेमकां
स्यपात्रंब्राह्मणायदद्यात्॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतं ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिताः ॥ इति ॥ ॥

॥ ६१ ॥ गोवत्सद्वादशीपूजा ॥ आचम्यदेशकालौनिर्दिश्यममेहजन्म निजन्मांतरेचअखिलकामनासिद्धिद्वारागोरोम
कोटिवर्षपर्यंतस्वर्वासकामागोवत्सद्वादशीव्रतकल्पोक्तफलावाप्तयेसवत्सगोःपूजांकरिष्ये॥ कलशाद्यर्चनसंभारप्रोक्षणांते॥नमो
गोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच॥नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ ध्यानं ॥ आगच्छदेविकल्याणिशुभांपूजां
गृहाणच ॥ वत्सेनसहितांत्वाहंदेवीमावाहयाम्यहं ॥ आवाहनं ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितं ॥ आसनंतेमयादत्तं
गृहाणजगदंबिके॥ श्रीरुद्ररूपिण्यैगवेनमःआसनं ॥ सौरभेयिसर्वहितेपवित्रेपापनाशिनि ॥ गृहीष्वैतन्मयादत्तंपाद्यंत्रैलोक्य
वंदिते ॥ पाद्यं॥ सर्वदेवमयेदेविसर्वतीर्थमयेशुभे ॥ गृहाणार्घ्यंमयादत्तंसौरभेयिनमोस्तुते ॥ अर्घ्यं ॥ देहस्थितासिरुद्राणीशं
करस्यसदाप्रिया ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ आचमनीयं॥ यालक्ष्मीःसर्वलोकेषुयाचदेवेष्ववस्थिता ॥ धेनुरूपेण
सादेवीममपापंव्यपोहतु॥ स्नानं॥ संभवेपंचामृतादिदत्वामहाभिषेकः॥ आच्छादनंगवेदद्यांसम्यक्शुद्धंसुशोभनं॥ सुरभिर्व

स्त्रदानेनप्रीयतांपरमेश्वरी ॥ वस्त्रं ॥ सर्वदेवमयेदेविचंदनंचंद्रसन्निभं ॥ कस्तूरीकुंकुमाढ्यंचसुगंधिप्रतिगृह्यता ॥ चंदनं ॥
अक्षताश्च० अलंकारान्सौभाग्यद्रव्याणिपरिमलद्रव्याणिच ॥ माल्यादीनिसुगंधीनि० ॥ पुष्पाणि पुष्पमालाच ॥ न्यासः ॥
शृंगमूलयोर्ब्रह्मविष्णून्यसामि शृंगाग्रयोःसर्वतीर्थानि० ललाटेमहादेवं० ललाटाग्रेमहादेवीं० नासावंशेषण्मुखं०कर्णयोरश्वि
नौ० चक्षुषोःशशिभास्करौ० दंतेषुवायुं० जिह्वायांवरुणं० हुंकारेसरस्वतीं० गंडयोःयमधर्मौ०ओष्ठयोः संध्याद्वयं० ग्रीवा
यांइंद्रं० कुक्षिदेशेरक्षांसि० उरसिसाध्यान्० चतुष्पादेषुधर्मं० खुरमध्येगंधर्वान्० खुराग्रेपन्नगान्० खुरपार्श्वेष्वप्सरसः० पृष्ठे
एकादशरुद्रान्० सर्वसंधिषुवसून्० श्रोणीतटेपितॄन्० लांगूलेसोमं० वालेषुआदित्यरश्मीन्० गोमूत्रेगंगां० क्षीरेसरस्वतीं०
दध्निनर्मदां० सर्पिषिहुताशनं० रोमसुत्रयस्त्रिंशत्कोटिदेवान्० उदरेपृथिवीं० पयोधरेषुसागरान्न्यसामि ॥ देवद्रुमरसोद्भूतोगो
घृतेनसमन्वितः ॥ प्रयच्छामिमहाभागेधूपोयंप्रतिगृह्यतां ॥ धूपं० ॥ आनंदकृत्सर्वलोकेदेवानांचसदाप्रियः ॥ गौस्त्वमादिज
गन्नाथोदीपोयंप्रतिगृह्यतां ॥ दीपं० ॥ सुरभिस्त्वंजगन्मातर्देविविष्णुपदेस्थिता ॥ सर्वदेवमयेग्रासंमयादत्तमिमंग्रस ॥ गोग्रास
नैवेद्यं ॥ करोद्वर्तनार्थेचंदनं तांबूलंफलंदक्षिणांचसमर्प्य ॥ नीराज्यकर्पूरदीपंचसमर्प्य ॥ पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥
तासांमध्येतुयानंदातस्यैदेव्यैनमोनमः ॥ नमस्कारः ॥ यानिकानिचपापानि० इतिप्रदक्षिणाः ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभे
यीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ पुष्पांजलिः ॥ गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेनि
त्यंगवांमध्येवसाम्यहं ॥ सुरभिस्त्वंजगन्मातर्नित्यंविष्णुपदेस्थिते ॥ सर्वदेवमयेदेविसर्वदेवैरलंकृते ॥ मातर्ममाभिलाषितंसफलं

कुरुनंदिनि ॥ इत्यादिसंप्रार्थयेत् ॥ पुष्पांजल्यंतेताम्रपात्रेगंधपुष्पाक्षतयुतंजलंगृहीत्वा ॐमातारुद्राणांदुहितावसूनां० इदं मर्घ्यमितिगोःपादमूलेविप्रोर्घ्यंदद्यात्॥ स्त्रीशूद्रादिस्तु ॥ क्षीरोदार्णवसंभूतेसुरासुरनमस्कृते ॥ सर्वदेवमयेमातर्गृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदद्यात् ॥ अर्घ्यदानांतेतज्जलंसाक्षतंस्वमूर्ध्निनिक्षिप्यमापादिसिद्धान्वटकान्गोग्रासार्थंदद्यात् ॥ ॥ छ ॥

॥६२॥ गुरुद्वादशीपूजा ॥ आचमनादिदेशकालकीर्तनांतेसपरिवारस्यममधर्मार्थकाममोक्षचतुर्विधपुरुपार्थसिद्ध्यर्थंश्रीपादश्रीवल्लभश्रीगुरुदत्तात्रेयरूपीश्रीसद्गुरुप्रीत्यर्थंषोडशोपचारैः पूजांकरिष्ये॥यथाधिकारमासनवविधिन्यासकलशाद्यर्चनसंभारप्रोक्षणांते ध्यायेत् ॥ ब्रह्मानंदंपरमसुखदंकेवलंज्ञानमूर्तिंद्वंद्वातीतंगगनसदृशंतत्त्वमस्यादिलक्ष्यं ॥ एकंनित्यंविमलमचलंसर्वधीसाक्षिभूतंभावातीतंत्रिगुणरहितंसद्गुरुंतंनमामि ॥ काषायवस्त्रंकरदंडधारिणंकमंडलुंपद्मकरेणशंखं॥ चक्रंगदाभूषितभूपणाढ्यंश्रीपादराजंशरणंप्रपद्ये॥इत्यादिध्यात्वापुरुपसूक्तेनषोडशोपचारैर्यथाविभवंपूजयेत् ॥ सांगतासिद्ध्यैब्राह्मणभोजनंसंकल्प्य कृत्वापुराणश्रवणादिनारात्रिंनयेत्॥ पूजायांविशेषोग्रेदत्तजयंतीप्रसंगेउक्तःसएवात्रापिग्राह्यः ॥ ॥ छ ॥ ॥ छ ॥

॥ ६३ ॥ यमदीपदानं ॥ त्रयोदश्यांसायंसंध्यावंदनोत्तरंदेशकालौसंकीर्त्य ममापमृत्युविनाशार्थंयमदीपदानंकरिष्येइति संकल्प्य तिलतैलसहितंदीपंगंधाक्षतपुष्पैरलंकृतंगृहाद्बहिर्दक्षिणस्यांदिशिनिधायमंत्रंपठेत् ॥ मृत्युनापाशदंडाभ्यांकालेनश्यामयासह ॥ त्रयोदश्यांदीपदानात्सूर्यजःप्रीयतांमम ॥ अनेनदीपदानेनश्रीयमःप्रीयतां ॥ इतियमदीपः ॥ ॥ छ ॥

॥ ६४ ॥ नरकचतुर्दशी ॥ लांगलोद्धृतंसमूलमपामार्गवृक्षंकंटकमंजरीपत्रसहितमार्द्रं तथातुंबीवृक्षंचक्रमर्दवृक्षंचानीय

उक्तकाले देशकालौसंकीर्त्यममनरकभयपरिहारार्थं सुगंधितैलाभ्यंगपूर्वकंमंगलस्नानंकरिष्ये ॥ स्नानसमये अपामार्गादिवृक्ष
त्रयंशिरःप्रभृत्यंगेषुप्रादक्षिण्येनपरितोभ्रामयेत् ॥ तत्रमंत्रः ॥ सीतालोष्टसमायुक्तसकंटकदलान्वित ॥ हरपापमपामार्गभ्राम्य
माणःपुनःपुनः ॥ एवंत्रिवारंततोधिकंवाकार्यं प्रतिभ्रमणंमंत्रावृत्तिः ॥ चक्रमर्दस्तरोटाइतित्र्यंचकक्षेत्रादिषुप्रसिद्धः ॥ क्वचित्
टाकळाइतिप्रसिद्धः ॥ उक्तवृक्षाणामलाभेकेवलेनापामार्गवृक्षेणैवभ्रामणंकार्यं ॥ अभ्यंगस्नानोत्तरंयमतर्पणं तच्चयज्ञोपवीति
नाप्राचीनावीतिनावाकार्यं॥यज्ञोपवीतित्वेदेवतीर्थेनसाक्षताभिरद्भिःप्राङ्मुखेनत्रिस्त्रिःकार्यं जीवत्पितृकेणतुयज्ञोपवीतिनैवदे
वतर्पणधर्मेणकार्यं ॥ ममनरकभयनिरासार्थंयमप्रसादसिद्ध्यर्थंचनरकचतुर्दश्यांयमतर्पणंकरिष्ये ॥ यमंतर्पयामि धर्मराजं०
मृत्युं० अंतकं० वैवस्वतं० कालं० सर्वभूतक्षयं० औदुंबरं० दध्नं० नीलं० परमेष्ठिनं० वृकोदरं० चित्रं० चित्रगुप्तं० १४इति॥
ततः ॥ यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः ॥ भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति ॥ इमंश्लोकं
दशवारंजपेत् ॥ अनेनतर्पणेनयमःप्रीयतां ततोधृतमंगलतिलकवस्त्राभरणःसुहृद्भिःसहकृतोपहारोगीतादिनादिनंनयेत् ॥ ॥

॥ ६५ ॥ लक्ष्मीपूजनम् ॥ आचमनादिदेशकालोत्कीर्तनांतेऽस्माकमित्यादि ममश्रीमहालक्ष्मीप्रीतिद्वाराअलक्ष्मीपरिहा
रपूर्वकंविपुलश्रीप्राप्तिसन्मंगलमहैश्वर्यकुलाभ्युदयसुखसमृद्ध्यादिकल्पोक्तफलसिद्ध्यर्थंलक्ष्मीपूजनंकुबेरपूजनंचकरिष्ये॥ आस
नविधिंन्यासान्कलशाद्यर्चनंनिर्विघ्नतासिद्ध्येगणपतिपूजनंचकरिष्ये ॥ पुरुषसूक्तंन्यस्य॥ श्रीसूक्तन्यासंविभवेसतिद्वारपूजापी
ठपूजादिपूर्वोक्तकोजागरपूजोक्तवत्कृत्वा सक्तुमिवतितेतिमंत्रेणश्रीसूक्तमंत्रैर्वालक्ष्मीं कुबेरायनमःइतिकुबेरंचावाह्यध्यायेत ॥

(केचिदत्रलेखनीमषीपात्राद्युपकरणसहितेआयव्ययलेखपुस्तकेसरस्वतीमपितंत्रेणपूजयंतितदासरस्वत्याअप्यावाहनं) ॥ ध्या
यामितांमहालक्ष्मींकर्पूरक्षोदपांडुरां ॥ शुभ्रवस्त्रपरीधानांमुक्ताभरणभूषितां ॥ पंकजासनसंस्थानांस्मेराननसरोरुहां ॥ शारदें
दुकलाकांतिंस्निग्धनेत्रांचतुर्भुजां ॥ पद्मयुग्माभयवरव्यग्रचारुकरांबुजां ॥ अभितोगजयुग्मेनसिच्यमानांकरांबुना ॥ ध्यानं ॥
हिरण्यवर्णां० सहस्र० ॥ महालक्ष्मिसमागच्छपद्मनाभपदादिह ॥ पूजामिमांगृहाणत्वंत्वदर्थंदेविसंभृतां ॥ आवाहनं ॥ तांमआ०
पुरुष० ॥ आलयस्तेहिकथितःकमलंकमलालये ॥ कमलेकमलेह्यस्मिन्स्थितिंमत्कृपयाकुरु ॥ आसनं ॥ अश्वपूर्वां० एतावां० ॥
गंगादिसलिलाधारंतीर्थमंत्राभिमंत्रितं ॥ दूरयात्राश्रमहरंपाद्यंमेप्रतिगृह्यतां ॥ पाद्यं ॥ कांसोस्मितां० त्रिपादूर्ध्व० ॥ तीर्थोदकै-
र्महापुण्यैःकल्पितंपापहारकैः ॥ गृहाणार्घ्यंमहालक्ष्मिभक्तानामुपकारिणि ॥ अर्घ्यं ॥ चंद्रांप्र० तस्माद्वि० ॥ कर्पूरागुरुसंमि
श्रंशीतलंजलमुत्तमं ॥ लोकमातर्गृहाणेदंदत्तमाचमनंमया ॥ आचमनं० आदित्यवर्णे० यत्पुरुषेण० ॥ स्नानायतेमहालक्ष्मि
कर्पूरागुरुवासितं ॥ आहृतंसर्वतीर्थेभ्यःसलिलंप्रतिगृह्यतां ॥ स्नानं ॥ आप्यायस्वेत्यादिभिःपंचामृतं ॥ पयोदधिघृतंदेविमधु
शर्करयायुतं ॥ पंचामृतंमयादत्तंस्नानार्थंप्रतिगृ० ॥ कर्निकद० अभ्यंगस्नानं ॥ गंधद्वारां० गंधोदकं ॥ शुद्धोदकं ॥ गंधा
दिपूर्वपूजांतेमहाभिषेकः ॥ उपैतुमां० तंयज्ञं० ॥ तंतुसंतानसंयुक्तंकलाकौशलकल्पितं ॥ सर्वांगाभरणश्रेष्ठंवसनंपरिधीयतां ॥
वस्त्रं ॥ क्षुत्पिपासा० तस्माद्यज्ञा० ॥ कंचुकं उपवस्त्रंच ॥ गंधद्वारां० तस्माद्यज्ञा० ॥ मलयाचलसंपन्नंनानापन्नगरक्षितं ॥ शीत
लंबहुलामोदंचंदनंप्रतिगृह्यतां ॥ चंदनं ॥ अक्षतान् ॥ अर्हिरिव० ॥ तालपत्रंमयानीतंहरिद्राकुंकुमांजनं ॥ सिंदूरालक्तकंदास्ये

सौभाग्यद्रव्यमीश्वरि ॥ सौभाग्यद्रव्यं ॥ रत्नकंकणकेयूरकांचीकुंडलनूपुरं ॥ मुक्ताहारंकिरीटंचगृहाणाभरणानिमे ॥ अलंकारान् ॥ मनसःकाममा० तस्मादश्वा० ॥ मिलत्परिमलामोदमत्तालिकुलसंकुलं ॥ गृहाणनंदनोत्पन्नंपद्मेकुसुमसंचयं ॥ पुष्पाणि ॥ अथांगपूजा ॥ श्रियै० पादौपू० लक्ष्म्यै० जानुनी० पद्मायै० ऊरू० धात्र्यै० कटिं० रमायै० उदरं० वरदायै० स्तनौ० लोकमात्रे० कंठं० चतुर्भुजायै० बाहू० ऋद्ध्यै० मुखं० सिद्ध्यै० नासिकां० पुष्ट्यै० नेत्रे० तुष्ट्यै० ललाटं० इंदिरायै० शिरः० सर्वैश्वर्यै० सर्वांगं० ॥ अथपत्रपूजा ॥ श्रियै० पद्मपत्रं० लक्ष्म्यै० दूर्वा० पद्मायै० तुलसी० धात्र्यै० बिल्व० रमायै० चंपक० वरदायै० बकुल० लोकमात्रे० मालती० चतुर्भुजायै० जाती० ऋद्ध्यै० आम्र० सिद्ध्यै० मल्लिका० पुष्ट्यै० अपामार्ग० तुष्ट्यै० अशोक० इंदिरायै० करवीर० हरिप्रियायै० बदरी० भूत्यै० दाडिमी० ईश्वर्यै० अगस्ति ॥ कर्दमेन० यत्पुरुषं० ॥ गंधसंभारसंनद्धंनानाद्रुमरसोद्भवं ॥ सुरासुरनरानंदंधूपंदेविगृहाणमे ॥ धूपं ॥ आपःसृजंतु० ब्राह्मणोस्य० ॥ मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसां ॥ निदानंदेविदीपोऽयंकल्पितस्तवभक्तितः ॥ दीपं ॥ आर्द्रांपु० चंद्रमा० ॥ एलालवंगशर्करादिमिश्रगोक्षीरलड्डुकादि नैवेद्यः ॥ देवतालयपातालभूतलाधारधान्यजं ॥ षोडशाकारसंभारंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं ॥ इदंफलं० फलं ॥ पातालतलसंभूतंवदनांभोजभूषणं ॥ नानागुणसमायुक्तंतांबूलंदेविगृ० ॥ तांबूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ श्रियेजात० चंद्रादित्यौ० महानीराजनं ॥ आर्द्रांयःक० नाभ्याआसी० ॥ नमोदेव्यै० नमस्कारः ॥ तांमआवह० सप्तास्या० यानिकानि० प्रदक्षिणाः ॥ यःशुचिः० यज्ञेन० सर्वस्याद्यामहा० पुष्पांजलिं ॥ गीतंवाद्यंनृत्यमित्यादि० ॥ प्रार्थना ॥ कमलाचपलालक्ष्मीश्चलाभूतिर्हरिप्रिया ॥ पद्मा

पद्मालयासंपदुच्चैःश्रीःपद्मधारिणी ॥ नमस्तेसर्वदेवानांवरदासिहरिप्रिये ॥ यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् ॥
यादेवीसर्वभूतेषुलक्ष्मीरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ धनदायनमस्तुभ्यंनिधिपद्माधिपायच ॥
भवंतुत्वत्प्रसादान्मेधनधान्यादिसंपदः ॥ अत्रपूजायांगुडमिश्रधान्याकबीजंशर्कराखंडांल्लाजांश्चार्पयंतिशिष्टाः ॥ आवाहनं
नजानामीत्यादिपूजांसमापयेत् ॥ ततोब्राह्मणानुपाहारादिनासंतोष्यभूयसींदक्षिणांदत्वापुराणगीतादिनारात्रिंनयेत् ॥ ॥

॥ ६६ ॥ गोवर्धनादिपूजाविधिः ( अन्नकूटोत्सवः ) ॥ मुख्यगोवर्धनसंनिधौतस्यैवपूजनं ॥ तदसंनिधौगोमयादिना
तद्रूपंकृत्वातत्सहितश्रीगोपालमूर्तिपूजनंकार्यं ॥ तत्रप्रतिपदिप्रातरभ्यंगस्नानंकृत्वाधृतमंगलतिलकःस्त्रीभिःकृतनीराजनोनि
त्यकर्मांतेआचम्यदेशकालौनिर्दिश्य ममश्रीकृष्णप्रीतिद्वारासकलपापक्षयपूर्वकंकोटिशोधेनुप्राप्तिपुष्ट्यायुःक्षेमादिसिद्ध्यर्थंगोव
र्धनसहितश्रीगोपालपूजनंगोवृंदपूजनंचकरिष्ये इतिसंकल्प्य गणेशपूजादिसंभारप्रोक्षणांते॥बलिराज्ञोद्वारपालोभवानद्यभवप्र
भो ॥ निजवाक्यार्थनार्थायसगोवर्धनगोपते ॥ इतिगोवर्धनयुतंगोपालमावाह्य भक्ष्यभोज्यादिनिवेदनपूर्वकंषोडशोपचारैःसंपू
ज्यप्रार्थयेत् ॥ गोपालमूर्तेविश्वेशशक्रोत्सवविभेदक ॥ गोवर्धनकृतच्छत्रपूजांमेहरगोपते ॥ गोवर्धनधराधारगोकुलत्राणकार
क ॥ विष्णुबाहुकृतच्छायगवांकोटिप्रदोभव ॥ ततःपंचोपचारैर्गोवत्सादीन्संपूज्यप्रार्थयेत् ॥ लक्ष्मीर्यालोकपालानांधेनुरूपेण
संस्थिता ॥ घृतंवहतियज्ञार्थेममपापंव्यपोहतु ॥ गावोममाग्रतःसंतु० ॥ प्रत्यक्षगवामसंनिधौमृदादिप्रतिमासुपूजाकार्या ॥
ततोवृतर्त्विग्द्वारागृहसिद्धान्नेन आगावोअग्मन्० प्रैतेवदंतु० इतिमंत्राभ्यांहोमःकार्यः ॥ स्त्रीशूद्रादीनांतूक्तपौराणमंत्राभ्यां

(लक्ष्मीर्यालोक० गोवर्धन०) होमांते विप्रान्सुहृदश्चविशेषान्नैःसंभोज्यविप्रेभ्योधेनुंदीनेभ्यश्चान्नंदत्वागोभ्योयवसमन्नग्रा संगिरयेवलिंचदद्यात् ॥ ततोगाःशरत्पुष्पादिभिरलंकृत्यस्वयंभुक्तवद्भिःस्वलंकृतैःस्वनुलिप्तैःसुवेषैर्गोब्राह्मणहोमाग्निगिरीन्प्र- दक्षिणीकुर्वद्भिस्तथागोभिःसहप्रदक्षिणाकार्या ॥ यथागोभिरपिब्राह्मणादीनांप्रदक्षिणाकृताभवति ॥ तद्दिनेगवांदोहनंभार वाहनंचवर्ज्यं ॥ इतिगोवर्धनपूजान्नकूटोत्सवविधिःसमाप्तः ॥ ततोऽपराह्णेमार्गपालीबंधनादिविधिःसिंध्वादौज्ञेयः ॥ ॥

॥ ६७ ॥ वलिराजपूजा ॥ अस्मिन्दिनेप्रतिसद्मप्रातः तथा रात्रौराजागृहमध्येप्रांगणेवाभूमौपंचरंगैःकृतेमंडलेतैरेववलि मालिख्यपूजयेत् ॥ नृत्यगीतप्रेक्षणकैश्चतांरात्रिंनयेत् ॥ लोकैस्तु शय्यायांशुक्लतंडुलैस्तमालिख्यपूजयेत् ॥ ममश्रीविष्णुसांनि ध्यसिद्ध्यर्थंवलिपूजांकरिष्ये ॥ मंत्रः ॥ वलिराजनमस्तुभ्यंविरोचनसुतप्रभो ॥ भविष्येंद्रसुराराातेपूजेयंप्रतिगृह्यतां ॥ प्रार्थना ॥ वलिराजनमस्तुभ्यंदैत्यदानववंदित॥इंद्रशत्रोऽमराराातेविष्णुसांनिध्यदोभव ॥ ततोवलिप्रीत्यर्थंवस्त्रादिदत्वाऽग्निर्ज्योतिरिति दीपान्दद्यात् ॥ अत्रमंगलस्नानातिरिक्तंसर्वंयथाचारंकार्यं नित्यत्वाभावात् ॥ राज्ञःकर्तव्यविशेषःकृत्यरत्नावल्यांद्रष्टव्यः ॥

॥६८॥ यमद्वितीयापूजा॥देशकालकथनांते ममश्रीयमप्रीत्यर्थंयमादिदेवतानांपूजनंकरिष्ये ॥ ततोयमंचित्रगुप्तंयमदूतां श्चावाह्यसंपूज्य ॥ एह्येहिमार्तंडजपाशहस्तयमांतकालोकधरामरेश॥ भ्रातृद्वितीयाकृतदेवपूजांगृहाणचार्घ्यंभगवन्नमस्ते ॥ इत्य र्घ्यंदत्वा ॥ धर्मराजनमस्तुभ्यंनमस्तेयमुनाग्रज ॥ त्राहिमांकिंकरैःसार्धंसूर्यपुत्रनमोस्तुते ॥ यमस्वसर्नमस्तेस्तुयमुनेलोकपूजिते ॥ वरदाभवमेनित्यंसूर्यपुत्रिनमोस्तुते॥इतियमंयमुनांचप्रणम्यकर्मसमाप्तिः ॥ अत्र भगिनीत्ववश्यंभ्रातरंसंभोज्यतांबूलादिनापूज

येत् तदित्थं ॥ ममश्रीयमप्रीतिद्वाराअवैधव्यप्राप्त्यर्थंभ्रातुरायुरभिवृद्ध्यर्थंचयमपूजनंभ्रातृभोजनंवस्त्रादिभिस्तत्पूजनंचक रिष्ये ॥ यमपूजांतेभ्रातरंगंधादिनासंपूज्यभोजयेत् ॥ भ्रातस्तवानुजाताहंभुंक्ष्वभोज्यमिदंशुभं ॥ प्रीतयेयमराजस्ययमुना याविशेषतः॥ ज्येष्ठातुभ्रातस्तवाग्रजाताहमितिवदेत्॥ भोजनांतेचतांबूलादिदत्वा॥ मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ चिरंजीवीयथैवत्वंतथामेभ्रातरंकुरु ॥ इतिप्रार्थ्यकर्मसमापयेत् ॥ भ्रातापि भगिनींवस्त्रालंकारादिभिःपूजयेत् ॥ सोदर्या- दिभगिन्यभावेभगिनीत्वेनव्यवहृतयासहायंपूजादिविधिःकार्यइतिकृत्यरत्नावल्यादौस्पष्टं ॥ इतियमद्वितीया ॥ ॥

॥ ६९ ॥ कूष्मांडनवमी ॥ देशकालौनिर्दिश्यममब्रह्महत्यादिसमस्तपापक्षयपूर्वकंपुत्रपौत्रसौभाग्यादिसकलमनोरथावा प्तिकूष्मांडवीजसमसहस्रसंख्याब्दब्रह्मलोकनिवासकामःश्रीपरमेश्वरप्रीत्यर्थंब्राह्मणाययथाशक्त्युपस्करयुतंकूष्मांडदानंकरिष्ये तदंगंतत्पूजनंब्राह्मणपूजनंचकरिष्ये ॥ कूष्मांडदेवताभ्योनमइतितंसंपूज्य ब्राह्मणंचसंपूज्य स्वस्त्यस्तु० ॥ ब्रह्महत्यादिपापघ्नं ब्रह्मणानिर्मितंपुरा ॥ कूष्मांडंवहुवीजाढ्यंपुत्रपौत्रादिवृद्धिदं ॥ मुक्ताप्रवालहेमादियुक्तंदत्तंतवद्विज ॥ अनंतपुण्यफलद मतःशांतिंप्रयच्छमे ॥ इमंश्रीहिराशिस्थंकूष्मांडमिक्षुदंडचुक्रामलकदीपाद्युपस्करयुतंब्राह्मणायसंप्रददे ॥ ॥

॥७०॥ एकादशीपूजा ॥ आचमनादिदेशकालकीर्तनांतेसपरिवारस्यममश्रीमहाविष्णुप्रीतिद्वारासकलपापक्षयपूर्वकंध र्मार्थकाममोक्षचतुर्विधपुरुपार्थसिद्ध्यर्थंपोडशोपचारैर्महाविष्णुपूजांकरिष्ये ॥ यथाधिकारंन्यासादिकृत्वाकलशार्चनादिसं भारप्रोक्षणांते ॥ येभ्योमाता० एवापित्रे० इतिपठित्वा शांताकारमितिविष्णुंध्यायेत् ॥ चतुर्भुजंमहाकायंजांवूनदसमप्रभं ॥

शंखचक्रगदापद्मरमागरुडशोभितं ॥ सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः ॥ एवंविधंहरिंध्यात्वाततोयजनमारभेत् ॥ श्रीमहा
विष्णुंध्यायामि ॥ सहस्रशीर्षा० ॥ आवाहयामिदेवेशंभक्तानामभयप्रदं ॥ स्निग्धकोमलकेशंचमनसावाहयेहरिं ॥ आवाहनं ॥
पुरुषएवेदं० ॥ सुवर्णमणिभिर्दिव्यैरचितेदेवनिर्मिते ॥ दिव्यसिंहासनेकृष्णउपविश्यप्रसीदमे ॥ आसनं ॥ एतावानस्य० ॥ पादो
दकंसुरश्रेष्ठसुवर्णकलशेस्थितं ॥ गंधपुष्पाक्षतैर्युक्तंपाद्यंमेप्रतिगृह्यतां ॥ पाद्यं ॥ त्रिपादूर्ध्वउदैत्० ॥ अष्टद्रव्यसमायुक्तंस्वर्णपा
त्रोदकंशुभं ॥ अभयंकरभक्तानांगृहाणार्घ्यंजगत्पते ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ कर्पूरेणसमायुक्तमुशीरेणसुवासितं ॥ दत्तमाच
मनीयार्थंनीरंस्वीक्रियतांविभो ॥ आचमनीयं ॥ यत्पुरुषेण० ॥ गंगागोदावरीचैवयमुनाचसरस्वती ॥ नर्मदासिंधुकावेरीताभ्यः
स्नानार्थमाहृतं ॥ स्नानं ॥ पृथक्पंचामृतस्नानादिमहाभिषेकांतंकुर्यात् ॥ आचमनं ॥ तंयज्ञं० ॥ वस्त्रयुग्मंसमानीतंपट्टसूत्रेण
निर्मितं ॥ सुवर्णखचितंदिव्यंगृहाणत्वंसुरेश्वर ॥ वस्त्रं ॥ तस्माद्यज्ञा० ॥ कार्पासतंतुभिर्युक्तंब्रह्मणानिर्मितंपुरा ॥ अनेकरत्न
खचितमुपवीतंगृहाणभो ॥ उपवीतं ॥ तस्माद्यज्ञा० ॥ चंदनंमलयोद्भूतंकस्तूरीचारुचंदनं ॥ कर्पूरेणचसंयुक्तंस्वीकुरुष्वानुले
पनं ॥ चंदनं ॥ हरिद्रादिसौभाग्यद्रव्यं भूषणानिच ॥ अहिरिवभोगैः० परिमलद्रव्याणि ॥ तस्मादश्वा० ॥ शतपत्रैश्चकह्लारैश्चंप
कैर्मल्लिकादिभिः ॥ तुलसीयुक्तपुष्पाणिगृहाणपुरुषोत्तम ॥ पुष्पाणि ॥ तुलसीकुंदमंदारपारिजातांबुजैस्तुया ॥ पंचभिर्ग्रथितामा
लावनमालेतिकथ्यते ॥ वनमालां ॥ अत्रसहस्रतुलस्यर्पणं० ॥ यत्पुरुषं० ॥ दशांगंगुग्गुलोद्भूतंसुगंधंचमनोहरं ॥ कृष्णागुरुस
मायुक्तंधूपंदेवगृहाणमे ॥ धूपं ॥ ब्राह्मणोस्य० ॥ साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥

दीपं ॥ चंद्रमामनसो० ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नानाविधोपहारादिनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं० ॥ मध्येपानी
यं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनं० पूगीफलमितितांबूलं ॥ इदंफलमितिफलं ॥ हिरण्यगर्भेतिद
क्षिणां ॥ चंद्रादित्यौचधरणीवि० आर्तिंक्यदीपं० ॥ नाभ्याआसी०नमोस्त्वनंताय० नमस्कारं॥सप्तास्यासन्०यानिकानिच० ॥
प्रदक्षिणां ॥ यज्ञेनयज्ञ० ॥ देवदेवजगन्नाथगोपालप्रतिपालक॥गोपदैःकृतसंत्राणगृहाणकुसुमांजलिं ॥ मंत्रपुष्पांजलिं० ॥ मंत्र
हीनंक्रियाहीनं० इतिप्रार्थनां॥ (क्वचिदर्घ्याण्यपिददत्येभिर्मंत्रैः॥ अनंतंवामनंशौरिंवैकुंठमपराजितं ॥ गृहाणार्घ्यंमयादत्तंमातु
रुत्संगसंस्थितं ॥ इदमर्घ्यं ॥ देवकीगर्भसंभूतंयशोदानंदनंहरिं ॥ गरुडध्वजंश्रीधरंचसृष्टिस्थित्यंतकारणं ॥ इदमर्घ्यं ॥ नमः
कमलनाभायनमस्तेजलशायिने॥नमस्तेस्तुहृषीकेशगृहाणार्घ्यंनमोस्तुते ॥ इदमर्घ्यं) अनेनकृतपूजनेनश्रीमहाविष्णुःप्रीयतां ॥

॥ ७१ ॥ प्रबोधोत्सवतुलसीविवाहौ ॥ देशकालौसंकीर्त्यश्रीदामोदरप्रीत्यर्थंप्रबोधोत्सवंसंक्षेपतस्तुलसीविवाहविधिंच
तंत्रेणकरिष्ये॥तदंगतयापुरुषसूक्तेनविधिनाषोडशोपचारैस्तंत्रेणश्रीमहाविष्णुपूजांतुलसीपूजांचकरिष्ये ॥ गणपतिंसंपूज्यन्या
सादिविधाय कलशार्चनादिसंभारप्रोक्षणांते शांताकारमितिविष्णुंध्यात्वा ॥ ध्यायामितुलसींदेवींश्यामांकमललोचनां ॥ प्रस
न्नांपद्मकह्लारवराभयचतुर्भुजां॥किरीटहारकेयूरकुंडलादिविभूषितां॥ धवलांशुकसंवीतांपद्मासननिषेदुषीं ॥ इतितुलसींचध्या
त्वासहस्रशीर्षेतिश्रीमहाविष्णुंतुलसींचावाह्य ॥ पुरुषएवेदमित्यादिभिः ॥ त्रैलोक्यजननीदेविसर्वलोकैकपावनि ॥ संपूजयामिदे
वेशितुलसित्वांहरिप्रिये॥ इतिपौराणेनचश्रीमहाविष्णवेदामोदरायश्रीदेव्यैतुलस्यैचनमआसनमित्यादिस्नानांतेमंगलवाद्यैःसुगं

धितैलहरिद्राभ्यांनागवल्लीदलगृहीताभ्यांउष्णोदकेनच कनिक्रददितिमंगलस्नानंविष्णवेतुलस्यैचसुवासिनीभिःकारयित्वास्व
यंवादत्वा पंचामृतस्नानंसमर्प्यशुद्धोदकेनाभिषिच्यवस्त्रयज्ञोपवीतचंदनंदत्वातुलस्यैहरिद्राकुंकुमकंठसूत्रमंगलालंकारान्द
त्वामंत्रपुष्पांतपूजांसमाप्यघंटादिवाद्यघोषेणदेवंप्रबोधयेत् ॥ तत्रमंत्राः इदंविष्णु० ॥ योजागार० इतितुआचारप्राप्तः ॥
ब्रह्मेंद्ररुद्राग्निकुवेरसूर्यसोमादिभिर्वंदितवंदनीय ॥ बुध्यस्वदेवेशजगन्निवासमंत्रप्रभावेणसुखेनदेव ॥ इयंचद्वादशीदेवप्र
बोधार्थंतुनिर्मिता ॥ त्वयैवसर्वलोकानांहितार्थंशेषशायिना ॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते ॥ त्वयिसुप्तेजगत्सुप्त
मुत्थितेचोत्थितंजगत्॥एवमुत्थाप्य चरणंपवित्रं०॥ गतामेघावियच्चैवनिर्मलंनिर्मलादिशः ॥ शारदानिचपुष्पाणिगृहाणममके
शव॥इत्यादिमंत्राभ्यां पुष्पांजलिंदद्यात्॥ अथाचारात्तुलसीसंमुखांश्रीकृष्णप्रतिमांकृत्वामध्येंतःपटंधृत्वामंगलाष्टकपद्यानिपठि
त्वाअंतःपटंविसृज्याक्षताप्रक्षेपंकृत्वादामोदरहस्तेतुलसीदानंकुर्यात् ॥ देवींकनकसंपन्नांकनकाभरणैर्युतां ॥ दास्यामिविष्णवेतु
भ्यंब्रह्मलोकजिगीषया ॥ मयासंवर्धितांयथाशक्त्यलंकृतामिमांतुलसींदेवींदामोदरायश्रीधरायवरायतुभ्यमेहंसंप्रददे ॥
इतिदेवपुरतःसाक्षतजलंक्षिपेत् ॥ श्रीमहाविष्णुःप्रीयतामित्युक्त्वाइमांदेवींप्रतिगृह्णातुभवान् इतिवदेत् ॥ ततोदेवह
स्तस्पर्शंतुलस्याःकृत्वा ॥ कइदंकस्माअदात्कामःकामायादात्कामोदाताकामःप्रतिग्रहीताकामंसमुद्रमाविश कामेनत्वाप्रतिगृ
ह्णामिकामैतत्तेवृष्टिरसिद्यौस्त्वाददातुपृथिवीप्रतिगृह्णातु ॥ इतिमंत्रमन्येनवाचयेत्॥ यजमानः ॥ त्वंदेविमेग्रतोभूयास्तुलसीदे
विपार्श्वतः ॥ देवित्वंपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ दानस्यप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांसंप्रददे इतिदेवपुरतोदक्षिणाम

र्पयेत् ॥ ततःस्वस्तिनोमिमीता० शंनइंद्राग्नीइत्यादिस्वस्वशाखोक्तानिशांतिसूक्तानिविष्णुसूक्तानिचपठेयुः॥ तुलसीयुतायविष्ण
वेमहानीराजनंकृत्वामंत्रपुष्पंदत्वा सपत्नीकःसगोत्रजःसामात्योयजमानश्चतस्रःप्रदक्षिणाःकुर्वीत ॥ ब्राह्मणेभ्योदक्षिणांदत्वा
यथाशक्तिब्राह्मणभोजनंसंकल्प्यकर्मेश्वरार्पणंकुर्यात्॥ इतिधर्मसिंधुव्रतराजसंश्लिष्टःप्रबोधोत्सवतुलसीविवाहप्रयोगःसंपूर्णः ॥

॥ ७२ ॥ वैकुंठचतुर्दशी ॥ देशकालावुच्चार्यअस्माकमित्यादिममवैकुंठचतुर्दशीव्रतकल्पोक्तफलावाप्तयेइत्यादिसंकल्प्य
निशीथेविष्णुंतुलसीपत्रकमलादिभिःसंपूज्य ॥ ततःप्रातःस्नानोत्तरंबिल्वपत्रद्रोणपुष्पकमलादिभिःशिवंसंपूजयेत् ॥ विष्णुपू
जापूर्वमेकादश्युक्तवच्छिवपूजाचपूर्वनिर्दिष्टसोमवारपूजावदेवेतिविस्तरभियानात्रमुहुर्न्यस्तासानिर्दिष्टस्थलादवगंतव्या ॥ ॥

॥ ७३ ॥ त्रिपुरोत्सवः ॥ आचमनादिदेशकालोत्कीर्तनांतेऽस्माकमित्यादिममश्रीशिवप्रीतिद्वारासकलपापक्षयपूर्वकंचि
मलज्ञानशिवसायुज्यादिशुभफलप्राप्तयेत्रिपुराख्यदीपप्रज्वालनंतदंगत्वेनश्रीशिवपूजांचकरिष्ये इतिसंकल्प्य यथाविभवंयथा
धिकारंचशिवंषोडशोपचारैःसंपूज्यगंधादिनालंकृत्य ॥ कीटाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः ॥ दृष्ट्वाप्रदीपंनच
जन्मभाजोभवंतिनित्यंश्वपचाहिविप्राः॥इतित्रिपुरदीपंप्रज्वाल्यसमर्पयेत् ॥ अनेनत्रिपुरदीपप्रज्वालनेनश्रीमत्रिपुरहरःप्री० ॥

॥ ७४ ॥ चंपाषष्ठीपूजा ॥ मार्गशीर्षशुक्लप्रतिपदमारभ्यषष्ठीपर्यंतंप्रत्यहंमल्लारिपूजनंतत्सन्निधौअखंडदीपदानंचकार्यं ॥
आचम्यदेशकालौसंकीर्त्य मल्लारिमार्तंडप्रीत्यर्थंयथामिलितोपचारैःपूजनंकरिष्ये ॥ तदंगत्वेनगणपतिपूजनंकलशाद्यर्चनंचक
रिष्ये इतिसंकल्प्यकृत्वादेवंध्यायेत्॥ ध्यायेन्मल्लारिदेवंकनकगिरिनिभंह्मालसाभूषितांगंश्वेताश्वंखड्गहस्तंविबुधमुनिगणैःसेव्य

मानंकृतार्थैः ॥ युक्तांघ्रिंदैत्यमूर्ध्नांडमरुविलसितंनैशचूर्णाभिरामंनित्यंभक्तेषुतुष्टंश्वगणपरिवृतंनित्यमोंकारगम्यं॥ इतिध्यात्वा मल्लारिमार्तंडायनमःइतिनाममंत्रेणपूजयेत् ॥ ततः तलिकापूजनं तत्प्रकारः ॥ वैश्वदेवंकृत्वानैवेद्यंदत्वादेवाग्रेगोमयेनोपलिप्ते रंगवल्ल्याद्यलंकृतेदेशेपात्रंनिधायतन्मध्ये कलशंनिधायजलेनापूर्यतस्मिन्कमलाकाराणिनागवल्लीदलानिस्थापयित्वातदुपरिना रिकेलफलंनिधायतत्समीपेतांबूलदक्षिणाभंडाराभिधहरिद्राचूर्णंचसंस्थाप्य आचम्यदेशकालौसंकीर्त्यमल्लारिमार्तंडप्रीत्यर्थंम त्कुलाचारप्राप्तंगंधादिनातलिकापूजनंकरिष्ये ॥ तलिकायैनमः इतिमंत्रेणोपचारान्समर्प्यहरिद्राचूर्णंदेवेदत्वाचतुर्भिर्ब्राह्मणैः सह यजमानः एळकोट एळकोट इतिशब्दमुच्चारयन्तलिकोत्थापनंवारत्रयंकार्यं ॥ पश्चान्नारिकेलस्फोटनंकारयित्वातदुदके नदेवं प्रोक्ष्यतांबूलंदक्षिणांनारिकेलबीजांशंचदेवेदत्वापूर्ववत्त्रिवारंतलिकोत्थापनंविधेयं ॥ ततश्चतुर्भ्योब्राह्मणेभ्यःहरिद्राला पनंकृत्वानारिकेलबीजांशंदक्षिणांचदत्वास्वयंहरिद्रांधृत्वानारिकेलबीजांशंभक्षयेत् ॥ इत्याचारः ॥ ॥ छ ॥ ॥ छ ॥

॥ ७५ ॥ दत्तजयंतीपूजा ॥ आचमनादिदेशकालकीर्तनांतेसपरिवारस्यममधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंश्री पादश्रीवल्लभश्रीगुरुदत्तात्रेयरूपीश्रीसद्गुरुप्रीत्यर्थंषोडशोपचारैःपूजांकरिष्ये ॥ यथाधिकारमासनविधिन्यासकलशाद्यर्चनसं भारप्रोक्षणांते॥ ध्यायेत्॥ ब्रह्मानंदंपरमसुखदंकेवलंज्ञानमूर्तिंद्वंद्वातीतंगगनसदृशंतत्त्वमस्यादिलक्ष्यं ॥ एकंनित्यंविमलमचलं सर्वधीसाक्षिभूतंभावातीतंत्रिगुणरहितंसद्गुरुंतंनमामि॥ काषायवस्त्रंकरदंडधारिणंकमंडलुंपद्मकरेणशंखं ॥ चक्रंगदाभूषितभू षणाढ्यंश्रीपादराजंशरणंप्रपद्ये ॥ ध्यायामि ॥ ॐ दीर्घतमामतेयोजुजुर्वान्दशमेयुगे ॥ अपामर्थंयतीनांब्रह्माभवतिसारथिः ॥

सहस्रशीर्षा० ॥ कोटिसूर्यप्रतीकाशंनिजानंदैकविग्रहं ॥ राजद्वैराग्यसाम्राज्यंगुरुमावाहयाम्यहं ॥ आवाहनं ॥ ( सिद्धमूर्तावा वाहनाभावात्पुष्पांजलिः )॥पुरुषएवेदं०॥यमाद्यष्टांगयोगोक्तसिद्धासनविराजते॥मूर्तसद्गुरवेतुभ्यमासनंपरिकल्पये ॥आसनं॥ एतावानस्य० ॥ येनत्रैलोक्यमखिलंव्याप्तंपादत्रयेणहि ॥ तस्मैसद्गुरवेपाद्यंपादयोःप्रददाम्यहं ॥पाद्यं॥ त्रिपादूर्ध्व० ॥ चंदनाक्षत पुष्पादिफलरत्नसमन्वितं ॥ श्रद्धोपकल्पितंचार्घ्यंसद्गुरोप्रतिगृह्यतां ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ एलालवंगकर्पूरकस्तूरीगंधवा सितं॥जलमाचमनीयार्थंदास्येभक्त्याजगद्गुरो ॥ आचमनीयं ॥ यत्पुरुषेण०॥ तीर्थानांलोकपापौघक्षालनोत्थांहसांभिदे ॥ लीलो पात्तावतारायस्नानंसद्गुरवेददे ॥ स्नानं ॥ आप्यायस्वेत्यादिपंचमंत्रैःपृथक्पंचामृतस्नानं ॥ गंधद्वारामितिचंदनोदकस्नानं ॥ आपोहिष्ठेत्यादिभिःशुद्धोदकस्नानं ॥ पंचोपचारैःपूर्वपूजांसमाप्यपुरुषसूक्तविष्णुसूक्तादिभिर्महाभिषेकंकुर्यात् ॥ स्नानांतेआ चमनं ॥ तंयज्ञं० ॥ आशावासायदीक्षांगकाषायवसनायच ॥ काषायमंशुकंदास्येपरिधानायभिक्षवे ॥ वस्त्रं ॥ आचमनं ॥ तस्मा द्यज्ञात्सर्वहुतःसंभृतं०॥पट्टकूलोर्णरोमोत्थवस्त्रमार्गाजिनान्यदः॥प्रावारार्थंप्रदास्यामिपरिव्राडुपयोगिने॥ प्रावरणमुपवीतंवा ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥ कस्तूरीकेशरामोदयुक्तंपाटीरजंरजः॥भस्मोद्धूलितदेहायचंदनंयतयेर्पये ॥ चंदनं ॥ सर्वालंकाररू पायकृत्तिदंडकमंडलून् ॥ दंडिभूषाप्रदान्दास्येदत्तमस्करिणेमुदा॥ अलंकारान् ॥ अहिरिव० ॥ वेदांतकल्पवृक्षोत्थमहावाक्य प्रसूनजं ॥ गंधमाघ्रायतृप्तायदद्यांपरिमलंमुहुः ॥ परिमलद्रव्याणि ॥ तस्मादश्वा० ॥ पुष्पवद्ग्रहनक्षत्रमालिनेज्ञानशालिने ॥ मालत्यादीनिपुष्पाणिगुरवेप्रतिपादये ॥ पुष्पाणि ॥ तुलसीकुंदमंदारपारिजातांबुजैःकृतां ॥ वैजयंतीमिमांमालांगुरुकंठेर्पया

म्यहं ॥ पुष्पमाला ॥ अत्रयथाविभवंसहस्राष्टोत्तरशततुलस्यर्पणं ॥ यत्पुरुषं० ॥ जगत्यामोदजातंयद्यस्मादाघ्रेयतागतं॥आघ्रा णार्थंददेतस्मैधूपंश्रीपादरूपिणे ॥ धूपं ॥ ब्राह्मणोस्य० ॥ यद्भासाभासंतेवह्निःसूर्याचंद्रमसौतडित् ॥ घृतदीपंप्रदास्यामितस्मैस द्गुरवेपुनः ॥ दीपं ॥ चंद्रमाम० ॥ऊरीकृतजगत्पूज्यचतुर्थाश्रमयोगतः॥भिक्षार्थमटमानायभैक्षंदास्यामिभिक्षवे ॥ विश्वंभरोऽनि शंयावदाब्रह्मादिपिपीलिकं ॥ भृणात्यन्नजलाभ्यांयस्तस्मैनैवेद्यमर्पये ॥ नैवेद्यं० ॥ मध्येपानीयंउत्तरापोशनंहस्तप्रक्षालनंमुखप्र क्षालनंकरोद्वर्तनार्थेचंदनं ॥ इदंफलमितिफलानि ॥ पूगीफलमितितांबूलं ॥ हिरण्यगर्भगर्भेतिदक्षिणां ॥ श्रियेजात० ॥ नीरा जितंसुरगणैर्ऋषिभिर्दीपराजिभिः॥तमारार्तिक्यदीपेनगुरुंनीराजयाम्यहं॥आरार्तिक्यं कर्पूरदीपं ॥ नाभ्याआसी० ॥ यत्पाद पद्मममरानिजमूर्धक्लृप्तसद्रत्नवन्मुकुटकोटिभिरानमंति ॥ तंस्वांघ्रिलग्नजनतार्तिहरंदयालुंश्रीसद्गुरुंभयहरंशिरसानमामि ॥ न मोगुरुभ्योगुरुपादुकाभ्योनमःपरेभ्यःपरपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादुकाभ्योनमोस्तुलक्ष्मीपतिपादुकाभ्यः ॥ नमस्का रान् ॥ सप्तास्यासन्०॥स्वर्भूःपाताललोकेषुयदटाव्यादिवानिशं ॥ प्रदक्षिणंकरोमीहसद्गुरुंपादचारतः ॥ प्रदक्षिणाः ॥ यज्ञेनं यज्ञ० ॥ मंत्रविद्भिर्मंत्रशतैर्मंत्रवत्संस्तुतायच ॥ श्रीमत्सद्गुरवेदास्येमंत्रपुष्पांजलिंमुदा ॥ मंत्रपुष्पांजलिं ॥ गीतवाद्यनृत्यछत्रचाम राद्युपचारान्० ॥ प्रार्थना ॥ अनेकजन्मार्जितपापसंघैःसंसारकूपेपतितंगभीरे ॥ पुनःपुनर्जन्ममृतीभजंतंश्रीपादमांतारयपाद लग्नं ॥ बद्धांजलिस्त्वांमुहुरर्थयेहंभवत्पदांभोजरतिर्दृढास्तु ॥ स्वरूपविज्ञानमपिप्रसादान्मुच्येयमोहादपिगर्भवासात् ॥ वाणीगु णानुकथनेश्रवणौकथायांहस्तौचकर्मसुमनस्तवपादयोर्नः॥स्मृत्यांशिरस्तवनिवासजगत्प्रणामेदृष्टिःसतांदर्शनेऽस्तुभवत्तनूनां ।

अपराधसहस्राणिक्रियंतेहर्निशंमया ॥ दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ इत्यादिक्षमापयेत् ॥ इतिश्रीदत्तपूजासंपूर्णा ॥

॥ ७६ ॥ मकरसंक्रांतिः ॥ तिलस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी ॥ तिलभुक्तिलदाताचषट्तिलाःपापनाशनाः॥देशकालौनिर्दिश्यममकायिकवाचिकमानसिकत्रिविधपापनिवर्हणपूर्वकंश्रीसूर्यप्रसादसिद्ध्येतिलकल्कोद्वर्तनपूर्वंस्नानंकरिष्ये॥ इतिसंकल्प्ययथाविधिस्नात्वायथाविभवंश्रीसूर्यनारायणंसंपूज्ययथाशक्तिदानादिकृत्वाअयनश्राद्धंचकुर्यात् ॥ ॥ छ ॥

॥ ७७ ॥ तिलपात्रदानं ॥ ताम्रपात्रेतिलान्कृत्वापलषोडशनिर्मिते ॥ सहिरण्यंस्वशक्त्यावाविप्रायप्रतिपादयेत् ॥ ममवाङ्मनःकायजत्रिविधपापनाशपूर्वकंब्रह्मलोकप्राप्तिकामस्तिलपात्रदानंकरिष्ये॥ उक्तपरिमाणेताम्रपात्रेप्रस्थतिलान्कर्षसुवर्णयुतान्यथाशक्तिसुवर्णयुतान्वाकृत्वाविप्रंसंपूज्य ॥ देवदेवजगन्नाथवांछितार्थफलप्रद ॥ तिलपात्रंप्रदास्यामितवांगेसंस्थितोह्यहं ॥ इतिमंत्रेणदद्यात् ॥ तिलाःपुण्याःपवित्राश्चसर्वपापहराःस्मृताः ॥ शुक्लाश्चैवतथाकृष्णाविष्णुगात्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुमेसदा॥इदंतिलपात्रंयथाशक्तिदक्षिणासहितंसूर्यदैवत्यंब्रह्मलोकप्राप्तिकामस्तुभ्यमहंसंप्रददे ॥ इतिदद्यात् ॥ अग्रेतुपुंस्त्रीकर्तृकानिविविधदानानिव्रतराजस्थानिसंग्रहीष्यंते ॥ ॥ छ ॥

॥७८॥ दधिमंथदानं ॥ प्रातस्तिलकल्कोद्वर्तनेनस्नात्वा शुचिवस्त्रंपरिधाय देशकालौसंकीर्त्य ममश्रीसवितृप्रीतिद्वारादुःखदारिद्र्यनिरासपूर्वकंचिरजीविपुत्रपौत्रयुतधनधान्यसमृद्धिविविधभोगसुखसंपदादिमनोरथसिद्ध्येदधिमंथदानंकरिष्ये॥तदंगंपूजनं०॥उपलिप्तभूमौस्वस्तिकंविरच्य तत्रद्रोणमितगोधूमादिधान्यपुंजोपरि दधिपूर्णभांडंकुंकुमाद्यलंकृतंरक्तसूत्रवस्त्रवेष्टि

तमंथदंडंनिधायोपरिप्रतिमाया यशोदांकृष्णं दंडेदेवींसूर्यंचसंपूज्य परितोष्टदीपान्प्रज्वाल्य लाजेक्षुखंडपृथुकलड्डुकादिनिवेद्य॥ पूजितासिमयादेविदधिमंथनभाजने ॥ यशोदेसुमहाभागेपुत्रंदेहिमनोरमं ॥ श्रीकृष्णपरमानंदसंसारार्णवतारक ॥ पुत्रंदेहिमनोज्ञंमेऋणत्रयविमोक्षणं॥इतिप्रार्थ्यविप्रंसंपूज्य ॥ गृहाणत्वंद्विजश्रेष्ठदधिमंथनभाजनं ॥ नवनीतेनसहितंयशोदासहितंहरिं ॥ प्रसादःक्रियतांमह्यंसूर्यरूपनमोस्तुते ॥ इतितत्पात्रंप्रतिमादियुतंदद्यात् ॥ इतिदधिमंथदानं ॥ ॥ छ ॥

॥ ७९ ॥ संक्रांतिदानानि ॥ अथेदानींमकरसंक्रमेप्रचलितानांस्त्रीकर्तृकविविधदानानांसंग्रहः ॥ तत्रादौसुघटदानं ॥ देशकालौसंकीर्त्य ममश्रीसवितृप्रीतिद्वारासकलपापक्षयपूर्वकंइहजन्मनिजन्मांतरेचस्थिरसौभाग्यकुलाभिवृद्धिधनधान्यसमृद्धिदीर्घायुःपुष्टिमहैश्वर्यमंगलाभ्युदयसुखसंपदादिकल्पोक्तफलसिद्धये अस्मिन्मकरसंक्रमपुण्यपर्वकालेब्राह्मणायधान्यपूर्णसुघटदानंक०॥देयद्रव्यंविप्रंचसंपूज्य॥ मकरेर्केतुसंप्राप्तेसुघटंधान्यपूरितं॥रवेःप्रीतिकरंदास्येसौभाग्यादिफलाप्तये ॥ इदंसुघटदानंसंकल्पहेतवेसंप्रददे ॥ दानसांगतायैदक्षिणांदद्यात्॥एवमग्रेपिसंकल्पादिज्ञेयं ॥ विशेषस्तत्रवक्ष्यते ॥छ॥ अथकरक [ चिलीपिली ] दानं०॥अपत्याद्यभिवृद्धयेकरकदानंकरिष्ये ॥ करकैरन्वितंस्थूलंकलशंबहुभिःफलैः ॥ सोपस्करंप्रयच्छामिवस्त्रसंवेष्टिताननं ॥छ॥ अथदधिमंथपात्र[घुसळण]दानं० ॥ गोमहिषीवृंदरूपसंपदभिवृद्धयेदधिमंथदानं० ॥ दध्नाप्रपूरितंपात्रंवस्त्रकांचनसंयुतं ॥ सेक्षुदंडंप्रदास्यामिगवांवृद्धिकरंपरं ॥छ॥ अथधाणकदानं ॥ मद्गृहेक्षय्यधान्यराशिसमृद्धयेकंडितधान्यदानंक०॥ उलूखलस्थितंधान्यंमुसलाहतिनिस्तुषं ॥ ददामिप्रीतिदंभानोर्धान्यराशिविवर्धनं ॥छ॥ अथवस्त्रपूर्ति [धडवती] दानं॥मम

अविच्छिन्नशुभसंततिवृद्धयेसुवासिन्यैवस्त्रपूर्तिंदानं० ॥ नानाकृतीनिरम्याणिविचित्राणिशुभानिच ॥ वासांसिसंप्रयच्छामिशु
भसंततिवृद्धये ॥छ॥ अथचीरचोलकदानं ॥ ममावैधव्यादिप्राप्तयेचीरचोलकं० ॥ सकंचुकमिदंवस्त्रमनर्घंतुष्टिदंरवेः ॥ पुरं
ध्र्यैतेप्रदास्यामिसौभाग्यंवर्धतांमम ॥ छ ॥ आवापक[आवा]दानं ॥ ममसर्वगुणोपेतभृत्यसुहृद्भर्तृपुत्रादिपरिवृतायाउत्तमगृ
हसुखशांतिसमृद्ध्यादिसिद्धयेआवापकदानंकरिष्ये ॥ धान्यराशौस्थूलसूक्ष्मविविधाकाराणिताम्रमृदादिभांडानिराशीकृत्यपू
जांते ॥ नानाविधानिभांडानिस्थूलसूक्ष्माण्यनेकशः॥ राशीकृतानिदास्यामिसर्वकामसमृद्धये ॥ नानाभांडरचितंइममावापकं
सूर्यदैवत्यंसोपस्करंसंकल्पोक्तफलसिद्धयेनानानामगोत्रेभ्योविप्रेभ्यःसुवासिनीभ्यश्चदातु० ॥ छ ॥ हरिद्रादिदानं॥सुखसौभा
ग्यमंगलाभिवृद्धयेसुवासिनीभ्योहरिद्रादिदानंक० ॥ गौर्याविनिर्मितंपूर्वंसर्वमंगलकारणं ॥ स्त्रीणांसौभाग्यसुखदंहरिद्रादिस
मर्पये ॥ छ ॥ नेत्रदानं ॥ सकलार्थदर्शननिर्मलकीर्तिरूपादिमंगलावाप्तयेनेत्रसंज्ञकदर्पणयुग्मदानंक० ॥ सर्वार्थदर्शनंपुण्यंरू
पकीर्तिविवर्धनं ॥ क्षेमप्रदंप्रयच्छामिनिर्मलंदर्पणद्वयं ॥ छ ॥ हीरदीपदानं ॥ ममविमलज्ञानपुष्टितुष्टिकांत्यादिसिद्धयेहीर
काख्यदीपयुग्मदानं० ॥ स्वच्छंगोधूमराशिस्थंदीपयुग्मघृतान्वितं ॥ हीरवत्कांतिविज्ञानपुष्टितुष्टिकरंददे ॥छ॥ अथानाख्या
त[अवच्चितफल]दानं ॥ सुपुत्रादिफलप्राप्तयेऽनाख्यातफलदानंक० ॥ जलेफलंप्रक्षिप्य ॥ अनाख्यातंजलेक्षिप्तंफलमेतदनुत्त
मं ॥ ससुवर्णंप्रदास्यामिसुपुत्रादिफलप्रदं ॥ छ ॥ अथफलपिंडिका[पेंड]दानं ॥ अखंडवंशवृद्ध्यादिफलप्राप्त्यैफलपिंडिका० ॥
अखंडोत्तारितंभद्रंवंशवृद्धिकरंसदा ॥ ददामितेनारिकेलक्रमुकादिफलोच्चयं ॥ छ ॥ अथफलयुग्म [जोडसंक्रांति] दानं० ॥

सकलाभीष्टसिद्धयेविप्रेभ्योद्वादशफलयुग्मदानंक० ॥ फलद्वादशयुग्मानिनारिकेलोद्भवानिच ॥ विप्रेभ्यःसंप्रदास्यामिसर्वका
मफलाप्तये ॥छ॥ अथवर्धितफलदानं ॥ सतिलंगुडसंयुक्तंफलंप्रीतिकरंनृणा ॥ वर्धितंप्रगृहाणेदमतःशांतिंप्रयच्छमे ॥ छ ॥
अथतप्तजलेतंडुलनिर्वाप[आधणभरणें]दानं॥अक्षय्यान्नपरिपोषतुष्ट्यादिप्राप्त्यैसुतप्तजलेतंडुलावापं० ॥ विप्रगृहंगत्वामहानसे
स्थालीस्थतप्तजलेतंडुलान्निर्वपेत् ॥ स्थाल्यांतप्तांबुयुक्तायामक्षय्यान्नप्रतुष्टये ॥ कुटुंबाशनपर्याप्तांस्तंडुलान्निर्वपाम्यहं ॥ छ ॥
अथघरट्टदानं ॥ सर्वधान्यसमृद्धयेघरट्ट० ॥ शालिगोधूमसंयुक्तंघरट्टंधान्यपेषणं ॥ ददामिसर्वसस्यानांसमृद्धिकरमुत्तमं॥छ॥
अथपाकभांडदानं ॥ नित्यतृप्तिपुष्टिसुखक्षेमाभिवृद्धयेदंपतीभोजनपर्याप्तामान्नसहितंपाकोपकरणस्थालीदर्व्यादिभांडदानंक
रिष्ये ॥ ताम्रायसारकूटानिभांडानिविविधानिच ॥ नित्यतृप्तिसुखार्थायपाकोपकरणंददे ॥ छ ॥ अथरसरंगदानं ॥ भर्तृपु
त्राद्यवियोगसुखप्राप्तयेरसरंगदानंक० ॥ पात्रद्वयमिदंपूर्णंकुंकुमेनगुडेनच ॥ अवियोगसुखार्थायददामिहितमंगलं॥ ॥ अथनि
र्झर [वाहतीधार] दानं ॥ अविच्छिन्नशुभसंततिविविधान्नसमृद्धयेनिर्झरदानं० ॥ प्रवहन्निर्झरक्लिन्नतंडुलप्रस्थपूरितं॥ वस्त्रच्छ
न्नंददेपात्रंवंशवृद्ध्यन्नपूर्तिदं ॥ ॥ अथसिद्धस्थालीदानं ॥ इष्टफलप्राप्त्यै० ॥ सिद्धस्थालीमिमांविप्रसकलाभीष्टसिद्धिदां ॥ सो
पस्करांप्रयच्छामिप्रीयतांमेदिवाकरः ॥ ॥ अथपृष्ठोदरदानं ॥ भ्रातृपुत्रादिविवृद्धयेपृष्ठोदरदानं० ॥ शरावयुगलंविप्रधान्य
पूर्णंमनोहरं ॥ गृहाणविधिनादत्तंसोदरैरसवर्धनं ॥ ॥ अथकुलद्वयदानं ॥ पितृभर्तृकुलाभ्युदयसुखसमृद्धये कुलद्वय० ॥
द्वारोभयप्रदेशस्थंधान्यराशिद्वयंमहत् ॥ प्रकरोतुमयादत्तंपितृभर्तृकुलोदयं ॥ ॥ अथात्रुटितवल्लिदानं ॥ अच्छिन्नवल्लीप्रता

नवत्संततिविस्तरादिसिद्धये अत्रुदित०॥तिलचूर्णकृतंद्रव्यंसगुडंमुष्टिपंचकं ॥ ददामितेनमेभूयाद्वंशवृद्धिःप्रतानवत् ॥ छ ॥
अथमहानसदानं ॥ इहामुत्रक्षुत्तृड्बाधोपशमनार्थंमहानसदानं०॥महानसंगुडमयमिक्षुदंडकृतेंधनं॥क्षुत्तृषोःशमनंनित्यंगृहाणे
दंद्विजोत्तम ॥छ॥ अथेक्षुस्तंवादिहारणं ॥ ऐहिकामुष्मिकसुखभोगप्राप्तयेविप्रैर्विप्रस्त्रीभिर्वेक्षुस्तंवादिहारयिष्ये ॥ संघातमिक्षु
दंडानांपीयूषरसवर्षणं ॥ नानाभोगसुखायेमंहारयाम्यर्कतुष्टये ॥ नारिकेलफलान्यद्यसर्वदेवप्रियाणिच ॥ रुचिराणिसुवृत्ता
निहारयाम्यर्कतुष्टये ॥ स्वादूनिगुडखंडानिरसानांप्रवराणिच॥सर्वप्रियाण्यनर्घाणिहारयिष्येर्कतुष्टये ॥ इमान्यष्टशतेक्षुस्तंबा
दीनि० ॥ ॥ गौरीहरदानं ॥ दांपत्यसुखाभिवृद्धयेगौरीहरदानंक० ॥ गुडगौरीसमाश्लिष्टंनवनीतमयंहरं ॥ ददामिवस्त्रसंयु
क्तंदंपत्योःसुखवर्धनं ॥ ॥ तिलपात्रदानं॥तिलाःकश्यपसंभूतास्तिलाःपापहराःशुभाः ॥ तिलपात्रप्रदानेनअतःशांतिंप्रय० ॥
गृहाणतैजसंपात्रंपरमान्नेनपूरितं॥दानेनानेनमेनित्यंप्रसीदतुदिवाकरः ॥ ॥ वरहस्तदानं ॥ सर्वेष्टदायकंश्रेष्ठंतिलपिष्टंगुडा
न्वितं ॥ वरहस्तप्रदानेनवरदोस्तुरविर्मम ॥ ॥ सूर्यबिंबदानं ॥ विमलकांतिकीर्त्यायुरैश्वर्यादिफलावाप्तये सूर्यबिंबदानंक० ॥
कांस्यपात्रेस्थितंसाज्येस्वर्णबिंबंरवेःशुभं ॥ ददामिकांतिकीर्त्यायुरैश्वर्यसुखपुष्टिदं ॥ इतिसंक्रांतिदानानि ॥ ॥ ॥

॥ ८० ॥ व्यतीपातदानादि ॥ संकल्पपूर्वकंजनार्दनंव्यतीपातंचसंपूज्य ॥ देशकालौसंकीर्त्यममाशेषपापक्षयपूर्वकंश्री
महाविष्णु ( सूर्य )प्रीतयेव्यतीपातपर्वनिमित्तंस्वर्णदानंत्रयोदशामुकफलदानंवाकरिष्ये॥ इतिसंकल्प्य॥ शंकुकर्णप्रलंबोष्ठलं
बभ्रूर्दीर्घनासिक ॥ अष्टनेत्रचतुर्वक्त्रशतयोजनविस्तर ॥ व्यतीपातनमस्तेस्तुसोमसूर्यसुतप्रभो॥ यद्दानादिकृतंकिंचित्तदनंतमि

हास्तुमे ॥ कुरुक्षेत्रमयंदेशोविप्रोनारायणःस्वयं ॥ अनेनस्वर्णदानेनप्रीयतांमेजनार्दनः ॥ इतिव्यतीपातदानं ॥ ॥ ॥

॥ ८१ ॥ माघस्नानं ॥ आचमनादिदेशकालकीर्तनांतेममकायिकवाचिकमानसिकसांसर्गिकसमस्तपापक्षयद्वाराश्रीमाधवप्रीत्यर्थंमाघस्नानंकरिष्ये ॥ इतिसंकल्प्य ॥ माघमासमिमंपूर्णंस्नास्येहंदेवमाधव ॥ तीर्थस्यास्यजलेनित्यमितिसंकल्प्यचेतसि ॥ इत्येकंतीर्थमुपेत्य ॥ दुःखदारिद्र्यनाशायश्रीविष्णोस्तोपणायच ॥ प्रातःस्नानंकरोम्यद्यमाघेपापविनाशनं ॥ मकरस्थेरवौमाघेगोविंदाच्युतमाधव ॥ स्नानेनानेनमेदेवयथोक्तफलदोभव ॥ इमौमंत्रौसमुच्चार्यस्नायान्मौनसमन्वितः ॥ प्रत्यहंसूर्यार्घ्यदानमंत्रः ॥ सवित्रेप्रसवित्रेचपरंधामजलेमम ॥ त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा ॥ इतिसूर्यायार्घ्यंदत्वामाधवंपूजयेत् ॥ ॥

॥ ८२ ॥ रथसप्तमीपूजा ॥ अत्रव्रतेषष्ठ्यामेकभक्तंकृत्वासप्तम्यामरुणोदयेस्नानंकार्यं ॥ तत्रमंत्रः ॥ यदाजन्मकृतंपापंमयाजन्मसुजन्मसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी ॥ एतज्जन्मकृतंपापंयच्चजन्मांतरार्जितं ॥ मनोवाक्कायजंयच्चज्ञाताज्ञातेचयेपुनः॥इतिसप्तविधंपापंस्नानान्मेसप्तसप्तिके ॥ सप्तव्याधिसमायुक्तंहरमाकरिसप्तमि॥ इत्यादिस्नात्वाआचमनादिदेशकालकीर्तनांतेममश्रीसूर्यप्रीतिद्वाराइहजन्मनिजन्मांतरेचाखंडसौभाग्यपुत्रपौत्रधनधान्यादिमनसेप्सितकामनासिद्ध्यर्थं श्रीसूर्यपूजांक० ॥ गणपतिपूजनकलशार्चनसंभारप्रोक्षणांतेरक्तचंदनेनरथारूढंसूर्यंविलिख्यतस्मिन्सूर्यंयंत्रेवा॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ इतिसूर्यंध्यात्वा ॥ पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंस्थश्चद्विभुजःस्यात्सदारविः ॥ इत्यावाहनादिषोडशोपचारान

र्पयेत् ॥ नैवेद्यार्थंतत्रैवपायसंनिर्माययार्पयंतीत्याचारः ॥ पूजांते ॥ नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरिंचिनारायणशंकरात्मने ॥ इतिनत्वा ॥ रक्ताक्षतमाल्योपेतान्यर्घ्याणिदद्यात् ॥ सप्तसप्तिवहप्रीतसप्तलोकप्रदीपन ॥ सप्तमीसहितोदेवगृहाणार्घ्यंदिवाकर ॥ इतिमंत्रेणाथवामित्रायनमःइदमर्घ्यंसमर्पयामि ॥ एवं रवये० सूर्याय० भानवे०खगाय०पूष्णे०हिरण्यगर्भाय०मरीचये० आदित्याय० सवित्रे० अर्काय० भास्कराय०इति॥ एकचक्रोरथोयस्यदिव्यःकनकभूषितः ॥ समेभवतुसुप्रीतःपद्महस्तोदिवाकरः ॥ आवाहनंन०यस्यस्मृत्या० इत्यादिप्रार्थ्यपूजांसमापयेत् ॥

॥ ८३ ॥ शिवरात्रिपूजा ॥ त्रयोदश्यांकृतैकभक्तश्चतुर्दश्यांकृतनित्यक्रियःप्रातर्मंत्रेणसंकल्पंकुर्यात् ॥ देशकालौस्मृत्वा ॥ शिवरात्रिव्रतंह्येतत्करिष्येहंमहाफलं ॥ निर्विघ्नमस्तुमेचात्रत्वत्प्रसादाज्जगत्पते ॥ चतुर्दश्यांनिराहारोभूत्वाशंभोपरेहनि ॥ भोक्ष्येहंभुक्तिमुक्त्यर्थंशरणंमेभवेश्वर ॥ इति ॥ द्विजस्तुरात्रींप्रपद्येजननीमित्यृचावपिपठित्वाजलमुत्सृजेत् ॥ ततःसायाह्नेकृष्णतिलैःस्वगायत्र्याजलाशयेगृहेवास्नात्वा धृतभस्मत्रिपुंड्रुद्राक्षोनिशामुखेशिवायतनंगत्वाक्षालितपादःस्वाचांतउदङ्मुखोदेशकालौसंकीर्त्य शिवरात्रौशिवप्रीत्यर्थंप्रथमयामपूजांकरिष्येइतियामचतुष्टयेभिन्नपूजाचतुष्टयचिकीर्षायांसंकल्पः॥ सकृत्पूजाचिकीर्षायांश्रीशिवप्रीत्यर्थंशिवरात्रौश्रीशिवपूजांकरिष्यइतिसंकल्पः॥तत्रादौसामान्यतःपूजाविधिरुच्यते॥ यामभेदेनविशेषस्तुअग्रेवक्ष्यते॥ तत्रसंकल्पांतेगणेशंसंपूज्यपृथ्वीत्याद्यासनविधिंपौरुषसूक्तन्यासादिविधाय ॥ अस्यश्रीशिवपंचाक्षरमंत्रस्य वामदेवऋषिः अनुष्टुप्छंदः श्रीसदाशिवोदेवता श्रीसदाशिवप्रीत्यर्थे न्यासेपूजनेजपेचविनियोगः ॥ वामदेवऋषयेनमः शिर

नि॥ अनुष्टुप्छंदसेनमोमुखे ॥ श्रीसदाशिवदेवतायैनमोहृदि ॥ ॐ नंतत्पुरुषायनमःहृदये ॥ ॐ मं अघोरायनमःपादयोः ॥ ॐ सिंसद्योजातायनमःगुह्ये ॥ ॐ वांवामदेवायनमःमूर्ध्नि ॥ ॐ यंईशानायनमः मुखे ॥ ॐ ॐ हृदयायनमः ॐ नंशिरसेस्वाहा ॐ मंशिखायैवषट् ॐ शिंकवचायहुं ॐ वांनेत्रत्रयायवौषट् ॐ यं अस्त्रायफट् ॥ कलशपूजादिसंभारप्रोक्षणांते॥ ॐ त्र्यंबकंयजामहे० ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ॥ इतिदेवंध्यात्वा ॥ प्राणप्रतिष्ठांकृत्वास्यापयेल्लिंगंस्पृशन् सहस्रशीर्षा० ॐ भूःपुरुषंसांबसदाशिवमावाहयामि ॐ भुवःपुरुषंसांब० ॐ स्वः पुरुषंसांब० ॐ भूर्भुवःस्वःपुरुषंसांब० इत्यावाहयेत् ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनलिंगेस्मिन्सन्निधोभव ॥ इतिपुष्पांजलिंदद्यात् ॥ (आवाहनाद्युपचारेषुवैदिकपौराणमंत्रसमुच्चयोपीच्छयाकार्यः ॥ स्थावरलिंगेपूर्वसंस्कृतचरलिंगेचप्राणप्रतिष्ठावाहनांतंनकार्यं) ॥ पुरुषएवेदं० ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥ ॐनमःशिवायश्रीसांबसदाशिवायनमःआसनं ॥ एवमग्रेपिपंचाक्षरादिपाठः॥ ( स्त्रीशूद्रश्चेत् ॐ नमःशिवायेतिपंचाक्षरीस्थाने श्रीशिवायनमइतिनमोंतमंत्रेणपूजयेत् ) ॥ एतावानस्य० ॐभवेभवेनातिभवेभवस्वमां ॐ नमःशिवायश्रीसांबसदाशिवायनमःपाद्यं ॥ त्रिपादूर्ध्व० ॐ भवोद्भवायनमः ॐ नमःशिवायश्रीसांबस० अर्घ्यं० ॥ तस्माद्विराळ० ॐ वामदेवायनमः ॐ नमःशिवायश्रीसांब० आचमनं०॥यत्पुरुषेण० ॐ ज्येष्ठायनमः ॐ नमःशिवाय० स्नानं ॥ ततोमूलमंत्रेणआप्यायस्वेत्यादिभिश्चपंचामृतैःसंस्नाप्य ॥ मूलेनाभ्यंगोष्णोदकां

धोदकस्नानेचकृत्वा ॥ आपोहिष्ठेतितिसृभिःशुद्धोदकेनप्रक्षाल्यततःपूर्वपूजांतेएकादशावृत्त्यैकावृत्त्यावारुद्रेणपुरुषसूक्तेनचचं
दनकुंकुमकर्पूरवासितजलेनाभिषेकंकृत्वा ॐ नमःशिवायेतिस्नानांतेआचमनंदत्वासाक्षतजलेनतर्पणंकार्यं ॥ॐ भवंदेवंतर्पया
मि १शर्वंदेवंतर्पयामि२ईशानंदेवंतर्पयामि३पशुपतिंदेवंतर्पयामि ४ उग्रंदेवंत० ५ रुद्रंदेवंत० ६ भीमंदेवंत० ७ महांतंदेवंत०
८॥भवस्यदेवस्यपत्नींतर्पयामि शर्वस्यदेवस्यप० ईशानस्यदेवस्यप० पशुपतेर्देवस्यप० उग्रस्यदेवस्यप०रुद्रस्यदेवस्यप०भीमस्य
देवस्यप० महतोदेवस्यप० ८ ॥ तंयज्ञंबर्हिषि० ॐ ज्येष्ठायनमः ॐ नमःशिवायश्रीसांब० वस्त्रं० ॥ मूलेनाचमनं ॥ तस्मा
द्यज्ञा० ॐ रुद्रायनमः ॐ नमःशिवाय० यज्ञोपवीतं० मूलेनाचमनं ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॐ कालायनमः ॐ नमः
शिवाय० चंदनं० ॥ ॐ कलविकरणायनमः ॐनमःशिवायश्री० अक्षतान्० ॥ तस्मादश्वा० ॐ बलविकरणायनमः ॐनमः
शिवायश्रीसांब० पुष्पाणि० ॥ सहस्रमष्टोत्तरशतंवासहस्राष्टोत्तरनामभिर्मूलमंत्रेणवाबिल्वपत्राण्यर्पयेत् ॥ यत्पुरुषं० ॐबला
यनमः ॐ नमःशिवायश्रीसांब० धूपं ॥ ब्राह्मणोस्य० ॐ बलप्रमथनायनमः ॐ नमःशिवायश्रीसांब० दीपं० ॥ चंद्रमा
मनसो० ॐ सर्वभूतदमनायनमः ॐ नमःशिवाय० नैवेद्यं० ॥ मूलेनाचमनंफलंच ॥ ॐमनोन्मनायनमः ॐ नमःशिवाय०
तांबूलं० मूलेनदक्षिणां० ॥ मूलेनवैदिकैर्मंत्रैश्चनीराजनं० ॥ नाभ्याआसी० ॐ नमःशिवायप्रदक्षिणाः॥सप्तास्यासन्० भवा
यदेवायनमः शर्वायदेवायेत्याद्यष्टौ भवस्यदेवस्यपत्न्यै इत्यष्टौच नमस्कारान्कृत्वातैरेवपुष्पांजलिः ॥ अथवा यज्ञेनयज्ञ०
ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवों ॐ नमःशिवाय० मंत्रपुष्पं० ॥

शिवाय० रुद्राय० पशुपतये० नीलकंठाय० महेश्वराय० हरिकेशाय० विरूपाक्षाय० पिनाकिने० त्रिपुरांतकाय० शंभवे० शूलिने० महादेवायनमइतिद्वादशनामभिर्द्वादशपुष्पांजलीन्दत्वा मूलेनप्रदक्षिणानमस्कारान्कृत्वा॥शिवरात्रिव्रतंदेवपूजाजप परायणः ॥ करोमिविधिवद्दत्तंगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदत्वा ॥ नित्यंनैमित्तिकंकाम्यंयत्कृतंतुमयाशिव ॥ तत्सर्वंपरमे शानमयातुभ्यंसमर्पितं ॥ इतिपूजांसमर्प्यस्तोत्रेणप्रणम्य मूलमंत्रमष्टोत्तरशतंजप्त्वा॥गुह्यातिगुह्यगोप्तात्वंगृहाणास्मत्कृतंजपं॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादान्महेश्वर ॥ इतिजपंनिवेद्य ॥ यत्किंचित्कुर्महेदेवसदासुकृतदुष्कृतं ॥ तन्मेशिवपदस्थस्यभुंक्ष्वक्षप यशंकर ॥ शिवोदाताशिवोभोक्ताशिवःसर्वमिदंजगत् ॥ शिवोजयतिसर्वत्रयःशिवःसोहमेवहि॥इतिप्रार्थ्य देवहृदयस्थंपादस्थं चपुष्पमादायप्रणम्य देवेनदत्तमितिध्यात्वा ॥ प्रपन्नंपाहिमामीशभीतंमृत्युमहार्णवात् ॥ त्वयोपभुक्तस्रग्गंधवासोलंकारच र्चिताः ॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ॥ इतिमूर्ध्निधृत्वा मंत्रहीनंक्रियाहीनमित्यादिभिःक्षमापयित्वा ॥ अनेन पूजनेनसांबसदाशिवःप्रीयतामितिनिवेदयेत् ॥ इतिकेवलशिवरात्रिव्रतपूजाविधिःसमाप्तः ॥ ॥ श्री ॥ ॥ श्री ॥

॥ ८४ ॥ यामेषुपूजाचतुष्टयेविशेषः ॥ तत्रप्रथमयामेमूलमंत्रांतेश्रीशिवायासनंसमर्पयामीतिशिवनाम्नासर्वोपचारसम र्पणम् ॥ द्वितीययामेशिवरात्रौद्वितीययामपूजांकरिष्यइतिसंकल्प्यश्रीशंकरायासनमितिशंकरनाम्ना ॥ ततोमहानिशिनिशीथ पूजांकरिष्यइतिसंकल्प्यश्रीसांबसदाशिवायासनमितिपूर्ववत्पूजां॥ ततस्तृतीययामपूजांकरिष्यइत्युक्त्वाश्रीमहेश्वरायासनमि त्यादि॥ एवमेवचतुर्थयामेश्रीरुद्रायेतिरुद्रनाम्नापूजनं॥प्रतियामंतैलाभ्यंगपंचामृतोष्णोदकशुद्धोदकगंधोदकाभिषेकाःकार्याः

यज्ञोपवीतांतेगोरोचनकस्तूरीकुंकुमकर्पूरागुरुचंदनमिश्रितानुलेपेनालिंगंलेपयेत् ॥ पंचविंशतिपलमितःसर्वोनुलेपइतिअनुलेप
परिमाणं यथाशक्तिवा ॥ धत्तूरकरवीराम्रकुसुमैर्बिल्वपत्रैश्चपूजनमतिप्रशस्तं ॥ पुष्पाभावेशालितंडुलगोधूमयवैःपूजा ॥ नैवे
द्योत्तरंतांबूलमुखवासौउक्तौ ॥ नागवल्लीपत्रक्रमुकफलशुक्त्यादिचूर्णेतित्रयंतांबूलसंज्ञं ॥ एतदेवनारिकेलकर्पूरैलाकंकोलैःसहि
तंमुखवाससंज्ञं ॥ शालिपिष्टनिर्मितैःषड्विंशतिघृतदीपैर्नीराजनं ॥ लिंगमूर्ध्निदध्यक्षतपुष्पदूर्वागोरोचनसर्षपयुतस्वर्णपद्मनिवे
दनं ॥ एतेपामन्यतमद्रव्यालाभेतत्तद्द्रव्यंस्मरेद्बुधः ॥ सर्वपूजांतेप्रार्थना ॥ नित्यंनैमित्तिकंकाम्यंयत्कृतंतुमयाशिव ॥ तत्सर्वं
परमेशानमयातुभ्यंसमर्पितमिति ॥ एवंयामचतुष्टयेर्घ्यभेदःकौस्तुभे ॥ सचेत्थं ॥ चंदनाक्षतदूर्वांकुशफलयुतमर्घ्यंप्रतियामं
दद्यात् ॥ तत्रप्रथमयामेमंत्रः ॥ नमःशिवायशांतायसर्वपापहरायच ॥ शिवरात्रौमयादत्तंगृहाणार्घ्यंममप्रभो ॥ द्वितीये—मं
याकृतान्यनेकानिपापानिहरशंकर ॥ गृहाणार्घ्यमुमाकांतशिवरात्रौप्रसीदमे ॥ महानिशि ( निशीथे )—शिवरात्रिव्रतंदेवपूजाज
पपरायणः ॥ करोमिविधिवद्दत्तंगृहाणार्घ्यंनमोस्तुते ॥ तृतीये—दुःखदारिद्र्यभारैश्चदग्धोहंपार्वतीपते ॥ त्रायस्वमांमहादेवगृ
हाणार्घ्यंनमोस्तुते ॥ चतुर्थे—किंनजानासिदेवेशत्वयिभक्तिंप्रयच्छमे ॥ स्वपादाग्रतलेदेवदास्यंदेहिजगत्पते ॥ ततःपूजानिवे
दनं ॥ मंत्रस्तु ॥ नमोयज्ञजगन्नाथनमस्त्रिभुवनेश्वर ॥ पूजांगृहाणमेदत्तांमहेशप्रथमेपदे ॥ इतिप्रथमयामे ॥ पूर्वेनंदिमहाकालौ
गणभृंगीचदक्षिणे ॥ वृषस्कंदौपश्चिमेतेदेशकालौतथोत्तरे ॥ गंगाचयमुनापार्श्वेपूजांगृह्णनमोस्तुते ॥ इतिद्वितीये ॥ नमोव्यक्ता
यसूक्ष्मायनमस्तेत्रिपुरांतक ॥ पूजांगृहाणदेवेशयथाशक्त्युपपादितां ॥ इतितृतीये ॥ बद्धोहंविविधैःपाशैःसंसारभयबंधनैः ॥

पतितंमोहजालेमांत्वंसमुद्धरशंकर ॥ इतिचतुर्थं ॥ अन्यत्समानं ॥ यामचतुष्टयेपिनृत्यगीतकथाश्रवणादिनाजागरणंकार्यं ॥ ततःप्रभातेस्नात्वापुनःशिवंसंपूज्य पूर्वोक्तद्वादशनामभिर्द्वादशब्राह्मणानशक्तावेकंवासंपूज्यतिलपक्वान्नपूर्णान्द्वादशकुंभानेकं वादत्वाव्रतमर्पयेत् ॥ यन्मयाद्यकृतंपुण्यंतद्रुद्रस्यनिवेदितं ॥ त्वत्प्रसादान्मयादेवव्रतमद्यसमापितं ॥ प्रसन्नोभवमेश्रीमन्मुक्तिःप्रतिपाद्यतां ॥ त्वदालोकनमात्रेणपवित्रोस्मिनसंशयः ॥ इति ततोब्राह्मणान्भोजयित्वापूर्वनिर्णीतेकालेस्वजनैःसहपारणं कुर्यात् ॥ तत्रमंत्रः ॥ संसारक्लेशदग्धस्यव्रतेनानेनशंकर ॥ प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव ॥ इति ॥ दक्षिणांदत्वाशिषो गृहीत्वाकर्मसमाप्तिः ॥ इतिशिवरात्रिव्रतयामचतुष्टयभेदभिन्नःपूजाविधिःसंपूर्णः ॥ ॥ छ ॥ ॥ ॥

॥८५॥पार्थिवलिंगपूजा॥अथकृत्यरत्नावल्यनुसारेणपार्थिवलिंगेशिवपूजाप्रयोगः ॥ कर्तास्नानादिविधाय भस्मनात्रिपुंड्रं कृत्वोदङ्मुखउपविश्याचम्यपवित्रपाणिःप्राणानायम्य अघोरेभ्योहिरण्यगर्भोरुद्रोनुष्टुप् ॥ मालाधारणे० ॥ मंत्रांतेसप्तविंशति रुद्राक्षमालांकंठेधृत्वा देशकालौस्मृत्वाममोपात्त० पार्थिवलिंगेश्रीशिवपूजनंक० ॥ घंटानादंकृत्वा गंगेचयमुने० इतिकलशे तीर्थान्यावाह्यतंसंपूज्यालिंगंकुर्यात् ॥ हरायनमइति ( सर्वाधारधरांदेवत्वद्रूपांमृत्तिकामिमां ॥ लिंगार्थंतुप्रगृह्णामिप्रसन्नोभव मेप्रभो ॥ इतिवा ) मृदमाहृत्य शोधितायांतस्यांशुचिजलंप्रक्षिप्य महेश्वरायनमइतिसंघट्टनंकृत्वातेनपिंडेनाशीतिगुंजापरिमि तादधादधिकपरिमाणमंगुष्ठादधिकोन्नतंलिंगंकृत्वा शूलपाणयेनमःशिवेहसुप्रतिष्ठितोभवेतिप्रतिष्ठाप्य ध्यायेन्नित्यंमहेशमि तिध्यात्वा त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् ॥ पूजनेवि० ॥ त्र्यंबकं० ॥ पिनाकधृषेनमःशिवेहागच्छेत्यावाह्य त्र्यंबकं० ॐनमःशिवाय

आसनंपरिकल्पयामि ॥ पाद्यंस० ॥ अर्घ्यंस० ॥ आचमनंस० ॥ त्र्यं० पशुपतये० स्नानंस०॥ आच० ॥ त्र्यं० ॐ नमः० वस्त्रंपरि० आच० ॥ उपवीतं ॥ आच० ॥ गंधादिप्रणामांते ॐ योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै ॥ तश्हदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये ॥ इतिनमस्कृत्य प्राच्यादिष्वष्टमूर्तीर्गंधपुष्पाक्षतैःपूजयेत् ॥ प्राच्यां शर्वायक्षितिमूर्तये नमः ॥ ऐशान्यां भवाय जलमू० ॥ उदीच्यां रुद्रायाग्निमू० ॥ वायव्यां उग्राय वायुमू० ॥ प्रतीच्यां भीमायाकाशमू० ॥ नैर्ऋत्यांपशुपतयेयजमानमू० ॥ अवाच्यां महादेवायसोममू० ॥ आग्नेय्यां ईशानायसूर्यमू० ॥ ततोयथासंभवंरुद्रस्तोत्रादिनास्तुत्वा॥ देशकालानुसारेणयथाशक्तिकृतंमया ॥ कर्मेदंपूर्णतांयातुत्वत्प्रसादाज्जगत्प्रभो ॥ त्र्यं० ॥ महादेवायनमइतिविसर्जनं ॥ ॐ भूर्भुवःस्वरितिजपित्वाचम्यपठेत् ॥ ज्ञात्वाज्ञात्वाकृतेनाथविधिनाविधिनापिवा ॥ प्रीणातुभगवानीशःकर्मणानेन शाश्वतः ॥ स्त्रीणांतुशिवायनमइतिमंत्रः॥ अस्याःपूजायाःशिवरात्रिपूजयासहानुष्ठाने यथासंभवंपंचामृताभिषेकाद्यपिकार्यं ॥

॥ ८६ ॥ होलिकापूजा ॥ तत्रपूर्णिमायामुक्तकालेउपलिप्तेस्वस्तिकादिचित्रितेगृहांगणादौराशीकृतशुष्कगोमयपिंडदारुखंडरूपामेरंडदंडादिभूषितांवर्तुलांपुरुषप्रमाणांहोलिकाचितिंविरच्यगृहीतसंभारःकर्तादेशकालौसंकीर्त्य ममसपरिवारस्यश्रीढुंढाराक्षसीप्रीतिद्वारातत्कर्तृकविविधबालजनोपसर्गाग्निबाधोत्पातभयप्रशमपूर्वकंक्षेमायुःपुष्टिमयैश्वर्यसुखसंपत्कुलाभिवृद्ध्याद्यभीष्टफलसिद्धिकामःश्रीहोलिकापूजनंकरिष्ये॥ संभारप्रोक्षणांते ॥ दीपयाम्यद्यतेघोराचितिंराक्षससत्तमे ॥ हितायसर्वजगतां प्रीतयेपार्वतीपतेः ॥ इतिमंत्रेणतामग्निनाप्रदीप्य ( प्रतिमापूजनपक्षेऽग्रेप्रदीपनं ) सप्तहस्तांचतुःशृंगींसप्तजिह्वांद्विशीर्षकां ॥

त्रिपदांहष्टवदनांसुखासीनांशुचिस्मितां ॥ मेषारूढामग्निरूपांजिह्वालळनभीषणां ॥ तप्तकांचनसंकाशांहोलिकांहृदिचिंतये ॥
इतिध्यात्वा ॥ अस्माभिर्भयसंत्रस्तैःकृतात्वंहोलिकेयतः ॥ अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभव ॥ इतिषोडशोपचारैःपूजये
त् ॥ तत्रनैवेद्यंनिवेद्यतस्यांप्रक्षिप्यनीराजनांते साज्येनपयसाचितिमभ्युक्ष्यत्रिःपरिक्रम्य देशभाषयाभगलिंगादिशब्दोच्चारण
पूर्वकैःमहकरपृष्ठोष्टसंयोगेनोच्चैर्घोषंकृत्वा ॥ नमस्तेसर्वकल्याणिनमस्तेकरुणालये ॥ नमस्तेहोलिकेदेविरुद्रस्यप्रियवादिनि ॥
इतिप्रणम्यपुष्पांजलिंदत्वा ॥ गुडोद्भवान्वृश्चिकांस्तुगृहाणपरमेश्वरि वृश्चिकोत्थानमेबाधाभवतुत्वत्प्रसादतः ॥ इतिगुडम
यान्वृश्चिकादिकीटान्समर्प्य ॥ होलिकेहोलतनयेपूजांस्वीकृत्यमत्कृतां ॥ स्वस्थानंगच्छभद्रेत्वंरक्षमामग्निजाद्भयात् ॥ इतिप्रा
र्थ्यविसृज्य सर्वत्सवर्थविप्रान्सुवासिनीश्चसंपूज्यसंभोज्यभूयसींदत्वा तांरात्रिंपौरैःसहगीतवाद्युत्सवेननीत्वाप्रातःश्वपचंस्पृष्ट्वास्ना
त्वानित्यकर्मांते क्षीरजलैर्भूलिमासिच्य ॥ वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच ॥ अतस्त्वंपाहिनोदेविविभूतेभूतिदाभव ॥ इति
विभूतिमभिवंद्य ॥ होलिकादेहसंभूतसर्वभीतिविनाशन ॥ मदीयदेहजान्रोगान्भस्मनाशयनाशय ॥ इतिसर्वांगेषुविलिप्यमध्या
ह्नेपुनःस्नात्वाभोजनादिकुर्यात् ॥ अत्रदैशिकक्रीडादियथाचारंकार्यं ॥ ॥ ॥ ॥ ॥

॥ ८७ ॥ सत्यनारायणपूजा ॥ व्रतीसंक्रांतौपौर्णमास्यांचैकादश्यांयस्मिन्कस्मिन्दिनेवा सायंकालेस्नात्वापूजास्थानमाग
त्यआसनेउपविश्य आचम्यपवित्रंधृत्वासंकल्पंकुर्यात् ॥ अद्येत्यादिपूर्वोच्चरितएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ ममअमु
कगोत्रोऽमुकशर्माऽहंसकलदुरितोपशमनपूर्वकशांतिपूर्वकसकलमनोरथसिद्ध्यर्थं यथासंपादितसामग्र्या गणेशगौरीवरुणदेव

तागणपत्यादिचतुष्टयाष्टलोकपालदेवतासूर्यादिनवग्रहदेवताऽऽवाहनपूजनपूर्वकंश्रीसत्यनारायणपूजनंतत्कथाश्रवणंचकरिष्ये तथा कलशादिपूजांशरीरशुद्ध्यर्थं पुरुषसूक्तन्यासंचकरिष्ये ॥ आसनविध्यादिघंटादीपपूजनांते अपवित्रःपवित्रइतिपूजाद्रव्याणिसंप्रोक्ष्य निर्विघ्नतासिद्ध्येगणपतिंचसंपूज्यकलशंस्थापयेत्॥ महीद्यौरितिभूमिंस्पृष्ट्वा ॥ ओषधयइतितंदुलपुंजंकृत्वा ॥ आकलशेष्वितिकलशंसंस्थाप्य॥इमंमेगंगेइतिजलं॥कांडात्कांडादितिदूर्वाः॥अश्वत्थेवइतिपंचपल्लवान्॥याःफलिनीरितिफलं॥ सहिरत्नानीतिपंचरत्नानि ॥ हिरण्यरूपइतिहिरण्यंचप्रक्षिप्य ॥ युवासुवासाइत्यनेनवस्त्रंसमर्प्यतदभावेअक्षतान्क्षिपेत् ॥ ततः पूर्णादर्वीतिपूर्णपात्रंनिधायतत्त्वायामि०कलशेवरुणगंधादिपंचोपचारैःपूजयेत्॥(अथवापुराणोक्तपद्धत्युक्तप्रकारेणकलशस्थापनंयथा ॥ चतुर्भुजेशुक्लवर्णेदिव्याभरणभूषिते ॥ चतुर्दिङ्नागपृष्ठस्थेभूमेत्वांसंस्पृशाम्यहं ॥ इतिभूमिंस्पृष्ट्वा ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीवनोपायंस्थापयामीष्टसिद्धये ॥ इतिधान्यराशिंकृत्वा ॥ तत्र देवासुरैर्मथ्यमानादुत्पन्नोऽसिमहोदधेः॥ कुंभत्वयिसुराःसर्वेतीर्थानिजलदानदाः ॥ तिष्ठंतिकामफलदारुद्रादित्यादयोऽपिच ॥ अतोऽत्र धान्यराशौत्वांपूजार्थंस्थापयाम्यहं ॥ इतिकलशंसंस्थाप्य ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिकुंभेऽस्मिन्संनिधिंकुरु ॥ इतिशुद्धजलेनापूर्य ॥ कस्तूरीकुंकुमोपेतंकर्पूरेणचसंयुतम् ॥ चंदनंसर्वगंधाढ्यंकुंभेऽस्मिन्प्रक्षिपाम्यहं ॥ इतिगंधंप्र० ॥ कुष्ठमांसीहरिद्राद्याःसर्वौषध्योऽमृतप्रभाः ॥ सर्वामयहराश्चातःकुंभेऽस्मिन्प्रक्षिपाम्यहम् ॥ इत्यौषधीः ॥ धान्यराजांश्चमांगल्येद्विजप्रीतिकरान्यवान्॥ यज्ञार्थंनिर्मितानस्मिन्कलशेप्रक्षिपाम्यहं ॥ इतियवान् ॥ त्वंदूर्वेऽमृतजन्मासिवंदितासिसुरासुरैः ॥ सौ

भाग्यंमनतंदेहिमेकार्यंकरीभव ॥ इतिदूर्वाः ॥ अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवान् ॥ अस्मिन्कुंभेप्रक्षिपामिसर्वकर्मसुशो
भनान् ॥ इतिपंचपल्लवांस्तत्रनिक्षिप्य ॥ गजाश्वरथ्यावल्मीकसंगमह्रदगोकुलात् ॥ मृदमानीयकुंभेऽस्मिन्प्रक्षिपामिचच
त्वरात् ॥ इत्यष्टमृदः ॥ फलंमनोहरंस्वादुमुनिदेवप्रियंसदा ॥ अस्मिन्कुंभेप्रक्षिपामिसर्वदामंगलप्रदं ॥ इतिफलं ॥ सुवर्णंरज
तंमुक्ताराजावर्तंप्रवालकं ॥ इमानिपंचरत्नानिकलशेप्रक्षिपाम्यहं ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलद
मतःशांतिंप्रयच्छमे ॥ इतिहिरण्यं० ॥ रक्तीतेनशुभ्रेणसदनेनाहतेनच ॥ संवेष्टयामिकलशंनूतनेनसुवाससा ॥ इतिवासस
मवेष्टय ॥ पूर्णपात्रंताम्रमयंशालितंदुलपूरितं ॥ प्रधानदेवपूजार्थंन्यसामिकलशोपरि ॥ इतिपूर्णपात्रंनिधाय ) देवताआवाहये
त् ॥ ततःगणेशादीनांसूर्यादिनवग्रहाणांचतत्तन्मंत्रैरावाहनंकृत्वापूजनंकुर्यात् ॥ तदित्थं ॥ ॐ गणानांत्वा० गणेशायनमः
गणेशंआवाहयामि ॥ ॐगौरीर्मिमाय० गौरीमा० ॐ तत्त्वायामि० वरुणमावा० ॥ गणपतिं दुर्गां क्षेत्रपालं वास्तोष्पतिं च
आवाह्य ॥ इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं सोमं ईशानं च तत्तन्मंत्रैर्नाममंत्रैर्वाक्षतपुंजेष्वावाह्यसूर्यादीनावाहयेत् ॥ तत्र
मंत्राः ॥ आकृष्णेन० सूर्यंआवाहयामि ॥ आप्यायस्व० चंद्रंआवाह० ॥ अग्निर्मूर्धा० भौमंआवाह० ॥ उद्बुध्यस्व० बुधंआ
वाह० ॥ बृहस्पतेअति० बृहस्पतिंआवा० ॥ शुक्रःशुशुक्वाँ० शुक्रंआ० ॥ शमग्निरग्निभिः० शनैश्चरंआ० ॥ कयानश्चित्र० राहुं
आवा० ॥ केतुंकृण्वन्० केतुंआवाहयामि ॥ तदस्तुमित्रावरुणेत्यनेनगणेशाद्यावाहितदेवताःसुप्रतिष्ठिताःसंतुइतिप्रतिष्ठाप्यॐ
भूर्भुवःस्वःगणेशाद्यावाहितदेवताभ्योनमःध्यायामि इत्यादिषोडशोपचारपूजांकुर्यात् ॥ अथध्यानं ॥ पुष्पंगृहीत्वाध्यानंकुर्या

त्॥ शांताकारंभु० ॥ ध्यायेत्सत्यंगुणातीतंगुणत्रयसमन्वितं ॥ लोकनाथंत्रिलोकेशंकौस्तुभाभरणंहरिम् ॥ नीलवर्णपीतवासः
श्रीवत्सपदभूषितम्॥ गोविंदंगोकुलानंदंब्रह्माद्यैरपिपूजितम् ॥ इतिध्यानं ॥ ॐसहस्रशीर्षा० ॥ आगच्छभगवन्देवस्थानेचा
त्रस्थिरोभव॥ यावत्पूजांकरिष्येहंतावत्त्वंसंनिधोभव॥ इत्यावाहनं ॥ पुरुषएवेदं० ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितम् ॥
आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां ॥ इत्यासनं ॥ एतावां० ॥ नारायणनमस्तेऽस्तुनरकार्णवतारक ॥ पाद्यंगृहाणदेवेशम
मसौख्यंविवर्धय ॥ इतिपाद्यं ॥ त्रिपादूर्ध्व० ॥ व्यक्ताव्यक्तस्वरूपायहृषीकपतयेनमः ॥ मयानिवेदितोभक्त्याअर्घोयंप्रतिगृह्य
ताम्॥ इत्यर्घ्यं ॥ तस्माद्विराळ० ॥ मंदाकिन्यास्तुयद्वारिसर्वपापहरंशुभं ॥ तदिदंकल्पितंदेवसम्यगाचम्यतांत्वया ॥ इत्या
चमनं ॥ यत्पुरुषेण० ॥ गंगाचयमुनाचैवगोदावरिसरस्वती ॥ तापीपयोष्णीरेवाचताभ्यःस्नानंकुरुप्रभो ॥ स्नानं० ॥ पंचामृ
तस्नानं ॥ आप्यायस्व० ॥ सुरभेस्तुसमुत्पन्नंदेवर्पिपितृतृप्तिदं ॥ मयादत्तंपयोदेवस्नानार्थंप्रतिगृह्यतां ॥ इतिपयःस्नानं ॥ द
धिक्राव्णो० ॥ दध्नाचैवमहादेवस्नापनंक्रियतेमया ॥ गृहाणत्वंसुराधीशप्रसन्नोमांभवाव्यय ॥ इतिदधिस्नानं ॥ घृतंमिमिक्षे०॥
सर्पिषाचजगन्नाथस्नापनंक्रियतेऽधुना ॥ गृहाणश्रद्धयानंततवप्रीत्यैमनोहरम् ॥ इतिघृतस्नानं ॥ मधुवाता० ॥ इदंमधुमया
दत्तंतवतुष्ट्यर्थमेवच ॥ स्नातुंगृहाणदेवेशततःशांतिंप्रयच्छमे ॥ इतिमधुस्नानं ॥ स्वादुःपवस्व० ॥ सितयाचसुरश्रेष्ठस्नापनं
क्रियतेत्वयि ॥ तस्माद्भक्तपराधीनप्रसन्नोभवसर्वदा ॥ इतिशर्करास्नानं० ॥ इतिपंचामृतस्नानं० ॥ गंधद्वारां० गंधोदकेनदे
वेशकुशपुष्पफलोदकैः ॥ रत्नांबुनाचशुद्धेनस्नापयामिपृथक्पृथक् ॥ इतिचंदनोदकस्नानं ॥ पुनर्मधुवाताइति मधुपर्कस्नानं॥

सर्वमंत्रं कामानामधीनमयंमौख्यद ॥ मधुपर्कंगृहाणेमंमयादत्तमधोक्षज ॥ कनिक्रदत्० ॥ तैलंपुष्पसुगंधाढ्यंभ्रमद्भ्रमर
नादितं ॥ विलेपयामिसर्वांगेसुवर्णचषकस्थितं ॥ तैलाभ्यंगं ॥ उन्मर्दनंतवांगेऽस्मिँल्लेपयामिसुभक्तितः ॥ काश्मीरागरुकर्पूरमृ
गनाभिविनिर्मितं ॥ उन्मर्दनं ॥ स्नानार्थंजलमानीतंशीतमुष्णंयथारुचि ॥ सुगंधितंसर्वनदीतीर्थेभ्यःप्रतिगृह्यतां ॥ इतिमांग
लिकस्नानं ॥ गंधादिदक्षिणांतोपचारैःसंपूज्य ॥ पुरुषसूक्तादिभिरन्यैरुद्रादिभिश्चाभिषेकः ॥ तंयज्ञं० ॥ वेदसूक्तसमायुक्तेय
ज्ञसामसमन्विते ॥ सर्ववर्णप्रदेदेववाससीप्रतिगृह्यताम् ॥ इतिवस्त्रं ॥ तस्माद्यज्ञात्सर्वहुतः० ॥ ब्रह्मविष्णुमहेशैश्चनिर्मितंब्रह्म
सूत्रकं ॥ यज्ञोपवीतदानेनप्रीयतांकमलापतिः ॥ इतियज्ञोपवीतं ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसु
मनोहरं ॥ विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां ॥ इतिचंदनं ॥ अहिरिवभोगैः० ॥ कस्तूर्याद्याश्चयेगंधाभोगार्थंतेमयाहृताः ॥ अ
नेकगंधसंयुक्ताःप्रीत्यर्थंप्रतिगृह्यतां ॥ इतिपरिमलद्रव्याणिसौभाग्यद्रव्याणिच ॥ अलंकारार्थानक्षतांश्च० ॥ तस्मादश्वा० ॥
मल्लिकादिसुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ इतिपुष्पाणि ॥ अत्रसंभवेसहस्रतुलसीस
मर्पणं ॥ वनमालांसुगंधाढ्यांनानापुष्पैःसमन्वितां ॥ पूजार्थंसाधितांदेवप्रीत्यर्थंप्रतिगृह्यतां ॥ मालां ॥ यत्पुरुषंव्यदधुः० ॥
वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम् ॥ धूपं ॥ ब्राह्मणोस्य० साज्यंचवर्तिसंयुक्तं
वह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ दीपं ॥ चंद्रमामनसो० घृतपक्वंहविष्यान्नंपायसंचसशर्करं ॥
नानाविधंचनैवेद्यंविष्णोमेप्रतिगृह्यताम् ॥ नैवेद्यं ॥ सर्वपापहरंदिव्यंगांगेयंनिर्मलंजलं ॥ मयाचाचमनंदत्तंगृह्यतांपुरुषोत्तम ॥

इत्याचमनं ॥ नारिकेरंमातुलिंगंकपित्थंकदलीफलं ॥ कूष्मांडकर्कटीयुक्तंगृह्यतामखिलार्थद ॥ इदंफलंमयादेवस्थापितंपुरत
स्तव ॥ तेनमेसफलावाप्तिर्भवेजन्मनिजन्मनि ॥ इतिफलं ॥ लवंगकर्पूरयुतंतांबूलंसुरपूजितम् ॥ प्रीत्यागृहाणदेवेशममसौख्यं
विवर्धय ॥ इतितांबूलं ॥ ॐश्रियेजातः० ॥ चतुर्वर्तिसमायुक्तंघृतेनचसुपूरितम् ॥ नीराजनेनसंतुष्टोभवत्येवजगत्पतिः ॥ इति
नीराजनं ॥ कर्पूरदीपंसुमनोहरंप्रभोददामितेदेववरप्रसीदभो ॥ पापान्धकारंत्वरितंनिवारयप्रज्ञानदीपंमनसिप्रदीपय ॥ इति
कर्पूरार्तिक्यं ॥ नाभ्याआसी० ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुवाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्र
कोटीयुगधारिणेनमः ॥ इतिनमस्कारं ॥ सप्तास्यासन्० ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंति
प्रदक्षिणपदेपदे ॥ इतिप्रदक्षिणाः ॥ यज्ञेनयज्ञ० ॥ कह्लारनीलकमलोत्पलपारिजातपुन्नागकैःकदलिचंपकपाटलैश्च ॥ विल्व
प्रवालतुसीशतपत्रजातीपुष्पैश्चकृसममुमंजलिमर्पयामि ॥ इतिअन्यैर्मंत्रैश्चपुष्पांजलिंसमर्पयेत् ॥ ततोगीतवाद्यनृत्यछत्रचाम
रादिराजोपचारार्थेऽक्षतान्समर्प्य देवंसंप्रार्थ्यस्तुवीत ॥ यन्मयाभक्तियुक्तेनपत्रंपुष्पंफलंजलं ॥ निवेदितंचनैवेद्यंतद्गृहाणानुकंप
या ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ अमोघंपुंडरीकाक्षंनृसिंहंदैत्यसूदनम् ॥ हृषी
केशंजगन्नाथंवागीशंवरदायकं ॥ गुणत्रयंगुणातीतंगोविंदंगरुडध्वजं ॥ जनार्दनंजनातीतंजानकीवल्लभंहरिं ॥ प्रणमामिसदा
भक्त्यानारायणमतःपरम् ॥ दुर्गमेविपमेघोरेशत्रुभिःपरिपीडिते ॥ निस्तारयस्वसर्वेषुतथानिष्टभयेषुच ॥ नामान्येतानिसंकी
र्त्यईप्सितंफलमाप्नुयात् ॥ सत्यनारायणंदेवंवंदेहंकामदंप्रभुं ॥ लीलयाविततंविश्वंयेनतस्मैनमोनमः ॥ इतिप्रार्थना ॥ इति ॥

॥ ८८ ॥ गंगापूजनं ॥ तीर्थादागतःशुभदिनेसद्यएववापत्न्यासहोपविश्याचमनादिदेशकालकीर्तनांतेमयात्मनासहसमस्तपूर्वजोद्धारार्थंकृतभागीरथीस्नानादेःकल्पोक्तफलावाप्तयेआनीततीर्थोदकेगंगापूजनंकरिष्ये ॥ विभवेसतिगणपतिपूजनस्वस्तिवाचनेकृत्वाआसनादिसंभारप्रोक्षणांतेगंगांध्यायेत् ॥ सितमकरनिषण्णांशुभ्रवर्णांत्रिनेत्रांकरधृतकलशोद्यत्सोत्पलामत्यभीष्टां ॥ विधिहरिहररूपांसेंदुकोटीरजुष्टांकलितसितदुकूलांजाह्नवींतांनमामि ॥इतिध्यानं॥ सहस्रशीर्षा० अघक्षयकरेदेविचंद्रचूडप्रियेऽनघे ॥ निजरूपंसमासाद्यह्यागच्छममसंनिधौ ॥ आवाहनं ॥ पुरुषएवेदं० अनंतादिधराभागंममयच्छमहाफलं ॥ ब्रह्माद्रिशिखरेगंगेआसनंप्रतिगृह्यतां॥आसनं०॥एतावानस्य० नमोदेविमहापुण्येपुण्यतोयैःशुभैर्युते ॥ पाद्यंगृहाणमेदेविप्रसीदपरमेश्वरि॥पाद्यं०॥त्रिपादूर्ध्व०॥विष्णुपादाब्जसंभूतेविभातित्वांशिवःस्वयं॥ अर्घ्यंगृहाणभोगंगेपापभंगेभयापहे॥अर्घ्यं०॥तस्माद्विराळ०॥त्वदुद्भवंमहापुण्यमानीयममृतोपमं ॥ गृहाणाचमनंगंगेकृपयाभक्तवत्सले ॥ आचमनीयं० ॥ यत्पुरुषेण० ॥क्षीरोदधिसमुद्भूतंस्नानार्थंतोयमुत्तमं ॥ स्वीकुरुष्वमहाभागेगंगेसर्वाघनाशिनि ॥ स्नानं० ॥ ततःपंचामृतस्नानाद्यभिषेकांतंकुर्यात् ॥ ब्रह्मविष्णुशिवश्लाघ्येजगतःपापनाशिनि ॥ ततआचमनीयंवैगृहाणत्वंमयार्पितं ॥ अभिषेकस्नानानंतरंआचमनीयं० ॥ तंयज्ञं० ॥ लसत्क्षौमयुगंदेविगुणाढ्यमनुकंपया ॥ यथाशक्त्यामयानीतंगृहाणजगदीश्वरि॥वस्त्रोपवस्त्रेस०॥तस्माद्यज्ञात्० ॥सत्सूत्रगुंफितंदिव्यंपवित्रंपरमंशुभं ॥ गृहाणकंठभूषार्थंगंगेब्रह्मांडनिर्मिते ॥ कंठसूत्रं० ॥ तस्माद्यज्ञा० ऋचः० ॥ कर्पूरागरुकस्तूरीकुंकुमादिमनोहरं ॥ गृहाणाक्षतगंधानिगंगेसर्वार्थदायिनि ॥ चंदनं० ॥ कुंकुमादिसौभाग्यद्रव्याणिगंधाक्षतांश्चस० ॥ तस्मा

दश्वा॰ पारिजातकपुष्पाणिदिव्यगंधानिवैतथा ॥ यथर्तुभूतान्यन्यानिमयानीतानिसर्वतः ॥ यथासंभवपुष्पाणिविल्वतुलसीप
त्राणिच॰ ॥ यत्पुरुषं॰ ॥ सुगंधतरुसंपन्नंगंधद्रव्यविवर्धनं ॥ गृहाणधूपकंगंगेसंसारार्णवतारिणि ॥ धूपं॰ ॥ ब्राह्मणो॰॥अनंतज्व
लितंदीपमज्ञानांधविनाशनं ॥ आर्तिक्यंचमयादत्तंगृहाणपरमेश्वरि ॥ दीपं॰ ॥ चंद्रमाम॰ ॥ नानाभक्ष्यैःसमाकीर्णपक्वान्नैर्वि
विधैरपि ॥ नैवेद्यंतेमयादत्तंगृहाणसुरपूजिते ॥ नैवेद्यं॰ मध्येपानीयं उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं ॥ महाफल
समानीतंगृहाणसरितांवरे ॥ मनोरमंफलंदेहिदेवदेवस्यवल्लभे ॥ फलं॰ ॥ कर्पूरैलालवंगादितांबूलीदलखादिरैः ॥ जातिपूग
फलैर्युक्तंत्रयोदशगुणान्वितं ॥ तांबूलं॰ ॥ न्यूनातिरिक्तपूजायाःसंपूर्णफलहेतवे ॥ दक्षिणांकांचनींदेविस्थापयामितवाग्रतः ॥
सुवर्णपुष्पदक्षिणांस॰ ॥ श्रियेजातइतिमहानीराजनं ॥ कर्पूरदीपं ॥ नाभ्याआसी॰ ॥ नमःश्रेयस्करीदेविनमःपापप्रणाशिनि ॥
नमःशांतिकरीगंगेनमोदारिद्र्यनाशिनि ॥ नमस्कारं॰ ॥ सप्तास्यासन्॰ यानिकानिचेति प्रदक्षिणां॰ यज्ञेनयज्ञम॰ नमो
देव्याइति मंत्रपुष्पं॰ ॥ प्रार्थना ॥ मंदाकिनिनमस्तुभ्यंनमस्तेसुरपूजिते ॥ भोगावतिनमस्तुभ्यंनागैस्त्वंतत्रवंदिते ॥ भागीर
थिनमस्तुभ्यंसागराणांचपावनि ॥ प्रयोगेचत्रिरूपात्वंनैमिषेचसरस्वती ॥ विंध्येत्वंनर्मदादेविकुशतुल्यातुगौतमी ॥ तस्मात्त्वं
सर्वदासेव्याश्रद्धयाचकलौयुगे ॥ हरिद्वारेनमस्तुभ्यंसरिदीशेनमोनमः ॥ जयगंगेनमोगंगेगोदावरिनमोऽस्तुते ॥ भूतंभव्यंच
यत्पापंभविष्यतिचगौतमि ॥ विनाशंयातुतत्सर्वंप्रसादात्तवदुःखहे ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि ॥ यत्कृतंतुमयादे
विपरिपूर्णतदस्तुमे ॥ प्रार्थनांस॰ ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षमांपरमेश्वरि॥ ततःदंपती

वतीजाह्नवीत्रिदशेश्वरी ॥ द्वादशैतानिनामानियत्रयत्रजलाशये ॥ स्नानयुक्तःस्मरेन्नित्यंतत्रतत्रवसेद्धिसा ॥ शरीरेजर्जरीभूते व्याधिग्रस्तेकलेवरे ॥ औषधंजाह्नवीतोयंवैद्योनारायणोहरिः ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयागंगेसर्व पापहराभव ॥ इतिप्रार्थ्यअर्घ्यादिदद्यात् ॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमोस्तुते ॥ सूर्यनारायणायेदमर्घ्यं० ॥ भागीरथिनमस्तुभ्यसर्वपापप्रणाशिनि ॥ भक्त्यातुभ्यंमयादत्तंगृहाणार्घ्यंनमोस्तुते ॥ गंगायैइद मर्घ्यं० ॥ नमःकमलनाभायनमस्तेऽजलशायिने ॥ नमस्तेऽस्तुहृपीकेशगृहाणार्घ्यंनमोस्तुते ॥ विष्णवेइदमर्घ्यं० ॥ इत्यर्घ्या णिदत्वा ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोपपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ वस्त्रंनिष्पीड्य गंधपुष्पाक्षतहरि द्राकुंकुमादिभिर्गंगांतुलसींसूर्यंचनाम्नापूजयेत् ॥ इतिस्नानविधिः ॥

॥ ९१ ॥ हेमाद्रिकृतःस्नान ( महा ) सङ्कल्पः ॥ आचम्यप्राणानायम्य ॥ श्रीमन्महागणाधिपतयेनमः श्रीगुरुभ्यो नमः ॥ श्रीसर० ॥ वेदाय० ॥ वेदपुरुपाय० ॥ इष्टदेवताभ्यो० ॥ कुलदे० ॥ स्थानदेवताभ्यो० ॥ ग्रामदेवताभ्यो० ॥ वास्तुदेवता भ्यो० ॥ एतत्कर्मप्रधानदेवताभ्यो० ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदं० ॥ वक्रतुण्डमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे ॥ यंनत्वा कृतकृत्याःस्युस्तंनमामिगजाननम् ॥ गणनाथंनमस्कृत्यनमस्कृत्यपितामहम् ॥ विष्णुंरुद्रंश्रियंदेवींवंदेभक्त्यासरस्वतीम् ॥ स्थानंक्षेत्रंनमस्कृत्यदिननाथंनिशाकरम् ॥ धरणीगर्भसंभूतंशशिपुत्रंबृहस्पतिम् ॥ दैत्याचार्यंनमस्कृत्यसूर्यपुत्रंशनैश्चरम् ॥

राहुंकेतुंनमस्कृत्ययज्ञारम्भेविशेषतः ॥ शक्रादिदेवताःसर्वानृषींश्चैवतपोधनान् ॥ गर्गंमुनिंनमस्कृत्यनारदंपर्वतंतथा ॥ वसिष्ठं
मुनिशार्दूलंविश्वामित्रंचगोभिलम् ॥ अगस्त्यंचपुलस्त्यंचदक्षमत्रिंपराशरम् ॥ भरद्वाजंचमांडव्यंयाज्ञवल्क्यंचगालवम् ॥
अन्येविप्रास्तपोयुक्तावेदशास्त्रविचक्षणाः ॥ तान्सर्वान्प्रणिपत्याहंशुभकर्मसमारभे ॥ लाभस्ते० अग्रतःश्रीनृसिंहश्चपृष्ठतोदेव
कीसुतः ॥ रक्षतांपार्श्वयोर्देवौभ्रातरौरामलक्ष्मणौ ॥ ॐस्वस्तिश्रीमुकुंदसच्चिदानंदस्यब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृंभि
ताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहंकारोद्भूतवियदादिपंचमहाभूतेंद्रियदेवतानिर्मितेऽडकटाहे, चतुर्दश
लोकात्मके, लीलयातन्मध्यवर्तिभगवतःश्रीनारायणस्यनाभिकमलोद्भूतसकललोकपितामहस्यब्रह्मणःसृष्टिंकुर्वतस्तदुद्धरणाय
प्रजापतिप्रार्थितस्यसमस्तजगदुत्पत्तिस्थितिलयकारणस्यजगद्रक्षाशिक्षाविचक्षणस्यप्रणतपारिजातस्यअच्युतानंतवीर्यस्यश्रीम
द्भगवतोमहापुरुपस्यअचिंत्यापरिमितशक्त्याध्येयमानस्यमहाजलौघमध्येपरिभ्रममाणानामनेककोटिब्रह्मांडानामेकतमेऽव्य
क्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते, अस्मिन्महतिब्रह्मांडखंडे, आधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजि
ते,कूर्मानंतवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखाद्यष्टमहानागैर्ध्रियमाणेऐरावतपुंडरीकवामनकुमुदांजनपुष्पदंतसार्व
भौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलरसातलमहातलपाताललोकानामुपरिभागे, भूर्लोकभुवर्लोकस्व
र्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकाख्यसप्तलोकानामधोभागेचक्रवालशैलमहावलयनागमध्यवर्तिनोमहाकालमहाफ
णिराजशेषस्यसहस्रफणानांमणिमंडलमंडिते, दिग्दंतिशुंडोत्तंभिते, अमरावत्यशोकवतीभोगवतीसिद्धवतीगांधर्ववतीकांच्यवं

त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठितेइंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानेष्टदिक्पालप्रतिष्ठिते,वरध्रुवाध्वरसोमपाप्रभं
जनानलप्रत्यूपप्रभासाख्याष्टवसुभिर्विराजितेहरत्र्यंबकरुद्रमृगव्याधापराजितकपालीभैरवशंभुकपर्दिवृषाकपित्रुद्रूपाख्यैका
दशरुद्रैःसंशोभिते, रुद्रोपेंद्रसवितृधातृत्वष्टृर्यमेंद्रेशानभगमित्रपूपाख्यद्वादशादित्यप्रकाशिते, यमनियमासनप्राणायामप्रत्या
हारधारणाध्यानसमाध्यष्टांगनिरतवसिष्ठवालखिल्यविश्वामित्रदक्षकात्यायनकौंडिण्यगौतमांगिरसपाराशर्यव्यासवाल्मीकशु
कशौनकभरद्वाजसनकसनंदनसनातनसनत्कुमारनारदादिमुख्यमुनिभिःपवित्रिते, लोकालोकाचलवलयिते, लवणेक्षुरससुरा
सर्पिर्दधिक्षीरोदकयुक्तसप्तार्णवपरिवृते, जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्कराख्यसप्तद्वीपयुते, इंद्रकांस्यताम्रगभस्तिनागसौ
म्यगंधर्वचारणभारतेतिनवखंडमंडिते,सुवर्णगिरिकार्णिकोपेतमहासरोरुहाकारपंचाशत्कोटियोजनविस्तीर्णभूमंडले, अयोध्याम
थुरामायाकाशीकांच्यवंतिकाद्वारावतीतिसप्तपुरीप्रतिष्ठिते,महामुक्तिप्रदस्थले,शालग्रामशंभलनंदिग्रामेतिग्रामत्रयविराजिते,
चंपकारण्यवदरिकारण्यदंडकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजंबुकारण्यविंध्यारण्यद्राक्षारण्यनहुपारण्यकाम्य
कारण्यद्वैतारण्यनैमिपारण्यादीनांमध्येसुमेरुनिपधकूटशुभ्रकूटश्रीकूटहेमकूटरजतकूटचित्रकूटत्रिकूटकिष्किंधश्वेताद्रिकूट
हिमविंध्याचलानांहरिवर्षकिंपुरुपवर्पयोश्चदक्षिणे, नवसहस्रयोजनविस्तीर्णे, भरतखंडेमलयाचलसह्याचलविंध्याचलानामुत्त
रेणस्वर्णप्रस्थचंडप्रस्थसूक्तिकआवंतकरमणकमहारमणकपांचजन्यसिंहललंकाऽशोकवत्यलकावतीसिद्धवतीगांधर्ववत्यादिपु
ण्यपुरीविराजिते नवखंडोपद्वीपमंडिते, दक्षिणावस्थितरेणुकाद्वयसूकरकाशीकांचीकालिकालवटेश्वरकालंजरमहाकालेतिन

चोपरयुते, द्वादशज्योतिर्लिंगगंगा (भागीरथी) गोदा (गौतमी) क्षिप्रायमुनासरस्वतीनर्मदातापीपयोष्णीचंद्रभागाकावेरीमंदा
किनीप्रवराकृष्णावेण्याभीमरथीतुंगभद्रामलापहाकृतमालाताम्रपर्णीविशालाक्षीवंजुलाचर्मण्वतीवेत्रवतीभोगावतीविशोका
कौशिकीगंडकीवासिष्ठीप्रमदाविश्वामित्रीफल्गुनीचित्रकाश्यपीसरयूसर्वपापहारिणीकरतोयाप्रणीतावज्रात्रकगामिनीसुवर्णरे
खाशोणाभवनाशिनीशीघ्रगाकुशावर्तिनीब्रह्मानंदामहितनयेत्यनेकपुण्यनदीभिर्विलसिते, ब्रह्मपुत्रसिंधुनदादिपरमपवित्रजल
विराजिते; हिमवन्मेरुगोवर्धनक्रौंचचित्रकूटहेमकूटमहेंद्रमलयसह्येंद्रकीलपारियात्राद्यनेकपर्वतसमन्विते, मतंगमाल्यकिष्किं
धऋष्यशृंगेतिमहानगसमन्विते, अंगवंगकलिंगकाश्मीरकांबोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोरलपांचालगौडमा
लवमलयसिंहलद्रविडकर्नाटकललाटकरहाटवरहाटपानाटपांड्यनिपधमागधांध्रदशार्णभोजकुरुगांधारविदर्भविदेहबाह्लीकब
र्बरकैकेयकोसलविराटशूरसेनकोंकणकैकटमत्स्यमद्रपारसिकखर्जूरयावनम्लेच्छजालंधरेतिसिद्धवत्यन्यदेशविशेषभाषाभूमि
पालविचित्रिते, इलावृतकुरुभद्राश्वकेतुमालकिंपुरुषरमणकहिरण्मयादिनववर्षाणांमध्ये, भरतखंडे, बकुलचंपकपाटलाझपु
न्नागजातिकरवीररसालकह्लारकेतक्यादिनानाविधकुसुमस्तबकविराजिते, कोकंतहिरण्यशृंगकुब्जार्बुदमणिकर्णीवटशालग्राम
सूकरमथुरागयानिष्क्रमणलोहार्गलपोतस्वामिप्रभासबदरीतिचतुर्दशगुह्यविलसिते, जंबुद्वीपेकुरुक्षेत्रादिसमभूमध्यरेखायाःप
श्चिमदिग्भागे, कुलमेरोर्दक्षिणदिग्भागेविंध्यस्यदक्षिणेदेशेश्रीशैलस्यवायव्यदेशे, कृष्णावेण्योर्मध्यदेशे, मत्स्यकूर्मवराहनृसिंह
वामनपरशुरामरामकृष्णबुद्धकल्किरितिदशावताराणांमध्येबौद्धावतारे गंगादिसरिद्भिःपाविते, एवंनवसहस्रयोजनविस्तीर्ण

भारतवर्षे, निखिलजनपावनपरमभागवतोत्तमशौनकादिनिवासितेनैमिषारण्ये, आर्यावर्तांतर्गतब्रह्मावर्तैकदेशेसूर्यान्वयभूभृत्प्र तिष्ठिते, श्रीमन्नारायणनाभिकमलोद्भूतसकलजगत्स्रष्टुःपरार्धद्वयजीविनोब्रह्मणोद्वितीयेपरार्धेएकपंचाशत्तमेवर्षे, प्रथममासेप्र थमपक्षे, प्रथमदिवसेअह्नोद्वितीयेयामे, तृतीयेमुहूर्ते, रथंतरादिद्वात्रिंशत्कल्पानांमध्येअष्टमेश्वेतवाराहकल्पे, स्वायंभुवादिमन्वं तराणांमध्येसप्तमेवैवस्वतमन्वंतरेकृतत्रेताद्वापारकलिसंज्ञकानांचतुर्णांयुगानांमध्येवर्तमानेअष्टाविंशतितमेकलियुगे, तत्प्रथमे विभागे, (पादे) श्रीमन्नृपविक्रमार्कात्श्रीमन्नृपशालीवाहनाद्वायथासंख्यागमेनचांद्रसावनसौरनाक्षत्रादिप्रकारेणागतानांप्रभ वादिषष्टिसंवत्सराणांमध्येअमुकनाम्निसंवत्सरे, उत्तरगोलावलंबिनिश्रीमार्तंडमंडले, अमुकर्तौ, अमुकमासे, अमुकपक्षे, अमुक तिथौ, अमुकवासरे, अमुकनक्षत्रे, अमुकयोगे, अमुककरणे, अमुकराशिस्थेचंद्रे, अमुकस्थेसूर्ये, अमुकस्थितेदेवगुरौ, शेषेषुग्रहेषु यथायथास्थानस्थितेषुसत्सु, एवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ, अमुकशर्मणः (भार्ययासहाधिकृतस्य) ममइहजन्मनि जन्मांतरेवाबाल्ययौवनवार्धक्यावस्थासुवाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुःस्पर्शनश्रोत्रमनोभिचरित-ज्ञाताज्ञातकामाका ममहापातकोपपातकादिसंचितानांपापानां, ब्रह्महननसुरापानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानांबुद्धिपूर्वका णांमनोवाक्कायकृतानांबहुकालाभ्यस्तानांउपपातकानांच, स्पृष्टास्पृष्टसंकलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणवि हिताकरणकर्मलोपजनितानां, रसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयअजादिपशुविक्रयस्वगृहवि क्रयनीलीविक्रयअक्रेयविक्रयपण्यविक्रयजलचरादिजंतुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसंभूतानां, निरर्थकवृक्षच्छेद

नऋणानपाकरणब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलाहरणलोहादिहरणनाना वस्तुहरणरूपाणां, ब्राह्मणनिंदागुरुनिंदावेदनिंदाशास्त्रनिंदापरनिंदाभक्ष्यभक्षणाभोज्यभोजनाचोष्यचोषणालेह्यलेहनापेया पेयास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावंद्यवंदनाचिंत्यचिंतनायाज्ययाजनापूज्यपूजनरूपाणां, मातृपितृतिरस्कारस्त्रीपुरु षप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमनचाडांलादिहीनजातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरू पाणां,कूटसाक्षित्वपैशून्यवादमिथ्यापवादम्लेच्छसंभाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरणवृत्तिच्छेदनपरवृत्तिहरणरूपाणां, मित्रवं चनगुरुवंचनस्वामिवंचनासत्यभाषणगर्भपातनपथितांबूलचर्वणहीनजातिसेवनपरान्नभोजनगणान्नभोजनलशुनपलांडुगृंजन भक्षणतालवृक्षफलभक्षणोच्छिष्टभक्षणमार्जारोच्छिष्टभक्षणपर्युषितान्नभक्षणरूपाणां पंक्तिभेदकरणभ्रूणहिंसापशुहिंसात्रालहिं साद्यनेकहिंसोद्भूतानां, शौचत्यागस्नानत्यागसंध्यात्यागोपासनाग्नित्यागवैश्वदेवत्यागरूपाणां, निषिद्धाचरणकुग्रामवासब्रह्म द्रोहगुरुद्रोहपितृमातृद्रोहपरद्रोहपरनिंदात्मस्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां, गोयानवृषभयानमहिषीयानगर्दभयानोष्ट्र यानाजयानभृत्याभरणस्वग्रामत्यागगोत्रत्यागकुलत्यागदूरस्थमंत्रणविप्राशाभेदनावंदिताशीर्वादग्रहणपतितसंभाषणरूपाणां, पतितजनपंक्तिभोजनाहःसंगमवृथामनोरथादिपापानांतथा—"महापापोपपापाभ्यांनानायोनिषुयत्कृतम् ॥ बालभावेनयत्पापं क्षुत्तृडर्थेचयत्कृतम् ॥ आत्मार्थंचैवयत्पापंपरार्थेचैवयत्कृतम् ॥तीर्थेषुचैवयत्पापंगुर्ववज्ञाकृतंचयत् ॥ रागद्वेषादिजनितंकामक्रो धेनयत्कृतम् ॥ हिंसानिद्रादिजंपापंभेदद्दष्ट्याचयन्मया ॥ देहाभिमानजंपापंसर्वदायन्मयाकृतम् ॥ भूतंभव्यंचयत्पापंभविष्यं

चैवगौतमि ॥ शुष्कमार्द्रंचयत्पापंजानताजानताकृतम् ॥ महल्लघुचयत्पापंतन्मेनाशयजाह्नवि ॥ ब्रह्महामद्यपःस्तेयीतथैवगुरु
तल्पगः ॥ महापापानिचत्वारितत्संसर्गीतुपंचमः ॥ अतिपातकमन्यच्चतश्यूनमुपपातकम् ॥ गोवधोव्रात्यतास्तेयंऋणानांचा
नपक्रियाः ॥ अनाहिताग्नितापण्यविक्रयःपरिवेदनम् ॥ इंधनार्थेंद्रुमच्छेदःस्त्रीहिंसौपधिजीवनम् ॥ हिंसायात्राविधानंचभृत
काध्यापनंतथा ॥ प्रथमाश्रममारभ्ययत्किंचित्किल्बिषंकृतम् ॥ कृमिकीटादिहननंयत्किंचित्प्राणिहिंसनम् ॥ मातापित्रोरशुश्रू
षातद्वाक्याकरणंतथा ॥ अपूज्यपूजनंचैवपूज्यानांचव्यतिक्रमः ॥ अनाश्रमस्थताग्न्यादिदेवाशुश्रूषणंतथा ॥ परकार्यापहरणं
परद्रव्योपजीवनम् ॥ ततोऽज्ञानकृतंवापिकायिकंवाचिकंतथा ॥ मानसंत्रिविधंपापंप्रायश्चित्तैरनाशितम् ॥ तस्मादशेषपापे
भ्य स्त्राहित्रैलोक्यपावनि ॥ निष्पापोऽस्म्यधुनादेविप्रसादात्तवनान्यथा ॥ स्त्रीणांविशेषः—पाणिग्रहणमारभ्यस्वकर्मापरिपाल
नम् ॥ इंद्रियाभिरतिःपुंसुनानायोनिषुयाभवेत् ॥ कृमिकीटादिहननंपंक्तिभेदादिकंतथा ॥ स्पृष्टास्पृष्टमनाचारंमनसादोष
कल्पनम् ॥तत्सर्वंनाशयक्षिप्रंगंगेत्वंयात्रयानया ॥” इत्यादिप्रकीर्णपातकानांएतत्कालपर्यंतंसंचितानांलघुस्थूलसूक्ष्माणांचनिः
शेषपरिहारार्थंदशावरान्दशापरान्आत्मनासहितान्एकविंशतिपुरुषानुद्धर्तुंब्रह्मलोकावधिपंचाशत्कोटियोजनविस्तीर्णेऽस्मि
न्भूमंडलेसप्तर्षिमंडलपर्यंतंवालुकाभिःकृतराशेःवर्षसहस्रावसानेएकैकवालुकापकर्षक्रमेणसर्वराश्यपकर्षसंमितकालपर्यंतंब्रह्म
लोकेब्रह्मसायुज्यताप्राप्त्यर्थंतथाममसमस्तपितॄणांआत्मनश्वविष्ण्वादिलोकप्राप्तये, अधीतानामध्येष्यमाणानांचाध्यायानांस्था
पनविच्छेदक्रोशघोषणदंतविवृतिदुर्वृत्तद्रुतोच्चारितवर्णानां,पूर्वसवर्णानांगलोपलंबितविवृतोच्चारितवर्णानाम्, श्लिष्टास्पष्टवर्ण

॥ ९१ ॥

॥ ९२ ॥

वरदाय० वलिने० धर्मयोनये० महामोहाय० विष्णुभ्रात्रे० ६०० सनातनाय० सावित्रीभाविताय० राज्ञे० विस्तृताय० विघृणाय० विराजे० सप्तार्चिषे० सप्ततुरगाय० सप्तलोकनमस्कृताय० संपन्नाय० गुणसंपन्नाय० सुमनसे० शोभनप्रियाय० सर्वात्मने० सर्वकृते० सृष्टये० सप्तिमते० सप्तमीप्रियाय० सुमेधसे० माधवाय० मंदाय० मेधाविने० मधुसूदनाय० अंगिरसे० गतिकालज्ञाय० ६२५ धूमकेतवे० सुकेतनाय० सुखिने० सुखप्रदाय० सौख्याय० कामिने० कांतिप्रियाय० मुनये० संतापनाय० संतपनाय० आतपिने० तपसांपतये० उग्रस्वामिने० सहस्राक्षाय० प्रियकारिणे० प्रियंकराय० प्रीताय० विमन्यवे० अंभोदाय० जीवनाय० जगतांपतये० जगत्पित्रे० प्रीतमनसे० शर्वाय० सर्वगुहाय० ६५० अचलाय० जगदाय० जगदानंदिने० जगत्रात्रे० सुरारिघ्ने० श्रेयसे० श्रेयस्कराय० ज्यायसे० उत्तमोत्तमाय० उत्तमाय० महामेरवे० महाशैलाय० धारणाय० धरणीधराय० धराधराय० धर्मराजाय० धर्माधर्मप्रवर्तकाय० रथाध्यक्षाय० रथपतये० त्वरमाणाय० अमितानलाय० उत्तराय० पूर्वदिक्स्वामिने० तारापतये० अपांपतये ६७५ पुण्यसंकीर्तनाय० पुण्यहेतवे० लोकत्रयाश्रयाय० स्वर्भानवे० विगतारिष्टाय० विशिष्टोत्कृष्टकर्मकृते० व्याधिप्रणाशनाय० केतवे० शूराय० सर्वजितांवराय० एकनाथाय० रथाधीशाय० शनैश्चरपित्रे० असिताय० वैवस्वतगुरवे० मृत्यवे० नित्यधर्माय० महावलाय० प्रलंबहाराय० संचारिणे० प्रद्योताय० उद्योतिताय० अनलाय० संतानकृते० महामंत्राय० ७०० मंत्रमूर्तये० महालयाय० श्रेष्ठात्मने० मरुतःसूनवे० मरुतामीश्वराय० शुचये० संसारगतिविच्छेत्रे० संसारार्णवतारकाय० सप्तजिह्वाय० सहस्रार्चिषे० रत्नगर्भाय०

अपराजिताय० धर्मकेतवे० अमोघात्मने० धर्माधर्मप्रकाशकाय० लोकसाक्षिणे० लोकगुरवे० लोकेशाय० छंदवाहनाय० धर्मयूपाय० सूक्ष्मवायवे० धनुष्पाणये० धनुर्धराय० पिनाकधृषे० महोत्साहाय० ७२५ नैकमायाय० महाशनाय० शक्तये० शक्तिमतांश्रेष्ठाय० सर्वशस्त्रभृतांवराय० ज्ञानगम्याय० दुराराध्याय० लोहितांगाय० अरिमर्दनाय० अनंताय० अनंत धर्मदाय० दानिने० धर्मकृते० चक्रिविक्रमाय० दैवताय० त्र्यक्षराय० भेद्याय० नीलांगाय० नीललोहिताय० व्यासाय० व्यसनघ्ने० वादिने० व्योमचारिणे० व्ययापहाय० शार्ङ्गधन्वने० ७५० स्थिराय० भीमाय० सर्वप्रहरणायुधाय० परमेष्ठिने० परंज्योतिषे० नाकपालिने० दिवस्पतये० वदान्याय० वासुकये० वेद्याय० आत्रेयाय० अतिपराक्रमाय० द्वापराय० परमोदाराय० परब्रह्मचर्यवते० उद्दीप्तवेषाय० मुकुटिने० पद्महस्ताय० हिमांशुभृते० स्मिताय० प्रशांतवदनाय० पद्मोदरनिभाननाय० सायंदिवादिव्यवपुषे० अनिर्देश्याय० महारथाय० ७७५ महाप्रभवे० महानीकाय० शेषाय० सत्वरजस्तमाय० अनन्यप्रतिमाय० स्पष्टाय० नित्यतुष्टाय० कृततपाय० अहिंसकाय० भयकराय० लोकालोकप्रकाशकाय० जगन्नाथाय० जगत्साक्षिणे० जगज्जनमनोहराय० भास्वते० विभावसवे० वेधसे० विहारिणे० वरदायकाय० ग्रहनाथाय० ग्रहपतये० ग्रहेशाय० तिमिरापहाय० सैंहिकेयरिपवे० सिंहस्वामिने० ८०० सिंहासनस्थिताय० त्रयीतनवे० जगच्चक्षुषे० अद्वितीयाय० अरिमर्दनाय० चतुर्वर्णार्तिघ्ने० शुद्धमतये० शुद्धाय० सुधालयाय० द्विभुजाय० अद्वयवादिने० योगिने० योगीश्वराय० अरुणाय० योगिगम्याय० दुराराध्याय० योगवते० योगिनीपतये० दिक्पतये० दिवसस्वामिने० दिलीपाय०

व्योमदीपकाय० कलिरत्नाय० कलायुक्ताय० कलिकल्मषनाशनाय० ८२५ कलावते० कलिदोषघ्नाय० कलिदेवाय० कलानिधये० कालज्ञानपराय० पूर्वाय० पूर्वदिक्पुत्राय० उत्तमाय० पूर्वदिक्तिलकाय० पुण्याय० परमात्मने० परंतपाय० परंज्योतिषे० परंधाम्ने० परात्परतराय० अंतकाय० उदिताय० पर्वतारूढाय० पवित्राय० पापनाशनाय० उदयाचलारूढाय० प्राचीनशृंगारभाजनाय० खरांशवे० अर्यम्णे० व्योमरत्नाय० ८५० धर्मतनुद्युतये० अहर्मणये० अनंतात्मने० कृतांतजनकाय० अध्वगाय० यमुनाजनकाय० जीवाय० जयलक्ष्मीविभूषिताय० चित्रांगदाय० चित्रभानवे० चराचरविकाशकृते० द्वादशात्मने० ध्वांतशत्रवे० गगनध्वजाय० आत्मभुवे० विश्वाधाराय० विश्वनाथाय० विश्वध्वांतप्रणाशकृते० पद्महस्ताय० पद्ममित्राय० पद्मरागसमद्युतये० पद्मिनीबोधकाय० पूताय० परमाय० पद्मबांधवाय० ८७५ नमस्कारप्रियाय० हेलिने० विश्वरूपाय० विनोदकृते० भरणीसंभवाय० भीमाय० भूर्भुवःस्वःप्रकाशकाय० वेदगीताय० वेदमुख्याय० ऋग्यजुःसामाय० इनाय० युगादिकरणाय० स्थितिसंहारकारकाय० वैकल्यनाशाय० वेदगाय० वेदविद्याविशारदाय० सुवर्णरेतसे० सुभगाय० हव्यकव्यप्रदायकाय० ओंकाराय० वषट्काराय० इषेत्वोर्जेस्वरूपधृषे० जितवैश्वानराय० जातवेदसे० जगदलंकृतये० अक्षराय० ९०० कृतविश्वाय० अर्काय० मिहिराय० मंडलाधिपाय० दुर्विज्ञेयगतये० त्वष्ट्रे० सुहृदाश्रितमंदिराय० कलिंगदेशसंभूताय० कांताय० काश्यपगोत्रजाय० ईश्वराभ्यधिदेवाय० तीव्राय० पद्मासनस्थिताय० अनादिरूपाय० दितिजाय० रत्नकांतये० प्रभामयाय० जगत्प्रदीपाय० विस्तीर्णाय० महाविस्तीर्णमंडलाय० एकचक्ररथाय०

स्वर्णरथाय० स्वर्णशरीरधृषे० निरालंबाय० गगनगाय० ९२५ धर्मकर्मप्रभावकृते० धर्मात्मने० कर्मणांसाक्षिणे० प्रत्यक्षाय० परमेश्वराय० मेरुसेविने० सुमेधाविने० मेरुरक्षाकराय० महते० आधारभूताय० धृतिमते० धनधान्यसमृद्धिकृते० पापसंतापसंहर्त्रे० मनोवांछितदायकाय० रोगहर्त्रे० राज्यदायिने० रमणीयगुणाय० अनृणिने० कालत्रयानंतरूपाय० मुनिवृंदनमस्कृताय० संध्यारागकराय० सिद्धैःसंध्यावंदनवंदिताय० साम्राज्यदाननिरताय० समाराधनतोपकृते० भक्तदुःखक्षयकराय० ९५० भवसागरतारकाय० भयापहर्त्रे० भगवते० अप्रमेयपराक्रमाय० मनुस्वामिने० मन्युपतये० मान्याय० मन्वंतराधिपाय० अहोरात्रचराय० अनादये० अघमर्पणाय० ईशित्रे० गायत्रीजपसुप्रीताय० भर्गाय० भूदेववंदिताय० सहस्रकिरणस्वामिने० सहस्राक्षाय० सहस्रपदे० कामदाय० मोक्षदाय० साधवे० साधुलोकसुखावहाय० जयध्वजाय० जितरिपवे० जयश्रिये० ९७५ जयदायकाय० भूतशुद्धिकराय० भूपाय० भव्याय० भूमिप्रकाशकाय० मार्गानुगाय० महादेवाय० अमितगामिने० महाप्रभवे० निराधाराय० निराहाराय० नयवते० निपुणाय० अनघाय० परमब्रह्मचारिणे० चराचरपुरोहिताय० स्वर्दीपकाय० अमितत्राणाय० परप्राणाय० प्रमाणकृते० शुक्राय० शुक्रप्रभाय० स्वामिने० रत्नांगाय० सूर्यदेवतायैनमः ॥ १००० ॥ इतिश्रीसूर्यसहस्रनामावलिःसंपूर्णा ॥ ॥ छ ॥ ॥ छ ॥

॥ १०० ॥ देव्यष्टोत्तरशतनामावलिः ॥ ॐकारःसर्वत्रांतेचनमःशब्दोयोज्यः ॥ आदिशक्तयेनमः महादेव्यै० अंबिकायै० परमेश्वर्यै० ईश्वर्यै० अनैश्वर्यै० योगिन्यै० सर्वभूतेश्वर्यै० जयायै० विजयायै० जयंत्यै० शांभव्यै० शांत्यै० ब्राह्म्यै०

ब्रह्मांडधारिण्यै० महारूपायै० महामायायै० माहेश्वर्यै० लोकरक्षिण्यै० दुर्गायै० दुर्गपारायै० भक्तचिंतामण्यै० मृत्यै०
सिद्ध्यै० मूर्त्यै० २५ सर्वसिद्धिप्रदायै० मंत्रमूर्त्यै० महाकाल्यै० सर्वमूर्तिस्वरूपिण्यै० वेदमूर्त्यै० वेदभूत्यै० वेदांतायै०
व्यवहारिण्यै० अनघायै० भगवत्यै० रौद्रायै० रुद्रस्वरूपिण्यै० नारायण्यै० नारसिंह्यै० नागयज्ञोपवीतिन्यै० शंखचक्रगदा
धारिण्यै० जटामुकुटशोभिन्यै० अप्रमाणायै० प्रमाणायै० आदिमध्यावसानायै० पुण्यदायै० पुण्योपचारिण्यै० पुण्यकी
र्त्यै० स्तुतायै० विशालाक्ष्यै० ५० गंभीरायै० रूपान्वितायै० कालराज्यै० अनल्पसिद्ध्यै० कमलायै० पद्मवासिन्यै० महा
सरस्वत्यै० मनःसिद्धायै० मनोयोगिन्यै० मातंगिन्यै० चंडमुंडचारिण्यै० दैत्यदानववासिन्यै० मेपज्योतिपायै० परंज्योति
पायै० आत्मज्योतिपायै० सर्वज्योतिःस्वरूपिण्यै० सहस्रमूर्त्यै० शर्वाण्यै० सूर्यमूर्तिस्वरूपिण्यै० आयुर्लक्ष्म्यै० विद्याल
क्ष्म्यै० सर्वलक्ष्मीप्रदायै० विचक्षणायै० क्षीरार्णववासिन्यै० वागीश्वर्यै० ७५ वाक्सिद्ध्यै० अज्ञानज्ञानगोचरायै० बलायै०
परमकल्याण्यै० भानुमंडलवासिन्यै० अव्यक्तायै० व्यक्तरूपायै० अव्यक्तरूपायै० अनंतायै० चंद्रायै० चंद्रमंडलवासिन्यै०
चंद्रमंडलमंडितायै० भैरव्यै० परमानंदायै० शिवायै० अपराजितायै० ज्ञानप्राप्त्यै० ज्ञानवत्यै० ज्ञानमूर्त्यै० कलावत्यै०
श्मशानवासिन्यै० मात्रे० परमकल्पिन्यै० घोषवत्यै० दरिद्रहारिण्यै० १०० शिवतेजोमुख्यै० विष्णुवल्लभायै० केशविभू
षितायै० कूर्मायै० महिषासुरघातिन्यै० सर्वरक्षायै० महाकाल्यै० महालक्ष्म्यैनमः ॥ १०८ ॥ ॥ छ ॥
॥ १०१ ॥ देवीसहस्रनामावलिः ॥ ॐकारःसर्वत्रादौनमःशब्दश्चांतेयोजनीयः ॥ ॐमहाविद्यायैनमः जगन्मात्रे० महा

लक्ष्म्यै० शिवप्रियायै० विष्णुमायायै० शुभायै० शांतायै० सिद्धायै० सिद्धसरस्वत्यै० क्षमायै० कांत्यै० प्रभायै० ज्यो
त्स्नायै० पार्वत्यै० सर्वमंगलायै० हिंगुलायै० चंडिकायै० दांतायै० पद्मायै० लक्ष्म्यै० हरिप्रियायै० त्रिपुरानंदिन्यै० नंदा
यै० सुनंदायै० सुरवंदितायै० २५ यज्ञविद्यायै० महामायायै० वेदमात्रे० सुधायै० धृत्यै० प्रीत्यै० प्रियायै० प्रसिद्धायै०
मृडान्यै० विंध्यवासिन्यै० सिद्धविद्यायै० महाशक्त्यै० पृथ्व्यै० नारदसेवितायै० पुरुहूतप्रियायै० काल्यै० कामिन्यै०पद्म
लोचनायै० प्रह्लादिन्यै० महामात्रे० दुर्गायै० दुर्गार्तिनाशिन्यै० ज्वालामुख्यै० सुगोत्रायै० ज्योत्यै० ५० कुमुदवासिन्यै०
दुर्गायै० दुर्लभायै० विद्यायै० स्वर्गत्यै० पुरवासिन्यै० अपर्णायै० शांवर्यै० मायायै० मदिरायै० मृदुहासिन्यै० नाराय
ण्यै० महानिद्रायै० योगनिद्रायै० प्रभावत्यै० प्रज्ञायै० अपरिमितायै० प्रज्ञायै० तारायै० मधुमत्यै० मधवे० क्षीरार्णवसु
तायै० वालायै० वालिकायै० सिंहगामिन्यै० ७५ ओंकारायै० सुधाकारायै० चेतनायै० कोपनायै० क्षित्यै० अर्धविंदुधरा
यै० धीरायै० विश्वमात्रे० कलावत्यै० पद्मावत्यै० सुवस्त्रायै० प्रवृद्धायै० सरस्वत्यै० जितमात्रे० जितेंद्रायै० शारदायै०
हंसवाहनायै० कुंडासनायै० जगद्धात्र्यै० वुद्धमात्रे० जनेश्वर्यै० राज्यलक्ष्म्यै० वषट्कारायै० सुधाकारायै० सुधात्मिकायै०
१०० राजनीत्यै० त्रयीवार्तायै० दंडनीत्यै० क्रियावृत्त्यै० सद्भूत्यै० तारिण्यै० श्रद्धायै० सद्गत्यै० सत्परायणायै० सिंध
वे० मंदाकिन्यै० गंगायै० यमुनायै० सरस्वत्यै० गोदावर्यै० विपाशायै० कावेर्यै० शतह्रदायै० शरय्वे० चंद्रभागायै० कौ
शिक्य० गंडक्यै० शिवायै० नर्मदायै० कर्मनाशायै० १२५ चर्मण्वत्यै० वेदिकायै०वेत्रवत्यै० वितस्तायै० वरदायै० वर

वाहनायै० सत्यै० पतिव्रतायै० साध्व्यै० सुचक्षुषे० कुंडवासिन्यै० एकचक्षुषे० सहस्राक्ष्यै० सुश्रोण्यै० भगमालिन्यै० सेनाश्रेण्यै० पताकायै० सव्यूहायै० युद्धकांक्षिण्यै० पताकिन्यै० दयायै० रंभायै० विपंच्यै० पंचमप्रियायै० परायै० १५० परकालायै० कांतायै० त्रिशक्त्यै० मोक्षदायिन्यै० ऐंद्र्यै० माहेश्वर्यै० ब्राह्म्यै० कौमार्यै० कमलासनायै० इच्छायै० भगवत्यै० धेन्वै० कामधेन्वै० कृपावत्यै० वज्रायुधायै० वज्रहस्तायै० चंड्यै० चंडपराक्रमायै० गौर्यै० सुवर्णवर्णायै० स्थितिसंहारकारिण्यै० एकायै० अनेकायै० महेज्यायै० शतवाहवे० १७५ महाभुजायै० भुजंगभूषणायै० भूषायै० षट्चक्रक्रमवासिन्यै० षट्चक्रभेदिन्यै० श्यामायै० कायस्थायै० कायवर्जितायै० सुस्मितायै० सुमुख्यै० क्षामायै० मूलप्रकृत्यै० ईश्वर्यै० अजायै० वहुवर्णायै० पुरुषार्थप्रवर्तिन्यै० रक्तायै० नीलायै० सितायै० श्यामायै० कृष्णायै० पीतायै० कर्बुरायै० क्षुधायै० तृष्णायै० २०० जरायै० वृद्धायै० तरुण्यै० करुणालयायै० कलायै० काष्ठायै० मुहूर्तायै० निमेषायै० कालरूपिण्यै० सुवर्णायै० रसनायै० नासायै० चक्षुषे० स्पर्शवत्यै० रसायै० गंधप्रियायै० सुगंधायै० सुस्पर्शायै० मनोगत्यै० मृगनाभ्यै० मृगाक्ष्यै० कर्पूरामोदधारिण्यै० पद्मयोन्यै० सुकेश्यै० सुलिंगायै० २२५ भगरूपिण्यै० योनिमुद्रायै० महामुद्रायै० खेचर्यै० स्वर्गगामिन्यै० मधुश्रिये० माधवीवल्ल्यै० मधुमत्तायै० मदोद्धतायै० मातंग्यै० शुकहस्तायै० पुष्पवाणायै० इक्षुचापिन्यै० रक्तांवरधराक्ष्यै० रक्तपुष्पावतंसिन्यै० शुभ्रांवरधरायै० आधारायै० महाश्वेतायै० वसुप्रियायै० सुवेण्यै० पद्महस्तायै० मुक्ताहारविभूषणायै० कर्पूरामोदिन्यै० श्वासायै० पद्मिन्यै० २५० पद्ममंदिरायै० खड्गिन्यै० चक्रहस्तायै० भुशुंडीपरि

वायुधायै० चापिन्यै० पाशहस्तायै० त्रिशूलवरधारिण्यै० सुबाणायै० शक्तिहस्तायै० मयूरवरवाहनायै० वरायुधधरायै० धीरायै० वीरपानमदोत्कटायै० वसुधायै० वसुधारायै० जयायै० शाकंभर्यै० शिवायै० विजयायै० जयंत्यै० सुस्तन्यै० शत्रुनाशिन्यै० कूर्मायै० सुपर्वायै० कामाक्ष्यै० २७५ कामवंदितायै० जालंधरधरायै० अनंतायै० कामरूपनिवासिन्यै० अंतर्वल्यै० देवशक्त्यै० वरदायै० वरधारिण्यै० शीतलायै० सुशीलायै० बालग्रहविनाशिन्यै० कामबीजवत्यै० सत्यायै० सत्यधर्मपरायणायै० स्थूलमार्गस्थितायै० सूक्ष्मायै० सूक्ष्मबुद्ध्यै० प्रबोधिन्यै० षट्कोणायै० त्रिकोणायै० त्र्यक्षायै० त्रिपुरसुंदर्यै० वृषप्रियायै० वृषारूढायै० महिषासुरघातिन्यै० ३०० शंभुदर्पहरायै० दृप्तायै० दीप्तपावकसन्निभायै० कपालभूषणायै० काल्यै० कपालवरधारिण्यै० कपालकुंडलायै० दीर्घायै० शिवदूत्यै० घनस्वन्यै० सिद्धिदायै० बुद्धिदायै० नित्यायै० सत्यमार्गप्रबोधिन्यै० मूलाधारायै० निराकारायै० वह्निकुंडकृताश्रयायै० वायुकुंडासनासीनायै० निराधारायै० निराश्रयायै० कंबुग्रीवायै० वसुमत्यै० छत्रच्छायाकृतालयायै० कुंडलिन्यै० जगद्गर्भायै० ३२५ भुजंगाकारशायिन्यै० प्रोल्लसत्सप्तपद्मायै० नाभिनालमृणालिन्यै० वल्लितंतुसमुत्थानायै० षड्रसास्वादलोलुपायै० श्वासोच्छ्वासगतये० जिह्वाग्राहिण्यै० वनसंश्रयायै० तपस्विन्यै० तपःसिद्धायै० तापस्यै० तपःप्रियायै० तपोनिष्ठायै० तपोयुक्तायै० तपसःसिद्धिदायिन्यै० सप्तधातुमयीमूर्त्यै० सप्तधात्वंतराश्रयायै० देहपुष्ट्यै० मनस्तुष्ट्यै० रत्नपुष्ट्यै० बलोद्धतायै० ओषध्यै० वैद्यमात्रे० द्रव्यशक्त्यै० प्रभाविन्यै० ३५० वैद्यविद्यायै० चिकित्सायै० सुपथ्यायै० रोगनाशिन्यै० मृगयायै० मृगमांसादायै० मृगत्वचे० मृगलोचनायै०

यै० ५७५ दक्षजायै० कोटिरूपिण्यै० क्रतवे० कात्यायन्यै० स्वस्थायै० स्वच्छंदायै० कविप्रियायै० सत्यागमायै० वहिः
स्थायै० काव्यशक्त्यै० कवित्वदायै० मेनापुत्र्यै० सत्यै० साध्व्यै० मैनाकभगिन्यै० तडिते० सौदामिन्यै० सुधामायै०
सुधाम्न्यै० धामशालिन्यै० सौभाग्यदायिन्यै० दिवे० सुभगायै० द्युविवर्धिन्यै० श्रियै० ६०० ह्रियै० कृत्तिवसनायै० कृ
त्तिकायै० कालनाशिन्यै० रक्तबीजवधोद्युक्तायै० सुतंतवे० बीजसंतत्यै० जगज्जीवायै० जगद्बीजायै० जगत्रयहितैषिण्यै
चामीकरायै० चंद्रायै० साक्षात्षोडशीकलायै० यत्तत्पदानुबंधायै० यक्षिण्यै० धनदार्चितायै० चित्रियै० चित्रमायायै०
विचित्रायै० भुवनेश्वर्यै० चामुंडायै० मुंडहस्तायै० चंडमुंडवधोद्यतायै० अष्टम्यै० एकादश्यै० ६२५ पूर्णायै० नवम्यै०
चतुर्दश्यै० उमायै० कलशहस्तायै० पूर्णकुंभधरायै० धरायै० अभीरवे० भैरव्यै० भीरवे० भीमायै० त्रिपुरभैरव्यै० महा
चंडायै० रौद्रायै० महाभैरवपूजितायै० निर्मुंडायै० हस्तिन्यै० चंडायै० करालदशनाननायै० करालायै० विकरालायै० घोर
घर्घरनादिन्यै० रक्तदंतायै० ऊर्ध्वकेश्यै० बंधूककुसुमारुणायै० ६५० कादंबर्यै० पलाशायै० काश्मीरकुंकुमप्रियायै० क्षांत्यै०
वहुसुवर्णायै० रत्यै० वहुसुवर्णदायै० मातंगिन्यै० वरारोहायै० मत्तमातंगगामिन्यै० हंसायै० हंसगत्यै० हंस्यै० हंसोज्वल
शिरोरुहायै० पूर्णचंद्रप्रतीकाशायै० स्मिताशायै० सुकुंडलायै० मष्यै० लेखन्यै० लेखायै० सुलेखायै० लेखकप्रियायै० शंखिन्यै०
शंखहस्तायै० जलस्थायै० ६७५ जलदेवतायै० कुरुक्षेत्रायै० वन्यै० काश्यै० मथुरायै० कांच्यै० अवंतिकायै० अयोध्यायै०
द्वारकायै० मायायै० तीर्थायै० तीर्थकर्यै० प्रियायै० त्रिपुरायै० अप्रमेयायै० कोशस्थायै० कोशवासिन्यै० कौशिक्यै०

कुशावर्तायै० कोशांवायै० कोशवर्धिन्यै० कोशदायै० पद्मकोशाक्ष्यै० कुसुंभकुसुमप्रियायै० तोतुलायै० ७०० वर्तुलायै० कोट्यै० कोटस्थायै० कोटराश्रयायै० स्वयंभुवे० स्वरूपायै० सुरूपायै० रूपवर्धिन्यै० तेजस्विन्यै० सुदीक्षायै० वलदायै० वलदायिन्यै० महाकोशायै० महागर्तायै० वुद्धये० सदसदात्मिकायै० महाग्रहहरायै० सौम्यायै० विशोकायै० लोकना शिन्यै० सात्विकायै० सत्वसंस्थायै० राजस्यै० रजोत्तमायुतायै० तामस्यै० ७२५ तमोयुक्तायै० गुणत्रयविभाविन्यै० अव्य क्तायै० व्यक्तरूपायै० वेदविद्यायै० शांभव्यै० कल्याण्यै० शांकर्यै० कल्पायै० मनःसंकल्पसंतत्यै० सर्वलोकमय्यैशक्त्यै० सर्वश्रवणगोचरायै० सर्वज्ञानवत्यै० वांछायै० सर्वतत्त्वप्रवोधिन्यै० जागृत्यै० सुपुप्त्यै० स्वप्नावस्थायै० तुरीयकायै० त्वरायै० मंदगतये० मंदायै० मदिरामोदमोदिन्यै० पानभूम्यै० पानपात्रायै० ७५० पानदानकरोद्यतायै० आघूर्णायै० अरुणने त्रायै० किंचिदव्यक्तभाषिण्यै० आशापूरायै० दीक्षायै० दीक्षादीक्षितपूजितायै० नागवल्ल्यै० नागकन्यायै० भोगिन्यै० भोगवल्लभायै० सर्वशास्त्रमय्यै० सुस्मृत्यै० धर्मवादिन्यै० श्रुतिस्मृतिधरायै० ज्येष्ठायै० श्रेष्ठायै० पातालवासिन्यै० मीमां सायै० तर्कविद्यायै० सुभक्त्यै० भक्तवत्सलायै० सुनाभ्यै० यातनायै० यात्यै० ७७५ गंभीरायै० अभाववर्जितायै० नाग पाशधरामूर्त्यै० अगाधायै० नागकुंडलायै० सुचक्रायै० चक्रमध्यस्थायै० चक्रकोणनिवासिन्यै० सर्वमंत्रमय्यैविद्यायै० सर्व मंत्राक्षरायै० मधुश्रवसे० स्रवंत्यै० भ्रामर्यै० भ्रमरालयायै० मातृमंडलमध्यस्थायै० मातृमंडलवासिन्यै० कुमारजनन्यै० क्रूरायै० सुमुख्यै० ज्वरनाशिन्यै० अतीतायै० विद्यमानायै० भाविन्यै० प्रीतिमंजर्यै० सर्वसौख्यवत्यैशक्त्यै० ८०० आह्ला

रपरिणामिन्यै०· पंचभूतनिदानायै० भवसागरतारिण्यै० अक्रूरायै० ग्रहवत्यै० विग्रहायै० ग्रहवर्जितायै० रोहिणीभूमिगर्भायै० कालभुवे० कालवर्तिन्यै० कलंकरहितायै० नार्यै० चतुःषष्ट्यभिधायिन्यै० जीर्णायै० जीर्णवस्त्रायै० नूतनायै० नववल्लभायै० अजरायै० रतिप्रीत्यै० अतिरागविवर्धिन्यै० पंचवातगतिभिन्नायै० पंचश्लेष्माशयाधरायै० पंचपित्तवत्यैशक्त्यै० पंचस्थानविभाविन्यै० उदक्यायै० ८२५ वृषस्यंत्यै० त्र्यहःप्रस्रविण्यै० रजःशुक्रधरायैशक्त्यै० जरायुर्गर्भधारिण्यै० त्रिकालज्ञायै० त्रिलिंगायै० त्रिमूर्तिपुरवासिन्यै० अगारायै० शिवतत्त्वायै० कामतत्त्वायै० रागिण्यै० प्राच्यै० अपाच्यै० प्रतीच्यैदिशे० उदीच्यै० विदिशे० दिशायै० अहंकृत्यै० अहंकारायै० बालमायायै० बलिप्रियायै० स्रुचे० स्रुवायै० सामिधेन्यै० सुश्रद्धायै० ८५० श्राद्धदेवतायै० मात्रे० मातामह्यै० तृप्त्यै० पितुर्मात्रे० पितामह्यै० स्नुषायै० दौहित्रिण्यै० पुत्र्यै० पौत्र्यै० नप्त्र्यै० स्वस्रे० प्रियायै० स्तनादायै० स्तनधारायै० विश्वयोन्यै० स्तनंधय्यै० शिशूत्सगंधरायै० दोलायै० दोलाक्रीडायै० अभिनंदिन्यै० उर्वश्यै० कदल्यै० केकायै० विशिखायै० ८७५ शिखिवर्तिन्यै० खट्वांगधारिण्यै० खड्गबाणपुंखानुवर्तिन्यै० लक्षप्राप्तिकरायै० लक्ष्यै० सुलक्षायै० सुभलक्षणायै० वर्तिन्यै० सुपथाचारायै० परिखायै० स्वनिर्वृत्त्यै० प्राकारवलयायै० वेलायै० मर्यादायै० महोदध्यै० पोषण्यै० शोषणीशक्त्यै० दीर्घकेश्यै० सुलोमशायै० ललितायै० मांसलायै० तन्व्यै० वेदवेदांगधारिण्यै० नरासृक्पानमत्तायै० नरमुंडास्थिभूषणायै० ९०० अक्षक्रीडारत्यै० सार्यै० सारिकाशुकभाषिण्यै० शावर्यै० गारुडीविद्यायै० वारुण्यै० वरुणार्चितायै० वाराह्यै० तुंडहस्तायै० दंष्ट्रोद्धृतवसुंधरायै० मीनमूर्त्यै० धरा

मूर्त्यै० वदान्यायै० प्रतिमाश्रयायै० अमूर्त्यै० निधिरूपायै० शालग्रामशिलायै० शुचयै० स्मृतिसंस्काररूपायै० सुसंस्कारायै० संस्मृत्यै० प्राकृतायै० वेदभाषायै० गाथायै० गीत्यै० ९२५ प्रहेलिकायै० इडायै० पिंगलायै० पिंगायै० सुषुम्नायै० सूर्यवाहिन्यै० शशिश्रवायै० तालुस्थायै० काकिन्यै० मृतजीविन्यै० अणुरूपायै० बृहद्रूपायै० लघुरूपायै० गुरुस्थिरायै० स्थावरायै० जंगमायैदेव्यै० कृतकर्मफलप्रदायै० विषयायै० कांतदेहायै० निर्विषायै० जितेंद्रियायै० चित्स्वरूपायै० चिदानंदायै० परब्रह्मावबोधिन्यै० निर्विकारायै० ९५० निर्वैरायै० रत्यै० सत्यायै० अधिवर्तिन्यै० पुरुषायै० अज्ञानभिन्नायै० क्षांत्यै० कैवल्यदायिन्यै० विविक्तसेविन्यै० प्राज्ञायै० जनितायै० बहुश्रुतायै० निराहारायै० समस्तैकायै० सर्वलोकैकसेवितायै० सेव्यसेव्यायै० प्रियायै० सेव्यायै० सेवाफलविवर्धिन्यै० कलौकल्किप्रियायै० शीलायै० दुष्टम्लेच्छविनाशिन्यै० प्रत्यंचायै० धनुषे० यष्ट्यै० ९७५ खड्गधरायै० धरारथायै० अश्वप्लुतायै० वल्गायै० सृण्यै० मत्तवारुणायै० वीरसुवे० वेदमात्रे० वीरश्रियै० वीरनंदिन्यै० जयश्रियै० जयदीक्षायै० जयदायै० जयवर्धिन्यै० क्षेमंकर्यै० सिद्धिरूपायै० सत्कीर्त्यै० पथिदेवतायै० सौभाग्यायै० शुभाकारायै० सर्वसौभाग्यदायिन्यै० सर्वतीर्थमय्यैमूर्त्यै० सर्वदेवमय्यैप्रभायै० सर्वसिद्धिप्रदायैशक्त्यै० सर्वमंगलसंशितायैनमः १००० ॥ इतिश्रीदेवीसहस्रनामावलिःसंपूर्णा ॥ ॥ छ ॥

॥ १०२ ॥ दत्तात्रेयसहस्रनामावलिः ॥ ॐकारःसर्वत्रादौनमःशब्दश्चांतेयोजनीयः ॥ ॐश्रीदत्तात्रेयायनमः महायोगिने० योगेशाय० अमरप्रभवे० मुनये० दिगंबराय० बालाय० मायामुक्ताय० मदापहाय० अवधूताय० महानाथाय०

शंकराय० अमरवल्लभाय० महादेवाय० आदिदेवाय० पुराणप्रभवे० ईश्वराय० सत्वकृते० सत्वभृते० भावाय० सत्वा
त्मने० सत्वसागराय० सत्वविदे० सत्वसाक्षिणे० सत्वसाध्याय० २५ अमराधिपाय० भूतकृते०भूतभृते० भूतात्मने० भूत
संभवाय० भूतभावाय० भावाय० भूतविदे० भूतकारणाय० भूतसाक्षिणे० प्रभूतये० भूतानांपरमागतये० भूतसंगविही
नात्मने० भूतात्मने० भूतशंकराय० भूतनाथाय० महानाथाय० आदिनाथाय० महेश्वराय० सर्वभूतनिवासात्मने० भूत
संतापनाशनाय० सर्वात्मने० सर्वभृते० सर्वाय० सर्वज्ञाय० ५० सर्वनिर्णयाय० सर्वसाक्षिणे० बृहद्भानवे० सर्वविदे० सर्व
मंगलाय० शांताय०सत्याय० समाय० पूर्णाय० एकाकिने० कमलापतये० रामाय० रामप्रियाय० विरामाय० रामाका
रणाय० शुद्धात्मने० पावनाय० अनंताय० प्रतीताय० परमार्थभृते० हंससाक्षिणे० विभवे० प्रभवे० प्रलयाय० सिद्धा
त्मने० ७५ परमात्मने० सिद्धानांपरमागतये० सिद्धिसिद्धये० साध्याय० साधनाय० उत्तमायनाय० सुलक्षणाय० सुमे
धाविने० विद्यावते० विगतांतराय० विज्वराय० महाबाहवे० बहुलानंदवर्धनाय० अव्यक्तपुरुषाय० प्राज्ञाय० परज्ञाय०
परमार्थदृशे० परापरविनिर्मुक्ताय० युक्ताय० सत्वप्रकाशवते० दयावते० भगवते० भाविने० भावात्मने० भावकारणाय०
१०० भवसंतापनाशाय० पुष्पवते० पंडिताय० बुधाय० प्रत्यक्षवस्तुने० विश्वात्मने० प्रत्यग्ब्रह्मसनातनाय० प्रमाणविग
ताय० प्रत्याहारनियोजकाय० प्रणवाय० प्रणवातीताय० प्रमुखाय० प्रलयात्मकाय० मृत्युंजयाय० विविक्तात्मने० शंक
रात्मने० परस्मैवपुषे० परमाय० तनुविज्ञेयाय० परमात्मनिसंस्थिताय० प्रबोधकलनाधाराय० प्रभावप्रवरोत्तमाय० चिदं

वराय० चिद्विलासाय० चिदाकाशाय० १२५ चिदुत्तमाय० चित्तचैतन्यचित्तात्मने० देवानांपरमायैगतये० अचेत्याय०
चेतनाधाराय० चेतनाचित्तविक्रमाय० चित्तात्मने० चेतनारूपाय० लसत्पंकजलोचनाय० परब्रह्मणे० परंज्योतिषे० परं
धाम्ने० परंतपसे० परंसूत्राय० परंतंत्राय० पवित्राय० परमोहवते० क्षेत्रज्ञाय० क्षेत्रगाय० क्षेत्राय० क्षेत्रधाराय० पुरंज
नाय० क्षेत्रशून्याय० लोकसाक्षिणे० क्षेत्रवते० १५० वहुनायकाय० योगींद्राय० योगपूज्याय० योग्याय० आत्मविदां
शुचये० योगमायाधराय० स्थाणवे० अचलाय० कमलापतये० योगेशाय० योगनिर्मात्रे० योगज्ञानप्रकाशनाय० योगपा
लाय० लोकपालाय० संसारतमनाशनाय० गुह्याय० गुह्यतमाय० गुप्तये० मुक्ताय० युक्ताय० सनातनाय० गहनाय० गग
नाकाराय० गंभीराय० गणनायकाय० १७५ गोविंदाय० गोपतये० गोप्त्रे० गोभागाय० भावसंस्थिताय० गोसाक्षिणे०
गोतमारये० गांधाराय० गगनाकृतये० योगयुक्ताय० भोगयुक्ताय० शंकामुक्तसमाधिमते० सहजाय० सकलेशानाय० कार्त
वीर्यवरप्रदाय० सरजाय० विरजाय० पुंसाय० पावनाय० पापनाशनाय० परावरविनिर्मुक्ताय० परंज्योतिषे० पुरातनाय०
नानाज्योतिषे० अनेकात्मने० २०० स्वयंज्योतिषे० सदाशिवाय० दिव्यज्योतिर्मयाय० सत्यविज्ञानभास्कराय० नित्यशु
द्धाय० पराय० पूर्णाय० प्रकाशाय० प्रकटोद्भवाय० प्रमादविगताय० परेशाय० परविक्रमाय० योगिने० योगाय० योग
पाय० योगाभ्यासप्रकाशनाय० योक्त्रे० भोक्त्रे० विधात्रे० त्रात्रे० पात्रे० निरायुधाय० नित्यमुक्ताय० नित्ययुक्ताय०
सत्याय० २२५ सत्यपराक्रमाय० सत्वशुद्धिकराय० सत्वाय० सत्वभृतांगतये० श्रीधराय० श्रीवपुषे० श्रीमते० श्रीनिवा

साय० अमरार्चिताय० श्रीनिधये० श्रीपतये० श्रेष्ठाय० श्रेयकाय० चरमाश्रयाय० त्यागिने० त्यागार्थसंपन्नाय० त्यागा त्मने० त्यागविग्रहाय० त्यागलक्षणसिद्धात्मने० त्यागज्ञाय० त्यागकारणाय० भोगाय० भोक्रे० भोग्याय० भोगसाधन कारणाय० २५० भोगिने० भोगार्थसंपन्नाय० भोगज्ञानप्रकाशनाय० केवलाय० केशवाय० कृष्णाय० कंवाससे० कमला लयाय० कमलासनपूज्याय० हरये० अज्ञानखंडनाय० महात्मने० महदादये० महेशोत्तमवंदिताय० मनोबुद्धिविहीना त्मने० मानात्मने० मानवाधिपाय० भुवनेशाय० विभूतये० धृतये० मेधायै० स्मृतये० दयायै० दुःखदावानलाय० बुधाय० २७५ प्रबुद्धाय० परमेश्वराय० कामघ्ने० क्रोधघ्ने० दंभदर्पमदापहाय० अज्ञानतिमिरारये० भवारये० भुवनेश्वराय० रूप कृते० रूपभृते० रूपिणे० रूपात्मने० रूपकारणाय० रूपज्ञाय० रूपसाक्षिणे० नामरूपाय० गुणांतकाय० अप्रमेयाय० प्रमेयाय० प्रमाणाय० प्रणवाश्रयाय० प्रमाणरहिताय० अचिंत्याय० चेतनाविगताय० अजराय० ३०० अक्षराय० अक्ष रमुक्ताय० विज्वराय० ज्वरनाशनाय० विशिष्टाय० वित्तशास्त्रिणे० दृष्टाय० दृष्टांतवर्जिताय० गुणेशाय० गुणकायाय० गुणात्मने० गुणभावनाय० अनंतगुणसंपन्नाय० गुणगर्भाय० गुणाधिपाय० गणेशाय० गुणनाथाय० गुणात्मने० गण भावनाय० गणवंधवे० विवेकात्मने० गुणयुक्ताय० पराक्रमिणे० अतर्क्याय० क्रतवे० ३२५ अग्नये० कृतज्ञाय० सफला श्रयाय० यज्ञाय० यज्ञफलाय० दात्रे० यज्ञईज्याय० अमरोत्तमाय० हिरण्यगर्भाय० श्रीगर्भाय० खगर्भाय० कुणपेश्व राय० मायागर्भाय० लोकगर्भाय० स्वयंभुवे० भुवनांतकाय० निष्पापाय० निविडाय० नंदिने० बोधिने० बोधसमाश्र

याय० बोधात्मने० बोधनात्मने० भेदवैतंडखंडनाय० स्वाभाव्याय० ३५० भावनिर्मुक्ताय० व्यक्ताय० अव्यक्तसमाश्र
याय० नित्यतृप्ताय० निराभासाय० निर्वाणाय० शरणाय० सुहृदे० गुह्येशाय० गुणगंभीराय० गुणदोषनिवारणाय०
गुणसंगविहीनाय० योगारेर्दर्पनाशनाय० आनंदाय० परमानंदाय० स्वानंदसुखवर्धनाय० सत्यानंदाय० चिदानंदाय०
सर्वानंदपरायणाय० सद्रूपाय० सहजाय० सत्याय० स्वानंदाय० सुमनोहराय० सर्वाय० ३७५ सर्वांतराय० पूर्वात्पूर्वतराय०
खमयाय० खपराय० खादये० खंब्रह्मणे० खतनवे० खगाय० खवाससे० खविहीनाय० खनिधये० खपराश्रयाय० अनं
ताय० आदिरूपाय० सूर्यमंडलमध्यगाय० अमोघाय० परमामोघाय० परोक्षाय० परदाय० कवये० विश्वचक्षुषे० विश्वसा
क्षिणे० विश्ववाहवे० धनेश्वराय० धनंजयाय० ४०० महातेजसे० तेजिष्ठाय० तैजसाय० सुखिने० ज्योतिषे० ज्योतिर्म
याय० जेत्रे० ज्योतिषांज्योतिरात्मकाय० ज्योतिषामपिज्योतिषे० जनकाय० जनमोहनाय० जितेंद्रियाय० जितक्रोधाय०
जितात्मने० जितमानसाय० जितसंगाय० जितप्राणाय० जितसंसारवासनाय० निर्वासनाय० निरालंबाय० निर्योगक्षेम
वर्जिताय० निरीहाय० निरहंकाराय० निराशीर्निरुपाधिकाय० नित्यबोधाय० ४२५ विविक्तात्मने० विशुद्धोत्तमगौर
वाय० विद्यार्थिने० परमार्थिने० श्रद्धार्थिने० साधनात्मकाय० प्रत्याहारिणे० निराहारिणे० सर्वाहारपरायणाय० नित्य
शुद्धाय० निराकांक्षिणे० पारायणपरायणाय० अणोरणुतराय० सूक्ष्माय० स्थूलाय० स्थूलतराय० एकाय० अनेकरूपाय०
विश्वरूपाय० सनातनाय० नैकरूपाय० विरूपात्मने० नैकबोधमयाय० नैकनाममयाय० नैकविद्याविवर्धनाय० ४५०

एकाय० एकांतिकाय० नानाभावविवर्जिताय० एकाक्षराय० वीजाय० पूर्णविंबाय० सनातनाय० मंत्रवीर्याय० मंत्रवी
जाय० शास्त्रवीर्याय० जगत्पतये० नानावीर्यधराय० शक्रेशाय० पृथिवीपतये० प्राणेशाय० प्राणदाय० प्राणाय० प्राणा
यामपरायणाय० प्राणपंचकनिर्मुक्ताय० कोशपंचकवर्जिताय० निश्चलाय० निष्कलाय० असंगाय० निष्प्रपंचाय० निरा
मयाय० ४७५ निराधाराय० निराकाराय० निर्विकाराय० निरंजनाय० निष्प्रतीताय० निराभासाय० निरासक्ताय०
निराकुलाय० निष्ठासर्वगताय० निरारंभाय० निराश्रयाय० निरंतराय० सत्वगोप्त्रे० शांताय० दांताय० महामुनये०
निःशब्दाय० सुकृताय० स्वस्थाय० सत्यवादिने० सुरेश्वराय० ज्ञानदाय० ज्ञानविज्ञानिने० ज्ञानात्मने० आनंदपूरिताय०
५०० ज्ञानयज्ञविदांदक्षाय० ज्ञानाग्नये० ज्वलनाय० बुधाय० दयावते० भवरोगारये० चिकित्साचरमागतये० चंद्रमंड
लमध्यस्थाय० चंद्रकोटिसुशीतलाय० यंत्रकृते० परमाय० यंत्रिणे० यंत्रारूढपराजिताय० यंत्रविदे० यंत्रवासाय० यंत्रा
धाराय० धराधराय० तत्त्वज्ञाय० तत्त्वभूतात्मने० महत्तत्त्वप्रकाशनाय० तत्त्वसंख्यानयोगज्ञाय० सांख्यशास्त्रप्रवर्तकाय०
अनंतविक्रमाय० देवाय० माधवाय० ५२५ धनेश्वराय० साधवे० साधुवरिष्ठात्मने० सावधानाय० अमरोत्तमाय० निःसं
कल्पाय० निराधाराय० दुर्धराय० आत्मविदे० पतये० आरोग्यसुखदाय० प्रवराय० वासवाय० परेशाय० परमोदाराय०
प्रत्यक्चैतन्यदुर्गमाय० दुराधर्षाय० दुरावासाय० दूरत्वपरिनाशनाय० वेदविदे० वेदकृते० वेदाय० वेदात्मने० विमला
शयाय० विविक्तसेविने० ५५० संसारश्रमनाशनाय० ब्रह्मयोनये० बृहद्योनये० विश्वयोनये० विदेहवते० विशालाक्षाय०

विश्वनाथाय० हाटकांगदभूषणाय० अबाध्याय० जगदाराध्याय० जगदार्जवपालनाय० जनवते० धनवते० धर्मिणे० धर्मा
गाय० धर्मवर्धनाय० अमृताय० शाश्वताय० साध्याय० सिद्धिदाय० सुमनोहराय० खलुब्रह्मखलुस्थानाय० मुनीनांपर
मायैगतये० उपद्रष्टे० श्रेष्ठाय०५७५ शुचिर्भूताय० अनामयाय० वेदसिद्धांतवेद्याय० मानसाह्लादवर्धनाय० देहादन्याय०
गुणादन्याय० लोकादन्याय० विवेकविदे० दुष्टस्वप्नहराय० गुरवे० गुरुवरोत्तमाय० कर्मिणे० कर्मविनिर्मुक्ताय० संन्या
सिने० साधकेश्वराय०सर्वभावविहीनाय० तृष्णासंगनिवारकाय० त्यागिने० त्यागवपुषे० त्यागाय० त्यागदानविवर्जिताय०
त्यागकारणत्यागात्मने० सद्गुरवे० सुखदायकाय० दक्षाय० ६०० दक्षादिवंद्याय० ज्ञानवादप्रवर्तकाय० शब्दब्रह्ममया
त्मने० शब्दब्रह्मप्रकाशवते० ग्रसिष्णवे० प्रभविष्णवे० सहिष्णवे० विगतांतराय० विद्वत्तमाय० महावंद्याय० विशालोत्त
मवाङ्मुनये० ब्रह्मविदे० ब्रह्मभावाय० ब्रह्मर्षये० ब्राह्मणप्रियाय० ब्रह्मणे० ब्रह्मप्रकाशात्मने०ब्रह्मविद्याप्रकाशनाय०अत्रि
वंशप्रभूतात्मने० तापसोत्तमवंदिताय० आश्रमवासिने०विधेयात्मने० अत्रिवंशविवर्धनाय०प्रवर्तनाय०निवृत्तात्मने० ६२५
प्रलयोदकसंनिभाय० नारायणाय० महागर्भाय० भार्गवप्रियकृत्तमाय० संकल्पदुःखदलनाय० संसारतमनाशनाय०त्रिवि
क्रमाय० त्रिधाकाराय० त्रिमूर्तये० त्रिगुणात्मकाय० भेदत्रयहराय० तापत्रयनिवारकाय० दोषत्रयविभेदिने० संशयार्ण
वखंडनाय० असंशयाय० असंमूढाय० अवादिने० राजवंदिताय० राजयोगिने० महायोगिने० स्वभावगलिताय० पुण्य
श्लोकाय० पवित्रांघ्रये० ध्यानयोगपरायणाय० ध्यानस्थाय० ६५० ध्यानगम्याय० विधेयात्मने० पुरातनाय० अविज्ञे

याय० अंतरात्मने० मुख्यबिंबसनातनाय० जीवसंजीवनाय० जीवाय० चिद्विलासाय० चिदाश्रयाय० महेंद्राय० अमर
मान्याय० योगेंद्राय० योगवित्तमाय० योगधर्माय० योगाय० तत्त्वाय० तत्त्वविनिश्चयाय० नैकबाहवे० अनंतात्मने०
नैकनामपराक्रमाय० नैकाक्षिणे० नैकपादाय० नाथनाथाय० उत्तमोत्तमाय० ६७५ सहस्रशीर्ष्णे० पुरुषाय० सहस्राक्षाय०
सहस्रपदे० सहस्ररूपदृशे० सहस्रारमयोद्भवाय० त्रिपादपुरुषाय० त्रिपादूर्ध्वाय० त्र्यंबकाय० महावीर्याय० योगवीर्य
विशारदाय० विजयिने० विनयिने० जेत्रे० वीतरागिणे० विराजिताय० रुद्राय० रौद्राय० महाभीमाय० प्राज्ञमुख्याय०
सदाशुचये० अंतर्ज्योतिषे० अनंतात्मने० प्रत्यगात्मने० निरंतराय० ७०० अरूपाय० आत्मरूपाय० सर्वभावविनिर्वृताय०
अंतःशून्याय० बहिःशून्याय० शून्यात्मने० शून्यभावनाय० अंतःपूर्णाय० बहिःपूर्णाय० पूर्णात्मने० पूर्णभावनाय०
अंतस्त्यागिने० बहिस्त्यागिने० त्यागात्मने० सर्वयोगवते० अंतर्योगिने० बहिर्योगिने० सर्वयोगपरायणाय० अंतर्भोगिने०
बहिर्भोगिने० सर्वभोगविदुत्तमाय० अंतर्निष्ठाय० बहिर्निष्ठाय० सर्वनिष्ठामयाय० बाह्यांतरविमुक्ताय० ७२५ बाह्यांतर
विवर्जिताय० शांताय० शुद्धाय० विशुद्धाय० निर्वाणाय० प्रकृतेःपराय० अकालाय० कालनेमिने० कालकालाय०
जनेश्वराय० कालात्मने० कालकर्त्रे० कालज्ञाय० कालनाशनाय० कैवल्यपददात्रे० कैवल्यसुखदायकाय० कैवल्यकलना
धाराय० निर्भराय० हर्षवर्धनाय० हृदयस्थाय० हृषीकेशाय० गोविंदाय० गर्भवर्जिताय० सकलागमपूज्याय० निगमाय०
७५० निगमाश्रयाय० पराशक्तये० पराकीर्तये० परावृत्तये० निधिस्मृतये० परविद्यापराक्षांतये० विभक्तये० युक्तसद्व

तये॰ स्वप्रकाशाय॰ प्रकाशात्मने॰ परसंवेदनात्मकाय॰ स्वसेव्याय॰ स्वविदास्वात्मने॰ स्वसंवेद्याय॰ अनघाय॰ क्षमिणे॰
स्वानुसंधानशीलात्मने॰ स्वानुसंधानगोचराय॰ स्वानुसंधानशून्यात्मने॰ स्वानुसंधानाश्रयाय॰ स्वबोधदर्पणाय॰ अभं
गाय॰ कंदर्पकुलनाशनाय॰ ब्रह्मचारिणे॰ ब्रह्मवेत्रे॰ ७७५ ब्राह्मणाय॰ ब्रह्मवित्तमाय॰ तत्त्वबोधाय॰ सुधावर्षाय॰ पाव
नाय॰ पापपावकाय॰ ब्रह्मसूत्रविधेयात्मने॰ ब्रह्मसूत्रार्थनिर्णयाय॰ आत्यंतिकाय॰ महाकल्पाय॰ संकल्पावर्तनाशनाय॰
आधिव्याधिहराय॰ संशयार्णवशोपकाय॰ तत्त्वात्मज्ञानसंदेशाय॰ महानुभवभाविताय॰ आत्मानुभवसंपन्नाय॰ स्वानु
भावसुखाश्रयाय॰ अचिंत्याय॰ बृहद्भानवे॰ प्रमदोत्कर्षनाशनाय॰ अनिकेतप्रशांतात्मने॰ शून्यावासाय॰ जगद्वपुषे॰
चिद्गतये॰ चिन्मयाय॰ ८०० चक्रिणे॰ मायाचक्रप्रवर्तकाय॰ सर्ववर्णविदारंभिणे॰ सर्वारंभपरायणाय॰ पुराणाय॰ प्रव
राय॰ दात्रे॰ सुंदराय॰ कनकांगदिने॰ अनुसूयात्मजाय॰ दत्ताय॰ सर्वज्ञाय॰ सर्वकामदाय॰ कामजिते॰ कामपालाय॰
कामिने॰ कामप्रदागमाय॰ कामवते॰ कामपोपाय॰ सर्वकामनिवर्तकाय॰ सर्वकर्मफलोत्पत्तये॰ सर्वकामफलप्रदाय॰
सर्वकर्मफलैःपूज्याय॰ सर्वकर्मफलाश्रयाय॰ विश्वकर्मणे ८२५ कृतात्मने॰ कृतज्ञाय॰ सर्वसाक्षिकाय॰ सर्वारंभपरित्या
गिने॰ जडोन्मत्तपिशाचवते॰ भिक्षवे॰ भिक्षाकराय॰ भैक्षाहारिणे॰ निराश्रमिणे॰ अकूलाय॰ अनुकूलाय॰ विकलाय॰
अकलाय॰ जटिलाय॰ वनचारिणे॰ दंडिने॰ मुंडिने॰ गंडिने॰ देहधर्मविहीनात्मने॰ एकाकिने॰ संगवर्जिताय॰ आश्र
मिणे॰ अनाश्रमारंभाय॰ अनाचारिणे॰ कर्मवर्जिताय॰ ८५० असंदेहिने॰ संदेहिने॰ नकिंचिन्नचकिंचनाय॰ नृदेहिने॰

देहशून्याय० नाभाविने० भावनिर्गताय० नाब्रह्मणे० परब्रह्मणे० स्वयमेवनिराकुलाय० अनघाय० अगुरवे० नाथनाथोत्तमाय० गुरवे० द्विभुजाय० प्राकृताय० जनकाय० पितामहाय० अनात्मने० अनानात्मने० नीतये० नीतिमतांवराय० सहजाय० सद्दशाय० सिद्धाय० ८७५ एकाय० चिन्मात्राय० नकर्त्रे० कर्त्रे० भोक्त्रे० भोगविवर्जिताय० तुरीयाय० तुरीयातीताय० स्वच्छाय० सर्वमयाय० सर्वाधिष्ठानरूपाय० सर्वध्येयविवर्जिताय० सर्वलोकनिवासात्मने० सकलोत्तमवंदिताय० देहभृते० देहकृते० देहात्मने० देहभावनाय० देहिने० देहविभक्ताय० देहभावप्रकाशनाय० लयस्थाय० लयविदे० लयाभावाय० बोधवते० ९०० लयातीताय० लयस्यांताय० लयभावनिवारणाय० विमुखाय० प्रमुखाय० प्रत्यङ्मुखवदाचरते० विश्वभुजे० विश्वधृषे० विश्वाय० विश्वक्षेमकराय० अविक्षिप्ताय० अप्रमादिने० परर्धये० परमार्थदृशे० स्वानुभावविहीनाय० स्वानुभावप्रकाशनाय० निरिंद्रियाय० निर्बुद्धये० निराभासाय० निराकृताय० निरहंकाराय० रूपात्मने० निर्वपुषे० सकलाश्रयाय० शोकदुःखहराय० ९२५ भोगमोक्षफलप्रदाय० सुप्रसन्नाय० सूक्ष्माय० शब्दब्रह्मार्थसंग्रहाय० आगमापायशून्याय० स्थानदाय० सतांगतये० अकृताय० सुकृताय० कृतकर्मविनिर्वृताय० भेदत्रयहराय० देहत्रयविनिर्गताय० सर्वकाममयाय० सर्वकामनिवर्तकाय० सिद्धेश्वराय० अजराय० पंचबाणदर्पहुताशनाय० चतुरक्षरबीजात्मने० स्वभुवे० चित्कीर्तिभूषणाय० अगाधबुद्धये० अक्षुब्धाय० चंद्रसूर्याग्निलोचनाय० यमदंष्ट्राय० अतिसंहर्त्रे० ९५० परमानंदसागराय० लीलाविश्वंभराय० भानवे० भैरवाय० भीमलोचनाय० ब्रह्मचर्मांबराय० कालाय० अचलाय० चलनांत

काय० आदिदेवाय० जगद्योनये० वासवारिविमर्दनाय० विकर्मकर्मकर्मज्ञाय० अनन्यगमकाय० अगमाय० अवद्धकर्म शून्याय० कामरागकुलक्षयाय० योगांधकारमथनाय० पद्मजन्मादिवंदिताय० भक्तकामाय० अग्रजाय० चक्रिणे० भावनिर्भा वभावकाय० भेदांतकाय० महते० ९७५ अग्र्याय० निगूहाय० गोचरांतकाय० कालाग्निशमनाय० शंखचक्रपद्मगदाधराय० दीप्ताय० दीनपतये० शास्त्रे० स्वच्छंदाय० मुक्तिदायकाय० व्योमधर्मांवराय०भेत्रे० भस्मधारिणे० धराधराय० धर्मगुप्ताय० अन्वयात्मने० व्यतिरेकार्थनिर्णयाय० एकानेकगुणाभासाभासनिर्भासवर्जिताय० भावाभावस्वभावात्मने० भावाभावविभा वविदे० योगिहृदयविश्रामाय० अनंतविद्याविवर्धनाय० विघ्नांतकाय० त्रिकालज्ञाय० तत्त्वात्मज्ञानसागरायनमः १००० ॥

॥ १०३ ॥ रामाष्टोत्तरशतनामावलिः ॥ ॐकारःसर्वत्रादौनमःशब्दश्चांतेयोजनीयः ॥ ॐनारायणायनमः जगन्ना थाय० अभिरामाय० जगत्पतये० कवये० पुराणाय० वागीशाय० रामाय० दशरथात्मजाय० राजराजाय० रघुवराय० कौसल्यानंदवर्धनाय० भर्गाय० वरेण्याय० विश्वेशाय० रघुनाथाय० जगद्गुरवे० सत्याय० सत्यप्रियाय० श्रेष्ठाय० जान कीवल्लभाय० विभवे० सौमित्रिपूर्वजाय० शांताय० कामदाय० २५ कमलेक्षणाय० आदित्याय० रवये० ईशानाय० घृणये० सूर्याय० अनामयाय० आनंदरूपिणे० सौम्याय० राघवाय० करुणामयाय० जामदग्न्याय० तपोमूर्तये० रामाय० परशुधारिणे० वाक्पतये० वरदाय० वाच्याय० श्रीपतये० पक्षिवाहनाय० श्रीशार्ङ्गधारिणे० रामाय० चिन्मयानंदविग्र हाय० हलधृग्विष्णवे० ईशानाय० ५० वलरामाय० कृपानिधये० श्रीवल्लभाय० कृपानाथाय० जगन्मोहनाय० अच्युताय०

मत्स्यकूर्मवराहादिरूपधारिणे० अव्ययाय० वासुदेवाय० जगद्योनये० अनादिनिधनाय० हरये० गोविंदाय० गोपतये० विष्णवे० गोपीजनमनोहराय० गोगोपालपरिवाराय० गोपकन्यासमावृताय० विद्युत्पुंजप्रतीकाशाय० रामाय० कृष्णाय० जगन्मयाय० गोगोपिकासमाकीर्णाय० वेणुवादनतत्पराय० कामरूपाय० ७५ कलावंताय० कामिनीकामदाय० विभवे० मन्मथाय० मथुरानाथाय० माधवाय० मकरध्वजाय० श्रीधराय० श्रीकराय० श्रीशाय० श्रीनिवासाय० परात्पराय० भूतेशाय० भूपतये० भद्राय० विभूतये० भूमिभूषणाय० सर्वदुःखहराय० वीराय० दुष्टदानववैरिणे० श्रीनृसिंहाय० महाबाहवे० महते० दीप्ततेजसे० चिदानंदमयाय० १०० नित्याय० प्रणवाय० ज्योतीरूपिणे० आदित्यमंडलगताय० निश्चितार्थस्वरूपिणे० भक्तप्रियाय० पद्मनेत्राय० भक्तानामीप्सितप्रदायनमः ॥ १०८ ॥ इतिरामाष्टोत्तरशतनामावलिः ॥ ॥

॥ १०४ ॥ रामसहस्रनामावलिः ॥ ॐ कारःसर्वत्रादौनमःशब्दश्चांतेयोजनीयः ॥ ॐ अनादयेनमः अधिवासाय० अच्युताय० आधाराय० आत्मप्रचालकाय० आदये० आत्मभुजे० इच्छाचारिणे० इभवंधारिणे० इडानाडीश्वराय० इंद्रियेशाय० ईश्वराय० ईतिविनाशकाय० उमाप्रियाय० उदारज्ञाय० उमोत्साहाय० उत्साहाय० उत्कंठाय० उद्यमप्रियाय० ऊनसत्ववलप्रदाय० ऊधाब्धिदानकर्त्रे० ऋणदुःखविमोचकाय० ऋणमुक्तिकराय० एकपत्नये० एकवाणधृपे० २५ ऐंद्रजालिकाय० ऐश्वर्यभोक्रे० ऐश्वर्याय० ओपधिरसप्रदाय० औंड्रपुष्पाभिलापिणे० औत्तानपादिसुखप्रियाय० औदार्यगुणसंपन्नाय० औदराय० औपधाय० अंसिने० अंकूरपूरकाय० काकुत्स्थाय० कमलानाथाय० कोदंडिने० कामनाशनाय० कार्मु

किने० काननस्थाय० कौसल्यानंदवर्धनाय० कोदंडभंजनाय० काकध्वंसिने० कार्मुकभंजनाय० कामारिपूजकाय० कर्त्रे० कर्बूरकुलनाशनाय० कबंधारये० ५० क्रतुत्रात्रे० कौशिकाह्लादकारकाय० काकपक्षधराय० कृष्णाय० कृष्णोत्पलदलप्रभाय० कंजनेत्राय० कृपामूर्तये० कुंभकर्णविदारणाय० कपिमित्राय० कपित्रात्रे० कपिकालाय० कपीश्वराय० कृतसत्याय० कलाभोगिने० कलानाथमुखच्छवये० काननिने० कामिनीसंगिने० कुशतातायः० कुशासनाय० कैकेयीयशःसंहर्त्रे० कृपासिंधवे० कृपामयाय० कुमाराय० कुकुरत्रात्रे० करुणामयविग्रहाय० ७५ कारुण्याय० कुमुदानंदाय० कौसल्यागर्भसेवनाय० कंदर्पनिंदितांगाय० कोटिचंद्रनिभाननाय० कमलापूजिताय० कामाय० कमलापरिसेविताय० कौसल्येयाय० कृपाधात्रे० कल्पद्रुमनिषेविताय० खड्गहस्ताय० खरध्वंसिने० खरसैन्यविदारणाय० खरपुत्रप्राणहर्त्रे० खंडितासुरजीवनाय० खलांतकाय० खस्थवराय० खंडितेशधनुषे० खेदिने० खेदहराय० खेददायकाय० खेदवारणाय० खेदघ्ने० खरघ्ने० १०० खड्गीक्षिप्रप्रसाददायकाय० खेलत्खंजननेत्राय० खेलत्सरसिजाननाय० खगचंचुसुनासाय० खंजनेशसुलोचनाय० खंजरीटपतये० खंजरीटविचंचलाय० गुणाकराय० गुणानंदाय० गंजितेशधनुषे० गुणसिंधवे० गयावासिने० गयाक्षेत्रप्रकाशकाय० गुहमित्राय गुहत्रात्रे० गुहपूज्याय० गुहेश्वराय० गुरुगौरवकर्त्रे० गुरुगौरवरक्षकाय० गुणिने० गुणप्रियाय० गीताय० गर्गाश्रमनिषेवकाय० गवेशाय० गवयत्रात्रे० १२५ गवाक्षामोददायकाय० गंधमादनपूज्याय० गंधमादनसेविताय० गौरभार्याय० गुरुत्रात्रे० गुरुयज्ञाधिपालकाय० गोदावरीतीरवासिने० गंगास्नायिने० गणाधिपाय० गरुत्मतरथिने० गुर्विणे० गुणात्मने०

गुणेश्वराय॰ गरुडिने॰ गंडकीवासिने॰ गंडकीतीरचारणाय॰ गर्भवासनियंत्रे॰ गुरुसेवापरायणाय॰ गीष्पतिस्तूयमानाय॰ गीर्वाणत्राणकारकाय॰ गौरीशपूजकाय॰ गौरीहृदयानंदवर्धनाय॰ गीतप्रियाय॰ गीतरताय॰ गीर्वाणवंदिताय॰ १५० घनश्यामाय॰ घनानंदाय॰ घोरराक्षसघातकाय॰ घनविघ्नविनाशाय॰ घननादविनाशकाय॰ घनानंदाय॰ घनानादिने॰ घनगर्जिनिवारणाय॰ घोरकाननवासिने॰ घोरशस्त्रविनाशकाय॰ घोरवाणधराय॰ घोराय॰ घोरधन्वने॰ घोरपराक्रमाय॰ घर्मबिंदुमुखश्रीमते॰ घर्मबिंदुविभूषिताय॰ घोरमारीचहंत्रे॰ घोरवीरविघातकाय॰ चंद्रवक्राय॰ चंचलाक्षाय॰ चंद्रमूर्तये॰ चतुष्कलाय॰ चंद्रकांतये॰ चकोराक्षाय॰ चकोरीनयनप्रियाय॰ १७५ चंडवाणाय॰ चंडधन्वने॰ चकोरीप्रियदर्शनाय॰ चतुराय॰ चातुरीयुक्ताय॰ चातुरीचित्तचारकाय॰ चलत्खड्गाय॰ चलद्बाणाय॰ चतुरंगबलान्विताय॰ चारुनेत्राय॰ चारुवक्राय॰ चारुहासाय॰ चारुप्रियाय॰ चिंतामणिविभूषांगाय॰ चिंतामणिमनोरथिने॰ चिंतामणिमणिप्रियाय॰ चित्तहर्त्रे॰ चित्तरूपिणे॰ चलच्चित्ताय॰ चितांचिताय॰ चराचरभयत्रात्रे॰ चराचरमनोहराय॰ चतुर्वेदमयाय॰ चिंत्याय॰ २०० चिंतासागरवारणाय॰ चंडकोदंडधारिणे॰ चंडकोदंडखंडनाय॰ चंडप्रतापयुक्ताय॰ चंडेषवे॰ चंडविक्रमाय॰ चतुर्विक्रमयुक्ताय॰ चतुरंगबलापहाय॰ चतुराननपूज्याय॰ चतुःसागरशासित्रे॰ चमूनाथाय॰ चमूभर्त्रे॰ चमूपूज्याय॰ चमूयुताय॰ चमूहर्त्रे॰ चमूभंजिने॰ चमूतेजोविनाशकाय॰ चामरिणे॰ चारुचरणाय॰ चरणारुणशोभनाय॰ चर्मिणे॰ चर्मप्रियाय॰ चारुमृगचर्मविभूषिताय॰ चिद्रूपिणे॰ चिदानंदाय॰ २२५ चित्स्वरूपिणे॰ चराचराय॰ छत्ररू

पिणे० छत्रसंगिने० छात्रगणविभूषिताय० छात्राय० छत्रप्रियाय० छत्रिणे० छत्रमोहार्तपालकाय० छत्रचामरयुक्ताय० छत्रचामरमंडिताय० छत्रचामरहर्त्रे० छत्रचामरदायकाय० छत्रधारिणे० छत्रहर्त्रे० छत्रत्यागिने० छत्रदाय० छत्ररूपिणे० छलत्यागिने० छलात्मने० छलविग्रहाय० छिद्रहर्त्रे० छिद्ररूपिणे० छिद्रौघविनिषूदनाय० छिन्नशत्रवे० २५० छिन्नरोगाय० छिन्नधन्वने० छलापहाय० छिन्नच्छत्रप्रदाय० छेदकारिणे० छलापघ्ने० जानकीशाय० जितामित्राय० जानकीहृदयप्रियाय० जानकीपालकाय० जेत्रे० जितशत्रवे० जितासुराय० जानक्युद्धारकाय० जिष्णवे० जितसिंधवे० जयप्रदाय० जानकीजीवनानंदाय० जानकीप्राणवल्लभाय० जानकीप्राणभर्त्रे० जानकीदृष्टिमोहनाय० जानकीचित्तहर्त्रे० जानकीदुःखभंजनाय० जयदाय० जयकर्त्रे० २७५ जगदीशाय० जनार्दनाय० जनप्रियाय० जनानंदाय० जनपालाय० जनोत्सुकाय० जितेंद्रियाय० जितक्रोधाय० जीवेशाय० जीवनप्रियाय० जटायुमोक्षदाय० जीवत्रात्रे० जीवनदायकाय० जयंतारये० जानकीशाय० जनकोत्सवदायकाय० जगत्त्रात्रे० जगत्पात्रे० जगत्कर्त्रे० जगत्पतये० जाड्यघ्ने० जाड्यहर्त्रे० जाड्येंधनहुताशनाय० जगन्मूर्तये० जगत्कर्त्रे० ३०० जगतांपापनाशनाय० जगच्चिंत्याय० जगद्वंद्याय० जगज्जेत्रे० जगत्प्रभवे० जनकारिविहर्त्रे० जगज्जाड्यविनाशकाय० जटिने० जटिलरूपाय० जटाधारिणे० जटावहाय० झर्झरप्रियवाद्याय० झंझावातनिवारकाय० झंझारवस्वनाय० झांताय० झार्णाय० झार्णवभूषिताय० टंकारये० टंकदात्रे० टीकादृष्टिस्वरूपधृपे० ठकारवर्णनियमाय० डमरुध्वनिकारकाय० ढक्कावाद्यप्रियाय० ढार्णाय० ढक्कावाद्यमहोत्सुकाय० ३२५ तीर्थसेविने० तीर्थ

वासिने० तरवे० तीर्थतीरनिवासकाय० तालभेत्रे० तालघातिने० तपोनिष्ठाय० तपःप्रभवे० तापसाश्रमसेविने० तपोधन
समाश्रयाय० तपोवनस्थिताय० तपसे० तापसपूजिताय० तन्वीभार्याय० तनूकर्त्रे० त्रैलोक्यवशकारकाय० त्रिलोकीशाय०
त्रिगुणकाय० त्रिगुण्याय० त्रिदिवेश्वराय० त्रिदिवेशाय० त्रिसर्गेशाय० त्रिमूर्तये० त्रिगुणात्मकाय० तंत्ररूपाय० ३५०
तंत्रविज्ञाय० तंत्रविज्ञानदायकाय० तारेशवदनोद्योतिने० तारेशमुखमंडलाय० त्रिविक्रमाय० त्रिपादूर्ध्वाय० त्रिस्वराय०
त्रिप्रवाहकाय० त्रिपुरारिकृतभक्तये० त्रिपुरारिप्रपूजिताय० त्रिपुरेशाय० त्रिसर्गाय० त्रिविधाय० त्रितनवे० तूणिने०
तूणीरयुक्ताय० तूणबाणधराय० ताटकावधकर्त्रे० ताटकाप्राणघातकाय० ताटकाभयकर्त्रे० ताटकादर्पनाशकाय० थकार
वर्णनियमाय० थकारप्रियदर्शनाय० दीनबंधवे० दयासिंधवे० ३७५ दारिद्र्यापद्विनाशकाय० दयामयाय० दयामूर्तये०
दयासागराय० दिव्यमूर्तये० दीर्घबाहवे० दीर्घनेत्राय० दुरासदाय० दुराधर्षाय० दुराराध्याय० दुर्मदाय० दुर्गनाशनाय०
दैत्यारये० दनुजेंद्रारये० दानवेंद्रविनाशनाय० दूर्वादलश्याममूर्तये० दूर्वादलघनच्छवये० दूरदर्शिने० दीर्घदर्शिने० दुष्टा
रिवलहारकाय० दशग्रीववधाकांक्षिणे० दशकंधरनाशकाय० दूर्वादलश्यामकांतये० दूर्वादलसमप्रभाय० दात्रे० ४००
दानपराय० दिव्याय० दिव्यसिंहासनस्थिताय० दिव्यदोलासमासीनाय० दिव्यचामरमंडिताय० दिव्यच्छत्रसमायुक्ताय०
दिव्यालंकारमंडिताय० दिव्यांगनाप्रमोदाय० दिलीपान्वयसंभवाय० दूषणारये० दिव्यरूपधिणे० देवाय० दशरथात्मजाय०
दिव्यदाय० दधिभुजे० दात्रे० दुःखसागरभंजनाय० दंडिने० दंडधराय० दांताय० दंतुराय० दनुजापहाय० धैर्याय०

धीराय० धरानाथाय० ४२५ धनेशाय० धरणीपतये० धन्विने० धनुष्मते० धेनुष्काय० धनुर्भंक्रे० धनाधिपाय० धार्मिकाय० धर्मशीलाय० धर्मिष्ठाय० धर्मपालकाय० धर्मपात्रे० धर्मयुक्ताय० धर्मनिंदकवर्जकाय० धर्मात्मने० धरणीत्यागिने० धर्मयूपाय० धनार्थदाय० धर्मारण्यकृतावासाय० धर्मारण्यनिषेवकाय० धरोद्धर्त्रे० धरावासिने० धैर्यव्रते० धरणीधराय० नारायणाय० ४५० नराय० नेत्रे० नंदिकेश्वरपूजिताय० नायकाय० नृपतये० नेत्रे० नेयाय० नटाय० नरपतये० नरेशाय० नगरत्यागिने० नंदिग्रामकृताश्रयाय० नवीनेंदुकलाकांतये० नौपतये० नृपतेःपतये० नीलेशाय० नीलसंतापिने० नीलदेहाय० नलेश्वराय० नीलांगाय० नीलमेघाभाय० नीलांजनसमद्युतये० नीलोत्पलदलप्रख्याय० नीलोत्पलदलेक्षणाय० नवीनकेतकीकुंदाय० ४७५ मालावृंदविराजिताय० नारीशाय० नागरीप्राणाय० नीलवाहवे० नदिने० नदाय० निद्रात्यागिने० निद्रिताय० निद्रालवे० नदत्रंधकाय० नादाय० नादस्वरूपाय० नादात्मने० नादमंडिताय० पूर्णानंदाय० परब्रह्मणे० परंतेजसे० परात्पराय० परंधाम्ने० परंमूर्तये० परहंसाय० परावराय० पूर्णाय० पूर्णोदराय० पूर्वाय० ५०० पूर्णारिविनिपूदनाय० प्रकाशाय० प्रकटाय० प्राप्याय० पद्मनेत्राय० परात्पराय० पूर्णब्रह्मणे० पूर्णमूर्तये० पूर्णतेजसे० परंवपुषे० पद्मबाहवे० पद्मवक्त्राय० पंचाननप्रपूजिताय० प्रपंचाय० पंचपूताय० पंचाम्नायाय० परप्रभवे० पराय० पद्मेशाय० पद्मकोशाय० पद्माक्षाय० पद्मलोचनाय० पद्मापतये० पुराणाय० पुराणपुरुषाय० ५२५ प्रभवे० पयोधिशयनाय० पालाय० पालकाय० पृथिवीपतये० पवनात्मजवंद्याय० पवनात्मजसेविताय० पंचप्राणाय० पंचवायवे० पंचांगाय० पंच

सायकाय० पंचवाणाय० पूरकाय० प्रपंचनाशकाय० प्रियाय० पातालाय० प्रमथाय० प्रौढाय० पाशिने० प्रार्थ्याय० प्रियंवदाय० प्रियंकराय० पंडितात्मने० पापघ्ने० पापनाशनाय० ५५० पांड्येशाय० पूर्णशीलाय० पद्मिने० पद्मसमर्चिताय० फणीशाय० फणिशायिने० फणिपूज्याय० फणान्विताय० फलमूलप्रभोक्त्रे० फलदात्रे० फलेश्वराय० फणिरूपाय० फणिभर्त्रे० फणिभुग्वाहनाय० फल्गुतीर्थसदास्नायिने० फल्गुतीर्थप्रकाशकाय० फलाशिने० फलदाय० फुल्लाय० फलकाय० फलभक्षकाय० बुधाय० बौद्धप्रियाय० बुद्धाय० बुद्धाचारनिवारकाय० ५७५ वहुदाय० वलदाय० ब्रह्मणे० ब्रह्मण्याय० ब्रह्मदायकाय० भरतेशाय० भारतीशाय० भरद्वाजप्रपूजिताय० भर्त्रे० भगवते० भोक्त्रे० भीतिघ्ने० भयनाशनाय० भवाय० भीतिहराय० भव्याय० भूपतये० भूपवंदिताय० भूपालाय० भवनाय० भोगिने० भावनाय० भुवनप्रियाय० भारावताराय० भारहर्त्रे० ६०० भारभृते० भरताग्रजाय० भूभुजे० भुवनभर्त्रे भूनाथाय० भूतिसुंदराय० भेद्याय० भेदकराय० भेत्रे० भूतासुरविनाशनाय० भूमिदाय० भूमिहर्त्रे० भूमिदात्रे० भूमिपाय० भूतेशाय० भूतनाशाय० भूतेशपरिपूजिताय० भूधराय० भूधराधीशाय० भूधरात्मने० भयापहाय० भयदाय० भयदात्रे० भयहर्त्रे० भयावहाय० ६२५ भक्षाय० भक्ष्याय० भवानंदाय० भवमूर्तये० भवोदयाय० भवाब्धये० भारतीनाथाय० भरताय० भूमये० भूधराय० मारीचारये० मरुत्रात्रे० माधवाय० मधुसूदनाय० मंदोदरीस्तूयमानाय० मधुगद्गदभाषणाय० मंदाय० मंदरारये० मंत्रिणे० मंगलाय० मतिदायकाय० मायिने० मारीचहंत्रे० मदनाय० मातृपालकाय० ६५० महामायाय० महाकायाय० महाते

जसे० महाबलाय० महाबुद्धये० महाशक्तये० महादर्पाय० महायशसे० महात्मने० माननीयाय० मूर्ताय० मरकतच्छ
वये० मुरारये० मकराक्षारये० मत्तमातंगविक्रमाय० मधुकैटभहंत्रे० मातंगवनसेविताय० मदनारिप्रभवे० मत्ताय० मार्त
डवंशभूषणाय० मदाय० मदविनाशिने० मर्दनाय० मुनिपूजकाय० मुक्तिदाय० ६७५ मरकताभाय० महिम्ने० मनना
श्रयाय० मर्मज्ञाय० मर्मघातिने० मंदारकुसुमप्रियाय० मंदरस्थाय० मुहूर्तात्मने० मंगलाय० मंगलालकाय० मिहिराय०
मंडलेशाय० मन्यवे० मन्याय० महोदधये० मारुताय० मारुतेयाय० मारुतीशाय० मरुते० यशस्याय० यशोराशये०
यादवाय० यदुनंदनाय० यशोदाहृदयानंदाय० यशोदात्रे० ७०० यशोहराय० युद्धतेजसे० युद्धकर्त्रे० योधाय० युद्ध
स्वरूपकाय० योगाय० योगीश्वराय० योगिने० योगेंद्राय० योगपावनाय० योगात्मने० योगकर्त्रे० योगभृते० योगदाय
काय० योधाय० योधगणासंगिने० योगकृते० योगभूषणाय० यूने० युवतीभर्त्रे० युवभ्रात्रे० युवाजकाय० रामभद्राय०
रामचंद्राय० राघवाय० ७२५ रघुनंदनाय० रामाय० रावणहंत्रे० रावणारये० रमापतये० रजनीचरहंत्रे० राक्षसीप्राण
हारकाय० रक्ताक्षाय० रक्तपद्माक्षाय० रमणाय० राक्षसांतकाय० राघवेंद्राय० रमाभर्त्रे० रमेशाय० रक्तलोचनाय० रण
रामाय० रणासक्ताय० रणाय० रक्ताय० रणात्मकाय० रंगस्थाय० रंगभूमिस्थाय० रंगशायिने० रणार्गलाय० रेवास्ना
यिने० ६५० रमानाथाय० रणदर्पविनाशनाय० राजराजेश्वराय० राज्ञे० राजमंडलमंडिताय० राज्यदाय० राज्यहर्त्रे०
रमणीप्राणवल्लभाय० राज्यत्यागिने० राज्यभोगिने० रसिकाय० रघूद्वहाय० राजेंद्राय० रघुनाथाय० रक्षोघ्ने० रावणां

तकाय० लक्ष्मीकांताय० लक्ष्मीनाथाय० लक्ष्मीशाय० लक्ष्मणाग्रजाय० लक्ष्मणत्राणकर्त्रे० लक्ष्मणप्रतिपालकाय० लीलावताराय० लंकारये० लंकेशाय० ७७५ लक्ष्मणेश्वराय० लक्ष्मणप्राणदाय० लक्ष्मणप्रतिपालकाय० लंकेशघातकाय० लंकेशप्राणहारकाय० लंकानाथवीर्यहर्त्रे० लाक्षारसविलोचनाय० लवंगकुसुमासक्ताय० लवंगकुसुमप्रियाय० ललनापालनाय० लक्षाय० लिंगरूपिणे० लसत्तनवे० लावण्यरामाय० लावण्याय० लक्ष्मीनारायणात्मकाय० लवणांबुधिबंधाय० लवणांबुधिसेतुकृते० लीलामयाय० लवणजिते० लीलाय० लवणजित्प्रियाय० वसुधापालकाय० विष्णवे० विदुषे० ८०० विद्वज्जनप्रियाय० वसुधेशाय० वासुकीशाय० वरिष्ठाय० वरवाहनाय० वेदाय० विशिष्टाय० वक्रे० वदान्याय० वरदाय० विभवे० विधये० विधात्रे० वासिष्ठाय० वसिष्ठाय० वसुपालकाय० वसवे० वसुमतीभर्त्रे० वसुमते० वसुदायकाय० वार्ताधारिणे० वनस्थाय० वनवासिने० वनाश्रयाय० विश्वभर्त्रे० ८२५ विश्वपात्रे० विश्वनाथाय० विभावसवे० विभवे० विभज्यमानाय० विभक्ताय० वधबंधनाय० विविक्ताय० वरदाय० वंद्याय० विरक्ताय० वीरदर्पघ्ने० वीराय० वीरगुरवे० वीरदर्पध्वंसिने० विशांपतये० वानरारये० वानरात्मने० वीराय० वानरपालकाय० वाहनाय० वाहनस्थाय० वनाशिने० विश्वकारकाय० वरेण्याय० ८५० वरदात्रे० वरदाय० वरवंचकाय० वसुदाय० वासुदेवाय० वसवे० वंदनाय० विद्याधराय० विद्याविंध्याय० विंध्याचलाशनाय० विद्याप्रियाय० विशिष्टात्मने० वाद्यभांडप्रियाय० वंद्याय० वसुदेवाय० वसुप्रियाय० वसुप्रदाय० श्रीदाय० श्रीशाय० श्रीनिवासाय० श्रीपतये० शरणाश्रयाय० श्रीधराय० श्रीकराय० श्रीलाय०

८७५ शरण्याय० शरणात्मकाय० शिवार्चिताय० शिवप्राणाय० शिवदाय० शिवपूजकाय० शिवकर्त्रे० शिवहर्त्रे० शिवा
त्मने० शिववांछकाय० सायकिने० शंकरात्मने० शंकरार्चनतत्पराय० शंकरेशाय० शिशवे० शौरये० शाब्दिकाय० शब्दरू
पकाय० शब्दभेदिने० शब्दहर्त्रे० शायकाय० शरणार्तिघ्ने० शर्वाय० शर्वप्रभवे० शूलिने० ९०० शूलपाणिप्रपूजिताय
शार्ङ्गिणे० शंकरात्मने० शिवाय० शकटभंजनाय० शांताय० शांतये० शांतिदात्रे० शांतिकृते० शांतिकारकाय० शांति
काय० शंखधारिणे० शंखिने० शंखध्वनिप्रियाय० षट्चक्रभेदनकराय० षड्गुणाय० षडूर्मिकाय० षडिंद्रियाय० षडंगा
य० षोडशाय० षोडशात्मकाय० स्फुरत्कुंडलहाराढ्याय० स्फुरन्मरकतच्छवये० सदानंदाय० सतीभर्त्रे० ९२५ सर्वे
शाय० सज्जनप्रियाय० सर्वात्मने० सर्वकर्त्रे० सर्वपात्रे० सनातनाय० सिद्धाय० साध्याय० साधकेंद्राय० साधकाय० साध
कप्रियाय० सिद्धेशाय० सिद्धिदाय० साधवे० सत्कर्त्रे० सदीश्वराय० सद्गतये० सच्चिदानंदाय० सद्ब्रह्मणे० सकलात्म
काय० सतीप्रियाय० सतीभार्याय० स्वाध्यायाय० सतीपतये० सत्कवये० ९५० सकलत्रात्रे० सर्वपापप्रमोचकाय० सर्वशास्त्र
मयाय० सर्वाम्नायनमस्कृताय० सर्वदेवमयाय० सर्वयज्ञस्वरूपकाय० सर्वाय० संकटहर्त्रे० साहसिने० सगुणात्मकाय०
सुस्निग्धाय० सुखदात्रे० सत्वाय० सत्वगुणाश्रयाय० सत्याय० सत्यव्रताय० सत्यवते० सत्यपालकाय० सत्यात्मने० सुभ
गाय० सौभाग्याय० सगरान्वयाय० सीतापतये० ससीताय० सात्वताय० ९७५ सात्वतांपतये० हरये० हलिने० हलाय०
हरकोदंडखंडनाय० हुंकारध्वनिपूरणाय० हुंकारध्वनिसंभवाय० हर्त्रे० हरये० हरात्मने० हारभूषणभूषिताय० हरकार्मुक

त्तमं ॥ स्वर्णकुंभेनदेवेशिस्नानार्थंप्रति० ॥ स्नानं ॥ पयोदधिघृतंदेविमधुशर्करयायुतं॥पंचामृतंमयानीतंस्नानार्थंप्रतिगृ० ॥ पंचामृतं ॥ गंधोदकं ॥ गंधादिपूर्वपूजांतेमहाभिषेकः ॥ श्वेतवस्त्रसमायुक्तंक्षौमंकंचुकसंयुतं ॥ गृह्यतांचसुरश्रेष्ठेज्येष्ठेदेविनमो नमः ॥ वस्त्रं कंचुकंच ॥ मलयाचलसं० चंदनं ॥ अलंकारार्थे अक्षतान् ॥ सौभाग्यद्रव्याणि ॥ केतकीपाटलीजातिमल्लिकाचंप कानिच ॥ पद्मादीनिसुगंधीनिपुष्पाणिप्रतिगृह्यतां ॥ पुष्पाणि ॥ वनस्पति० धूपं ॥ साज्यंचवर्ति० दीपं ॥ भक्त्यामयाप्रयत्नेन यदन्नंदीयतेतव॥तद्गृहाणसुरेशानिज्येष्ठेश्रेष्ठेनमोनमः॥ पूरिकादिनैवेद्यं ॥ इदंफलं० फलं ॥ पूगीफलं० तांबूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ चंद्रादित्यौ० नीराजनं ॥ यानिकानि० प्रदक्षिणां ॥ ज्येष्ठायैते० ॥ विप्रप्रियेमहामायेसुरासुरसुपूजिते ॥ स्थूलसूक्ष्म मयेदेविज्येष्ठेत्वामर्चयाम्यहं ॥ नमस्कारं॥ शार्ङ्गबाणाब्जखङ्गारिप्रासतोमरमुद्गरैः ॥ अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं ॥ पुष्पांजलिं ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि ॥ प्रसीदत्वंमहामायेगृहाणार्घ्यंसरस्वति ॥ विशेषार्घ्यं ॥ त्वंलक्ष्मीस्त्वमु मादेवीत्वंज्येष्ठेसर्वदामरैः ॥ पूजितासिमयादेविवरदाभवमेसदा ॥ प्रार्थनं ॥ ततोविप्रेभ्योऽपूपान्दत्वास्वयंहविष्याशनपूर्वकं ब्रह्मचर्यंकुर्यात्॥ तृतीयदिनेतुज्येष्ठादेव्याविसर्जनंकर्तुंतदंगत्वेनपंचोपचारैःपूजनं ॥ पूजांतेप्रार्थ्य ॥ ज्येष्ठेदेविसमुत्तिष्ठस्वस्था नंगच्छपूजिता ॥ ममाभीष्टप्रदानार्थंपुनरागमहेतवे ॥ इतिविसृज्यनद्यादौक्षिपेत् ॥ इतिज्येष्ठागौरीपूजा ॥ ॥ ७ ॥

॥४५॥ अदुःखनवमीपूजा ॥ व्रतदिनेप्रातर्नद्यादौस्नात्वानित्यविधिंसमाप्यमौनीगृहमेत्याचमनादिदेशकालकथनांते म मश्रीगौरीप्रीतिद्वारानिखिलदुःखोपशमपूर्वकंपुत्रपौत्रचिरजीवनसुखसौभाग्यादिकल्पोक्तफलसिध्यर्थं अदुःखनवमीव्रतांगपू

॥ ४२ ॥

जनंक०॥गणेशपूजादिसंभारप्रोक्षणांतेगोमयोपलिप्तेशुद्धेदेशेमंडपिकांविधायरंगद्रव्येणभित्तिमालिप्यधूपयित्वा तत्रस्थापित
कलशोपरिपूर्णपात्रेगौरींपूजयेत्॥ दिव्यपात्रधरांदेवींविभूतिंचत्रिलोचनां॥ दुग्धान्नदाननिरतांगौरींत्वांचिंतयाम्यहं॥ ध्यानं॥
गौरींदुःखहरांदेवींशिवस्याधांगसंगिनीं॥सुनीलवस्त्रसंयुक्तांभक्त्यात्वावाहयाम्यहं॥ आवाहनं॥ प्रसन्नवदनेमातर्नित्यंदेवार्षिसं
स्तुते॥ मयाभावेनतेदत्तमासनंप्रतिगृह्यतां॥ आसनं॥ सर्वतीर्थाहृतंशुद्धंसर्वभूतोपजीवनं॥ मयादत्तंतुपानीयंपाद्यार्थंप्रतिगृ
ह्यतां॥ पाद्यं॥ गंगादिपुण्यतीर्थेभ्योमयानीतंसुनिर्मलं॥ गंधपुष्पाक्षतोपेतंगृहाणार्घ्यंसुरेश्वरि॥ अर्घ्यं॥ कर्पूरागुरुसंमिश्रंनि
र्मलंशिशिरंजलं॥ एलोशीरयुतंदेविगृहाणाचमनीयकं॥ आचमनं॥ प्रभासाद्यानितीर्थानिगंगाद्याश्चसरिद्वराः॥ प्राद्यानीतं
जलंदेविस्नानार्थंप्रतिगृह्यतां॥ स्नानं॥ पंचामृतंमहादेविपयोदधिघृतंमधु॥ शर्करासहितंभक्त्यादत्तंदेविगृहाणमे॥ पंचामृतं
गंधोदकं शुद्धोदकंच॥ पूर्वपूजांतेमहाभिषेकः॥ सर्वभूषाधिके० ॥ वस्त्रं कंचुकंच॥ श्रीखंडं०॥ चंदनं॥ अक्षतान्॥ सौभा
ग्यद्रव्यं॥ भूषणानि॥ माल्यादीनि० पुष्पाणि॥ अथांगपूजा॥ गौर्यैनमः पादौपूजयामि॥ धात्र्यै० जानुनी०॥ शिवायै०
ऊरू०॥ भद्रायै० कटी०॥ उमायै० स्तनौ०॥ दुर्गायै० कंठं०॥ काल्यै० बाहू०॥ अंबिकायै० मुखं०॥ भवान्यै०नेत्रे०॥
रुद्राण्यै० शिरः०॥ शर्वाण्यै० सर्वांगंपू०॥ वनस्पति० धूपं॥ साज्यंच० दीपं॥ शर्कराखंड० नैवेद्यं०॥ इदंफलं० फलं॥
पूगीफलं० तांबूलं॥ हिरण्यगर्भ०दक्षिणां॥ चंद्रादित्यौ०नीराजनं॥ यानिकानि० प्रदक्षिणां॥ नमोदेव्यै० नमस्कारं॥ जयं
तीमंगला०पुष्पांजलिं॥ आवाहनंन० प्रार्थनं॥ ततोविप्रंसंपूज्यतस्मैपक्वान्नफलयुतंवायनं उपायनमिदंतुभ्यमितिदत्वाकथां

श्रुत्वागौरींध्यायन्नुपवसेत् ॥ अशक्तौत्वहिंसितकेवलगलितफलाहारं पयःपानं हविष्याशनंवाकुर्यात् ॥ रात्रिंनृत्यगीतादिनानी त्वाप्रातर्नित्यकर्मांतेदेवींसंपूज्यसपत्नीकान्विप्रान्संभोज्य ॥ स्कंदमातर्नमस्तुभ्यंदुःखव्याधिविनाशिनि ॥ उत्तिष्ठयाहिभवनंवर दाभवपार्वति ॥ इतिदेवींविसृज्याचार्यायदक्षिणांदद्यात् ॥ इतिअदुःखनवमी ॥ ॥ छ ॥ ॥ छ ॥

॥ ४६ ॥ वामनद्वादशीपूजा ॥ कर्ताप्रातर्नद्यादौगत्वाकरिष्यमाणवामनजयंतीव्रतांगत्वेनसंगमस्नानंकरिष्ये ( आयुर्ब लं० मुखदौर्गंध्य० ) इत्यादि यथाचारंदंतधावनंकृत्वा॥संगमस्तीर्थराजोसिसंगमःसरितांपतिः ॥ स्नानार्थंत्वांप्रपन्नोस्मिप्रसा दंकुरुसंगम ॥ संगमप्रार्थनं ॥ यावैश्रवणसंयुक्ताद्वादशीपरमातिथिः ॥ तस्यांतुसंगमेस्नास्येसर्वपापविमुक्तये ॥ वरोवरेण्योवर दोवराहोधरणीधरः॥अपवित्रंपवित्रंमांकरोतुभगवान्हरिः ॥ इतिस्नात्वा ॥ करकंपूरयिष्यामिसरितांसंगमेजलैः ॥ पंचरत्नस मायुक्तंतेनतुष्यतुवामनः ॥ करकपूरणं ॥ पर्जन्योवरुणःसूर्यःसलिलंकेशवःशिवः ॥ त्वष्टायमोवैश्रवणःपापंहरतुमेसदा ॥ शि क्यस्थापनं ॥ अन्नंप्रजापतिर्विष्णुरुद्रेंद्रशशिभास्कराः ॥ अग्निर्वायुर्यमस्त्वष्टापापंहरतुमेसदा ॥ शिक्येदधिभक्तस्थापनं ॥ सं भारानादायमध्याह्नात्परंपूजनं ॥ ॥ आचम्यदेशकालौस्मृत्वाममश्रीवामनप्रीतिद्वारासकलपापक्षयपूर्वकंरूपसौभाग्यमहैश्व र्यसुखसमृद्धिपित्रृणविमुक्त्युभयकुलोद्धरणविष्णुसालोक्यादिकल्पोक्तफलसिद्ध्यर्थवामनजयंतीव्रतंकरिष्ये ॥ तदंगत्वेनयथाश क्तिपूजनंचक० ॥ गणेशपूजादिसंभारप्रोक्षणांतेपीठादौकुंभंसंस्थाप्यतदुपरिस्वर्णरजतदारुवंशान्यतमनिर्मितेआढकमितैस्तिलै र्यवैर्गोधूमैर्वापूरितेऽहतवस्त्रकृष्णाजिनवेष्टितेपूर्णपात्रेहैमप्रतिमायांवामनंशक्तितःपार्श्वस्थितदंडकमंडलुछत्रपादुकाक्षमालाद्यु

परस्करयुतंपूजयेत्॥शांताकारंभुजग०॥अजिनदंडकमंडलुमेखलारुचिरपावनवामनमूर्तये ॥ मितजगत्रितयायजितारयेनिगम
वाक्पटवेबटवेनमः ॥ ध्यानं ॥ सहस्रशीर्षा०॥ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितः ॥ मायावीवामनःश्रीशःसोऽत्रायातुजगत्प
तिः ॥ आवाहनं ॥ पुरुषएवेदं० ॥ सुवर्णमणिसंयुक्तंमयाभक्त्याप्रकल्पितं ॥ सिंहासनमिदंदिव्यंगृह्यतांवामनप्रभो॥आसनं॥
एतावानस्य०॥गंगोदकंसमानीतंसुवर्णकलशेस्थितं॥वासितंपुष्पगंधैश्चपाद्यंमेप्रतिगृह्यतां॥पाद्यं ॥ त्रिपादूर्ध्वं० ॥ गंधपुष्पफलै
र्युक्तंहेमपात्रेनिवेशितं ॥ स्वर्गंगासलिलंपुण्यमर्घ्यंस्वीकुरुकेशव॥ अर्घ्यं ॥ तस्माद्विराळ्० ॥ कर्पूरवासितंतोयंमंदाकिन्याःसमा
हृतं ॥ आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ॥ आचमनं ॥ यत्पुरुषेण० गंगासरस्वतीरेवापयोष्णीयमुनाजलैः ॥ स्नापितो
सितमयादेवतथाशांतिंकुरुष्वमे॥स्नानं॥आप्यायस्वेत्यादिभिः ॥ पंचामृतंमयानीतंपयोदधिघृतंमधु ॥ शर्करांपरयाभक्त्यास्ना
नार्थंप्रतिगृह्यतां ॥ पंचामृतं ॥ चारुगंधोदकंशीतंकर्पूरागुरुचंदनैः ॥ एलोशीरादिसंमिश्रंस्नानीयंगृह्यतांहरे ॥ गंधोदकं ।
गंधादिपूर्वपूजांतेमहाभिषेकः॥तंयज्ञंबर्हिषि० ॥ नमःकमलकिंजल्कपीतनिर्मलवाससे ॥ महाहवरिपुस्कंधघृष्टचक्रायचक्रिणे ॥
वस्त्रं ॥ तस्माद्यज्ञा० ॥ दामोदरनमस्तेस्तुत्राहिमांभवसागरात् ॥ उपवीतंसोत्तरीयंगृहाणपुरुषोत्तम ॥ उपवीतं ॥ तस्माद्यज्ञात्स
र्वं०॥मलयाचलसंभूतं० चंदनं ॥ अक्षतान् ॥ अहिरिव० परिमलद्रव्यं॥तस्मादश्वा० माल्यादीनि०पुष्पाणि ॥ अथांगपूजा॥
वामनायनमःपादौपू०॥दामोदराय०जंघे०॥श्रीपतये०ऊरू० ॥ कामदेवाय० गुह्यं० ॥ जगत्पतये०नाभिं० ॥ विश्वधारिणे०
उदरं०॥योगिनाथाय० हृदयं० ॥ श्रीधराय० कंठं ॥ पंकजास्याय०मुखं ॥ सर्वात्मने० शिरः० ॥ यत्पुरुषं० वनस्पति० धूपं०॥

ब्राह्मणोस्य० त्वमेवपृथिवीज्योतिर्वायुराकाशमच्युत॥त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां॥दीपं ॥ चंद्रमामनसो० ॥ अन्नं चतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्त्यानिवेदितंतुभ्यं० नैवेद्यं ॥ इदंफलं० फलं ॥ पूगीफलं० तांबूलं ॥ हिरण्यगर्भ०दक्षिणां॥श्रियेजातः०॥नीराजनंसुमंगल्यंकर्पूरोद्भासितंविभो॥चंद्रार्कवह्निसदृशंवामनप्रतिगृह्यतां ॥ नीराजनं ॥ नाभ्याआसी० ॥ नमोवामनरूपायनमस्तेस्तुत्रिविक्रम॥नमस्तेबलिबंधायवासुदेवनमोस्तुते॥नमस्कारं॥सप्तास्यासन्० यानिकानि०प्रदक्षिणां ॥ यज्ञेनयज्ञ० ॥ मत्स्यंकूर्मंवराहंचनरसिंहंचवामनं ॥ रामंरामंचकृष्णंचअर्चयामिनमोनमः॥ पुष्पांजलिं ॥ नमस्तेपद्मनाभायनमस्तेजलशायिने ॥ तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे ॥ विशेषार्घ्यं ॥ जगदादिर्जगद्रूपोह्यनादिर्जगदंतकृत् ॥ जलाशयोजगद्योनिःप्रीयतांमेजनार्दनः ॥ नमोनमस्तेगोविंदभुवनेशत्रिविक्रम॥अघौघसंक्षयंकृत्वासर्वकामप्रदोभव ॥ मंत्रहीनं० प्रार्थनं ॥ एवंसंपूज्यगीतादिमंगलैरात्रौजागरित्वा प्रातर्नित्यकर्मांतेदेवंसंपूज्यविसृज्यविप्रंसंपूज्य शिक्यस्थजलकलशयुतंसोपस्करंतंदद्यात् ॥दानमंत्रः॥वामनंसर्वतोभद्रंद्विजायप्रतिपादये॥प्रीयतांतेनदेवेशोममनित्यंजनार्दनः॥ग्रहणमंत्रः ॥ वामनोबुद्धिदोदाताद्रव्यस्थोवामनःस्वयं ॥ वामनोस्यप्रतिग्राहीवामनायनमोनमः ॥ ततस्त्रीन्विप्रान्पृषदाज्यदध्योदनयुतान्नेनसंभोज्यकर्मसमाप्य स्वयंभुंजीत॥अथवा वाचकायप्रतिमावस्त्रादिदत्वावामनप्रीत्यर्थंब्रह्मचारिणंसंभोज्यतस्मैदंडच्छत्रोपानहशिक्यादिदद्यात् ॥ मंत्रस्तु॥दध्योदनयुतंशिक्यंवारिधानीयुतंविभो ॥ छत्रोपानहसंयुक्तंब्राह्मणायददाम्यहं ॥ एवंद्वादशवर्षंकृत्वोद्यापनंकुर्यात् ॥

॥ ४७ ॥ अनंतचतुर्दशीपूजा ॥ आचमनादिदेशकालौस्मृत्वाममसकुटुंबस्यक्षेमस्थैर्यायुरारोग्याद्यभिवृद्ध्यर्थंगजाश्वल

क्ष्मीप्राप्त्यर्थंसमस्तपापक्षयार्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमदनंतप्रेरणयाश्रीमदनंतप्रीत्यर्थंमयास्वीकृतस्यचतु
र्दशवर्षविधेयस्यानंतव्रतस्यमयियथावत्प्रतिष्ठासिद्ध्यर्थंप्रतिवर्षविहितंयथाशक्तियथाज्ञानेनयथामिलितोपचारैःपुरुषसूक्तेनश्री
सूक्तेनपुराणोक्तमंत्रैःमूलमंत्रेणचषोडशोपचारैरनंतपूजनमहंकरिष्ये॥(अथवा ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्री
मदनंतपूजांकरिष्येइतिसंकल्प्य)तदंगत्वेनशरीरशुद्ध्यर्थंभूशुद्ध्यादिपुरुषसूक्तादिन्यासान् कलशार्चनादिचकरिष्ये॥पृथ्वित्वये
त्यादि०मनुज्ञांदातुमर्हसीतिभैरवाज्ञांगृहीत्वावामपादेनभूमिंत्रिस्ताडयेत् ॥ देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंर
क्षस्वेतिभूमौप्रादेशंकृत्वान्यसेत् ॥ तद्यथा ॥ करपज्जानुकटिपुनाभिहृत्कंठबाहुषु ॥ मुखाक्ष्णोर्मस्तकेचैववामादौपौरुषंन्यसेत् ॥
एवंपुरुषसूक्तन्यासः ॥ अथश्रीसूक्तन्यासः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयःश्रीर
ग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याबृहती व्यंजनानिबीजानि
स्वराःशक्तयः बिंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेविनियोगः ॥ हिरण्यवर्णां० मूर्ध्नि ॥ तांम
आवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितां० नासिकायां ॥ चंद्रांप्रभासां० मुखे ॥ आदित्यवर्णे०कंठे ॥ उपै
तुमां० ॥ बाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥ मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु०
ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं० जंघयोः ॥ तांमआवह० पादयोः ॥ यःशुचिःप्र० सर्वांगे ॥ अथां
गुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायै० तर्जनीभ्यां० ॥ रजतस्रजायै० मध्यमाभ्यां० ॥ चंद्रायै०

ब्राह्मणोस्य० त्वमेवपृथिवीज्योतिर्वायुराकाशमच्युत॥त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां॥दीपं ॥ चंद्रमामनसो० ॥ अन्नं चतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्त्यानिवेदितंतुभ्यं० नैवेद्यं ॥ इदंफलं० फलं ॥ पूगीफलं० तांबूलं ॥ हिरण्यगर्भ० दक्षिणां॥श्रियेजातः०॥नीराजनंसुमंगल्यंकर्पूरोद्भासितंविभो॥चंद्रार्कवह्निसदृशंवामनप्रतिगृह्यतां ॥ नीराजनं ॥ नाभ्याआसी० ॥ नमोवामनरूपायनमस्तेस्तुत्रिविक्रम॥नमस्तेबलिबंधायवासुदेवनमोस्तुते॥नमस्कारं॥सप्तास्यासन्० यानिकानि० प्रदक्षिणां ॥ यज्ञेनयज्ञ० ॥ मत्स्यंकूर्मंवराहंचनरसिंहंचवामनं ॥ रामंरामंचकृष्णंचअर्चयामिनमोनमः॥ पुष्पांजलिं ॥ नमस्तेपद्मनाभायनमस्तेजलशायिने ॥ तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे ॥ विशेषार्घ्यं ॥ जगदादिर्जगद्रूपोह्यनादिर्जगदंतकृत् ॥ जलाशयोजगद्योनिःप्रीयतांमेजनार्दनः ॥ नमोनमस्तेगोविंदभुवनेशत्रिविक्रम॥अघौघसंक्षयंकृत्वासर्वकामप्रदोभव ॥ मंत्रहीनं० प्रार्थनं ॥ एवंसंपूज्यगीतादिमंगलैरात्रौजागरित्वा प्रातर्नित्यकर्मांतेदेवंसंपूज्यविसृज्यविप्रंसंपूज्य शिक्यस्थजलकलशयुतंसोपस्करंतंदद्यात् ॥दानमंत्रः॥वामनंसर्वतोभद्रंद्विजायप्रतिपादये॥प्रीयतांतेनदेवेशोममनित्यंजनार्दनः॥ग्रहणमंत्रः ॥ वामनोबुद्धिदोदाताद्रव्यस्थोवामनःस्वयं ॥ वामनोस्यप्रतिग्राहीवामनायनमोनमः ॥ ततस्त्रीन्विप्रान्पृषदाज्यदध्योदनयुतान्नेनसंभोज्यकर्मसमाप्य स्वयंभुंजीत॥अथवा वाचकायप्रतिमावस्त्रादिदत्वावामनप्रीत्यर्थंब्रह्मचारिणंसंभोज्यतस्मैदंडच्छत्रोपानहशिक्यादिदद्यात् ॥ मंत्रस्तु॥दध्योदनयुतंशिक्यंवारिधानीयुतंविभो ॥ छत्रोपानहसंयुक्तंब्राह्मणायददाम्यहं ॥ एवंद्वादशवर्षंकृत्वोद्यापनंकुर्यात् ॥

॥ ४७ ॥ अनंतचतुर्दशीपूजा ॥ आचमनादिदेशकालौस्मृत्वाममसकुटुंबस्यक्षेमस्थैर्यायुरारोग्याद्यभिवृद्ध्यर्थंगजाश्वल

क्ष्मीप्राप्त्यर्थंसमस्तपापक्षयार्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमदनंतप्रेरणयाश्रीमदनंतप्रीत्यर्थमयास्वीकृतस्यचतु
र्दशवर्षविधेयस्यानंतव्रतस्यमयियथावत्प्रतिष्ठासिद्ध्यर्थंप्रतिवर्षविहितंयथाशक्तियथाज्ञानेनयथामिलितोपचारैःपुरुषसूक्तेनश्री
सूक्तेनपुराणोक्तमंत्रैःमूलमंत्रेणचषोडशोपचारैरनंतपूजनमहंकरिष्ये॥(अथवा ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्री
मदनंतपूजांकरिष्येइतिसंकल्प्य)तदंगत्वेनशरीरशुद्ध्यर्थंभूशुद्ध्यादिपुरुषसूक्तादिन्यासान् कलशार्चनादिचकरिष्ये॥पृथ्वित्वये
त्यादि०मनुज्ञांदातुमर्हसीतिभैरवाज्ञांगृहीत्वावामपादेनभूमिंत्रिस्ताडयेत् ॥ देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंर
क्षस्वेतिभूमौप्रादेशंकृत्वान्यसेत् ॥ तद्यथा ॥ करपज्जानुकटिपुनाभिहृत्कंठबाहुषु ॥ मुखाक्ष्णोर्मस्तकेचैववामादौपौरुषंन्यसेत् ॥
एवंपुरुषसूक्तन्यासः ॥ अथश्रीसूक्तन्यासः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयःश्रीर
ग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याबृहती व्यंजनानिबीजानि
स्वराःशक्तयः बिंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेविनियोगः ॥ हिरण्यवर्णां० मूर्ध्नि ॥ तांम
आवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितां० नासिकायां ॥ चंद्रांप्रभासां० मुखे ॥ आदित्यवर्णे०कंठे ॥ उपै
तुमां० ॥ बाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥ मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु०
ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं० जंघयोः ॥ तांमआवह० पादयोः ॥ यःशुचिःप्र० सर्वांगे ॥ अथां
गुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायै० तर्जनीभ्यां० ॥ रजतस्रजायै० मध्यमाभ्यां० ॥ चंद्रायै०

अनामिकाभ्यां० ॥ हिरण्मयायै० कनिष्ठिकाभ्यां० ॥ लक्ष्म्यै० करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ केशवायनमःशिरसि ॥ नारायणाय०मुखे ॥ माधवाय०भुजयोः ॥ गोविंदाय० कंठे ॥ विष्णवे० पृष्ठे ॥ मधुसूदनाय० कुक्षौ ॥ त्रिविक्रमाय० कट्योः ॥ वामनाय० जंघयोः ॥ श्रीधराय० वामगुल्फे ॥ हृषीकेशाय० दक्षिणगुल्फे ॥ पद्मनाभाय० वामपादे ॥ दामोदराय० दक्षिणपादे ॥ १२ ॐनमोभगवतेवासुदेवायेतिमूलमंत्रेणषडंगोहृदयादिः ॥ ततः ॐ नमोभगवतेवासुदेवायेतिहृदयायनमः ॥ ॐ नमोनारायणायशिरसेस्वाहा ॥ ॐ नमोविष्णवेशिखायैवषट् ॥ ॐ नमोवामनायकवचायहुम् ॥ ॐनमःकेशवायनेत्रत्रयायवौषट् ॥ ॐनमोनृसिंहायअस्त्रायफट् ॥ ॐभूर्भुवःस्वरोमितिदिग्बंधः ॥ कलशस्येत्यादिमंत्रैःकलशपूजनं शंखंचंद्रार्कदैवत्यमित्यादिभिःशंखपूजांचकुर्यात् ॥ आगमार्थंतु० इतिमंत्रेणघंटानादंकुर्यात् ॥ अपवित्रःपवित्रोवा०गायत्र्याआत्मानंपूजाद्रव्याणिचप्रोक्षेत् ॥ येभ्योमाता०एवापित्रे०॥स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनदेवेस्मिन्संनिधोभव ॥ प्राङ्मुखोदेवममसंमुखोवरदोभव ॥ पूर्वोच्चरितएवंगुणविशेषण० श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीमदनंताराधनांगत्वेनयमुनापूजांकरिष्ये ॥ अथध्यानं ॥ क्षीरोदार्णवसंभूतेइंद्रनीलसमप्रभे ॥ त्रैलोक्यवंदितेदेविविष्णुरूपेनमोस्तुते ॥ श्रीयमुनां ध्यायामि ॥ ॐहिरण्यवर्णां०॥सर्वतीर्थमयेदेवियमज्येष्ठेयशस्विनि ॥ आदित्यदुहितर्मातर्यमुनायैनमोस्तुते॥ यमुनांआवाहयामि ॥ ॐतांम्आवह० ॥ कृष्णवेणिनमस्तुभ्यंकृष्णवर्णेसुलक्षणे ॥ सर्वसौभाग्यदेदेवियमुनायैनमोस्तुते॥यमुनायै० आसनं० ॥ ॐअश्वपू० ॥ वेदपादेनमस्तुभ्यंसर्वलोकहितप्रदे ॥ सर्वपापप्रशमनितुंगायैतेनमोस्तुते ॥ यमुनायै०पा



॥ ४६ ॥

र्घ्यं०॥ॐ कांसोस्मितां०॥कृष्णेकृष्णांगसंभूतेजंतूनांपापहारिणि॥नमस्तेसरितांश्रेष्ठेगृहाणार्घ्यंनमोस्तुते ॥ यमुनायै० अर्घ्यं० ॥
ॐचंद्रांप्रभासां० ॥ आत्मज्योतिर्नमोदेविसर्वानुग्रहकारिणि ॥ स्वधर्मनिरतेदेविगृहाणाचमनीयकं॥यमुनायै०आचमनीयं० ॥
ॐआदित्यवर्णेतपसो० ॥ गंगागोदावरीरेवापयोष्णीचसरिद्वरा ॥ कृष्णाचतुंगभद्राचस्नानार्थंतेनिवेदिताः॥ यमुनायै०शुद्धो
दकस्नानं० ॥ सर्वमंगलकार्यार्थंप्रधानत्वेनचार्चितं ॥ मधुपर्कंगृहाणेमंदेवेशित्वंप्रसीदमे ॥ यमुनायै० मधुपर्कं० ॥ कृष्णपा
दाब्जसंभूतेगंगेत्रिपथगामिनि ॥ जटाजूटेनमस्तुभ्यंभागीरथ्यैनमोस्तुते ॥ यमुनायै० मलापकर्षस्नानं० ॥ स्नानंपंचामृतंदेवि
गृहाणसरितोत्तमे ॥ अनाथनाथेसर्वज्ञेसर्वकामप्रदाभव ॥ पंचामृतस्नानं० ॥ सौरभेयीसमुत्पन्नंदेवर्पिपितृतृप्तिदं ॥ स्नानार्थं
तेपयोदेविगृहाणसरितोत्तमे ॥ यमुनायै० पयःस्नानं० ॥ चंद्रमंडलसंकाशंसर्वदेवप्रियंदधि ॥ स्नानार्थंसरितांश्रेष्ठेगृहाणत्वं
नमोस्तुते ॥ यमुनायै० दधिस्नानं० ॥ सर्पिषाचमहादेविस्नपनंक्रियतेमया ॥ गृहाणशुद्ध्यादत्तंयमुनायैनमोनमः ॥ यमु०
घृतस्नानं० ॥ इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच ॥ गृहाणसरितांनाथेयमुनायैन० ॥ यमुना० मधु० ॥ सितयादेवदेवेशिस्नप
नंक्रियतेमया ॥ संगृहाणजगन्नाथेयमुनायैन० ॥ यमुनायै० शर्करा० ॥ आपोहिष्ठेतिशुद्धोदकेनसंस्नाप्य ॥ गंधाक्षतपुष्पाणि
समर्प्यश्रीसूक्तेनमहाभिषेकः ॥ ॐउपैतुमां० ॥ सिंहासनसमारूढेदेविभक्तजनप्रिये ॥ सर्वलक्षणसंपूर्णेवस्त्रयुग्मंगृहाणमे ॥ यमु
नायै० वस्त्रं० ॥ गोदावरिनमस्तुभ्यंसर्वाभीष्टप्रदायिनि ॥ सर्वसौभाग्यदेदेविगृहाणकंचुकींशुभां ॥ यमु० कंचुकीं० ॥ ॐ
क्षुत्पिपासा०॥नंदिपादेनमस्तेस्तुशंकरप्रियवल्लभे ॥ कंठसूत्रंसोत्तरीयंगृहाणवरदाभव ॥ यमु० कंठसूत्रं० ॥ मणिमुक्ताफलैर्हारै

नूपुरैर्बाहुभूषणैः ॥ मुकुटाद्यैश्चसर्वैशिभूषयेहंजनप्रिये०॥यमु० भूषणानि० ॥ ॐगंधद्वारां० ॥ चंदनागरुकस्तूरीरोचनंकुंकुमं तथा ॥ कर्पूरादिसमायुक्तंचंदनंप्रतिगृह्यतां ॥ यमुनायै० चंदनं० ॥ यमुनायैनमस्तुभ्यंसर्वाभीष्टप्रदायिनि ॥ सर्वसौभाग्य देदेविहरिद्राद्यंगृहाणमे ॥ यमुनायै० हरिद्रां० ॥ कुंकुमंकांतिदंदिव्यंकामिनीकामसंभवं ॥ कुंकुमेनार्चितेदेवियमुनेप्रतिगृह्य तां ॥ यमु० कुंकुमं० ॥ कालिकेकृष्णवर्णेत्वंसुभगेशक्तितारके ॥ अक्षिभ्यांकज्जलंदत्तंगृहाणपरमेश्वरि ॥ यमु० कज्जलं० ॥ कालरात्रिनमस्तुभ्यंनमस्तुभ्यंमहाबले॥ ताडपत्रंमयादत्तंगृहाणपरमेश्वरि ॥ यमुनायै० ताडपत्रं० ॥ अर्हिरिवभोगैः०॥कस्तू र्याद्याश्चयेगंधाभोगार्थंतेमयाहृताः ॥ अनेकगंधसंयुक्ताःप्रीत्यर्थंप्रतिगृह्यतां॥ यमुनायै० परिमलद्रव्यं ॥ अक्षताःपरमादिव्याः सर्वकामफलप्रदाः ॥ पूजासंरक्षणार्थायअक्षतान्प्रददाम्यहं ॥ यमुनायै० अक्षतान्० ॥ ॐमनसःकाम्० ॥ मंदारपारिजाताद्यै रनेकैःकुसुमैःशुभैः॥ पूजयामिशिवेभक्त्यायमुनायैनमोनमः॥ यमुनायै० पुष्पाणि०॥ ॥अथांगपूजा ॥ यमुनायैनमः पादौ पूजयामि॥ चंचलायै० जानुनीपू० ॥ कमलायै० कटिं० ॥ चित्रायै० नाभिंपू० ॥ मन्मथवासिन्यै० स्तनौ० ॥ ललितायै० भुजौ० ॥ रत्नकंठायै० कंठंपू० ॥ मायाशक्त्यै० मुखंपू० ॥ चंद्रशेखरायै० ललाटंपू० ॥ भीमरथ्यै० शिरःपू० ॥ यमुना यै० सर्वांगंपूजयामि॥ ॥अथनामपूजा॥ यमुनायै० मायायै० शंकरार्धधारिण्यै० कनककट्यै० उत्पलायै० धात्र्यै०सिंधवे० चूडामण्यै० शांतायै० त्रिगुणात्मिकायै० महायोगिन्यै० ब्रह्मांडरूपिण्यै० जटिलायै० तपस्विन्यै० गंगायै०नर्मदायै० गौ र्यै० भागीरथ्यै० तुंगायै० भद्रायै० कृष्णायै० वेण्यै० भीमरथ्यै० भवनाशिन्यै० कावेर्यै० सरस्वत्यै० सावित्र्यै० गायत्र्यै०

गोदावर्यै० गोमत्यै० गरुडायै० गिरिजायै० मलापहारिण्यै०श्रीयमुनायै०इतिनामपूजा ॥ ॐकर्दमेन०॥दशांगंगुग्गुलंधूपंसु
गंधंचमनोहरं॥ आघ्रेयंसर्वदेवानांयमुनेप्रतिगृह्यतां ॥ यमु० धूपं० ॥ ॐ आपःस्रजंतु०॥घृताक्तवर्तिसंयुक्तंमहातेजोमयोज्ज्व
लं ॥ गृहाणमंगलंदीपंत्रैलोक्यतिमिरापहं ॥ यमु० दीपं० ॥ ॐ आर्द्रांयः०॥ सर्वभक्ष्यसमायुक्तंपड्रसैश्चसमन्वितं॥नैवेद्यंयमु
नेदेविगृह्यतांमेप्रसीदच ॥ यमु० नैवेद्यं० ॥ पानीयंपावनंश्रेष्ठंगंगादिसरितोद्भवं ॥ प्राशनार्थंमयानीतंप्रीत्यर्थंप्रतिगृह्यतां ॥ य
मु० नैवेद्यमध्येपानीयं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० उत्तराचमनीयं० करोद्वर्तनार्थेचंदनं० ॥ इदंफलमि
तिमहाफलं० ॥ पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं ॥ कर्पूरादिसमायुक्तंतांवूलंप्रतिगृह्यतां ॥ यमुनायै० तांवूलं०॥न्यूनाति
रिक्तपूजायाःसर्वसंपूर्णहेतवे ॥ दक्षिणांकांचनींदेविस्थापयामितवाग्रतः॥यमु०दक्षिणां०॥श्रियेजात० ॥ घृतवर्तिप्रदीपाश्चमया
दत्ताहिभक्तितः ॥ नीराजनंगृहाणेदंयमुनेभक्तवत्सले॥यमु० नीराजनं०॥ ॐतांमआवह० ॥ सर्वपापहरेदेविसर्वोपद्रवनाशि
नि ॥ सरिच्छ्रेष्ठेजगद्वंद्येयमुनायैनमोनमः ॥ यमुनायै० नमस्कारान् ॥ ॐआर्द्रांपुष्करिणीं० यानिकानिचपापानिजन्मांतरकृ
तानिच ॥ तानितानिविनश्यंतिप्रदक्षिणपदेपदे० ॥ यमु० प्रदक्षिणाः ॥ ॐ यःशुचिःप्रयतो०॥नानाविधैःसुकुसुमैःपुष्पांजलि
मिमंशुभं ॥ गृहाणकृपयादेवियमुनायैनमोस्तुते ॥ यमुनायै० मंत्रपुष्पम् ॥ सुरासुरेंद्रादिकिरीटमौक्तिकप्रभाभिजुष्टंतवपादपंक
जं॥परात्परंचारुतरंसुमंगलंनमामिभक्त्याममकामसिद्ध्यै ॥ भवपत्निमहादेविइष्टकामप्रदायिनि ॥ अनंतव्रतसिद्धिंमेदेहित्वंयमु
नेधुना ॥ आवाहनंन०यस्यस्मृत्या०मंत्रहीनं० ॥ अनेनकृतपूजनेनयमुनादेवताप्रीयतां ॐतत्सद्ब्रह्मार्पणमस्तु ॥ ॥ अथशेष

पूजांकुर्यात् ॥ तत्रायंक्रमःकारिकोक्तः ॥ आराधितयमुनापश्चिमदेशेशालितंडुलराशौअतोदेवाइतिमंत्रेणपद्ममष्टदलंकृत्वा पंचरंगैःसुशोभनंपद्मंरंगवल्ल्यादिनाआयतनंचयथारुचिरंकृत्वापीठपूजांकुर्यात् ॥ अद्येत्यादि० श्रीमदनंताराधनांगत्वेनशेषपूजांकरिष्ये॥तत्रादौमंडपादिपूजांकरिष्ये ॥ ॥सामंडपपूजायथा ॥ पूर्वद्वारेश्रियैनमः नंदायै० सुनंदायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥ दक्षिणद्वारे ॥ द्वारश्रियै० चंडायै० प्रचंडायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥ पश्चिमद्वारे ॥ द्वारश्रियै० बलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥उत्तरद्वारे॥ द्वारश्रियै० महाबलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै०मायाशक्त्यै०शंखनिधये० पद्मनिधयै० ॥ अथपीठपूजा ॥ मध्येवास्तुपुरुषायनमः मंडूकाय० कालाग्निरुद्राय० आधारशक्त्यै० कूर्माय० पृथिव्यै० अमृतार्णवाय० श्वेतार्णवाय० द्वीपेभ्यो० कल्पवृक्षेभ्यो० मणिमंदिराय० हेमपीठाय० धर्माय० अधर्माय० ज्ञानाय० अज्ञानाय० वैराग्याय० अवैराग्याय० ऐश्वर्याय० अनैश्वर्याय० सहस्रमणिफणान्वितायानंताय० ॥सर्वतत्त्वपद्माय० आनंदकंदाय० संविन्नालाय० विकारमयकेसरेभ्यो० प्रकृतिमयपत्रेभ्यो० सूर्यमंडलाय०चंद्रमंडलाय० वह्निमंडलाय० संसत्त्वाय० रंरजसे० तंतमसे० अंआत्मने० पंपरमात्माने० अंअंतरात्मने०ज्ञानात्मने०प्राणात्मने० कालात्मने० विद्यात्मने०॥ततःपूर्वादिदिक्षुक्रमेण० जयायै० विजयायै० अजितायै० अपराजितायै० नित्यायै० विमलासनायै० दोग्ध्र्यै० अघोरायै० मंगलायै० आधारशक्तिकमलासनाय० इतिपीठदेवताआवाह्यगंधादिभिःपूजयेत् ॥ ततस्त

कांडात्कांडात्० अ
त्राष्टदलेकलशस्थापनम्॥ॐमहीद्यौः०औषधयःसंवदंते०आकलशेषु०इमंमेगंगे०गंधद्वारां०याओषधीः०
श्वत्थेवो० याःफलिनीर्या० सहिरत्नानि० हिरण्यरूपः०युवासुवासाः०पूर्णादर्वि०॥यन्मध्यस्थंडिलामेघाःसरितःसागरास्तथा॥
ब्रह्मांडकलशंतंतुपूजार्थंस्थापयाम्यहं॥ इतिकलशस्थापनमंत्रः॥ ॐतत्त्वायामि० वरुणंपंचोपचारैःपूजयेत् ॥ ततःकलशेदेवता
आवाहयेत् ॥ यथा केशवादिचतुर्विंशतिदेवताः मत्स्यादिदशदेवताश्चावाह्य ॥ ततः अनिरुद्धायनमः अनिरुद्धमावाहयामि
एवमेवाग्रेपि प्रद्युम्नाय० संकर्षणाय० वासुदेवाय० अष्टवसुभ्यो० एकादशरुद्रेभ्यो० द्वादशादित्येभ्यो०ध्रुवाय० अध्वराय०
सोमाय० अद्भ्यो० अनलाय० प्रत्यूषाय० प्रभाताय० शिंशुमाराय० ब्रह्मणे० व्यासाय० दत्तात्रेयाय० विश्वरूपाय० अनं
ताय० एताःकलशे आवाह्य कलशोपरिस्थापितपूर्णपात्रेवस्त्रंप्रसार्य कुंकुमेनाष्टदलंलिखित्वातत्रपीठदेवतावाहनंकुर्यात् ॥ य
था पीठस्यपूर्वादिदिक्षु गणपतयेनमः दुर्गायै० क्षेत्रपालाय० वास्तोष्पतये० मध्येसप्तमातृभ्यो० ॥ पुनःपूर्वादिषु इंद्राय०
अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० इत्यावाह्य ॥ ॐनमोभगवतेवासुदेवायेतिमूलमंत्रे
णावाहयेत् ॥ यथा अनंतंमोहिनीशक्तिसहितंआवाहयामि० १ वामनंश्रीशक्तिसहितं० २ शौरिणंपद्मिनीशक्तिसहितं० ३
वैकुंठंमहाबलशक्तिसहितं० ४ पुरुषोत्तमंअजाशक्तिसहितं० ५ पद्मनाभंमंगलाशक्तिसहितं ६ हृषीकेशंवरदाशक्तिसहितं ७
त्रिविक्रमंशुभाशक्तिसहितं० ८ मधुसूदनंभगवतीशक्तिसहितं ९ अच्युतंअपराजिताशक्तिसहितं १० अनंतंजयाशक्तिसहितं
११ गोविंदंविजयाशक्तिसहितं १२ कृष्णंसुभद्राशक्तिसहितं० १३ अपराजितंसर्वगाशक्तिसहितं० १४ श्रीमदनंतलक्ष्मीश

क्तिसहितंआवाहयामिइत्यावाह्य ॥ अथाष्टदलेकर्णिकामध्ये परमदेवतायै० सव्ये सर्वगुरुभ्योनमः ॥ दक्षिणे सर्वदेवताभ्यो०॥
आग्नेयादिचतुष्कोणेषु गरुडाय० व्यासाय० दुर्गायै० सरस्वत्यै० ॥ पुनर्याम्यादिषु धर्माधिपतयेयमाय० पश्चिमे ज्ञानाधिपत
येवरुणाय० उत्तरे वैराग्याधिपतयेसोमाय० पूर्वे ऐश्वर्याधिपतयेइंद्राय० ॥ पुनःपूर्वे धर्माधिपतयेनिर्ऋतये० दक्षिणे ज्ञाना
धिपतयेदुर्गायै० पश्चिमे अवैराग्याधिपतयेकामायन० उत्तरे अनैश्वर्याधिपतयेरुद्राय० मध्येपरमपुरुषायानंतायनमः ॥ मंमं
डूकायनमः मंडूकंआवाहयामि ॥ एवंसर्वत्र ॥ कंकालाय० कुंकूर्माय० आंआधारशक्त्यै० पंप्रकृत्यै० शिंशिलारूपकमला
य० शंशेषाय० पंपृथिव्यै० क्षींक्षीरसिंधवे० नवरत्नद्वीपाय० रत्नोज्ज्वलितमहामंडलाय० नवरत्नमयपारिजाताय०इतिएकै
कोपरिपूर्वतःमंडलानिसंपूज्य तदधःरत्नवेदिकायैनमः ॥ चतुरस्रस्याग्नेयादिकोणेषु आग्नेयेधर्माय० नैर्ऋते ज्ञानाय० वायव्ये
वैराग्याय० ऐशाने ऐश्वर्याय० ॥ चतुरस्रस्यपूर्वरेखायां अंअधर्माय० दक्षिणे अंअज्ञानाय० पश्चिमे अंअवैराग्याय० उत्तरे
अंअनैश्वर्याय०॥ ततःकर्णिकामध्येसप्ततिवलयोपेतायसहस्रफणायअनंताय० तन्मध्यफणोपरि आंआनंदकंदाय० संसंविन्ना
लाय० संसर्वतत्त्वकमलाय० पंप्रकृतिपत्रेभ्यो० विंविकारमयकेसरेभ्यो० पंपंचाशद्वर्णाढ्यायैकर्णिकायै० अंअर्कमंडलाय०
द्वादशकलाभ्यो० उंसोममंडलायषोडशकलाभ्यो० वंवह्निमंडलायदशकलाभ्यो० संसत्त्वायप्रबोधात्मने० रंरजसेप्रकृत्यात्म
ने० तंतमसेसोमात्मने० आंआत्मने० अंअंतरात्मने० पंपरमात्मने० ह्रींज्ञानात्मने० मांमायातत्त्वाय०कांकालतत्त्वाय०विं
विद्यातत्त्वाय० पंपरतत्त्वाय० ॥ ततःपूर्वकेसरेषुपीठशक्तीःपूजयेत् ॥ यथा ॥ विंविमलायै० उंउत्कर्षिण्यै० ज्ञांज्ञानायै० यांयो

गायै० पंप्रह्वायै० इंईशानायै० संसरस्वत्यै० कर्णिकायांअनुग्रहायै० ॥ ततःपुष्पाणिगृहीत्वा ॐ नमोभगवतेविष्णवेसर्वभूता त्मनेवासुदेवायसर्वात्मनेसंयोगपीठात्मनेश्रीमदनंतायनमइतिपीठेर्पयेत्॥ ततःअष्टौभैरवानावाहयेत् ॥ असितांगभैरवायनमः रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० भीपणभैरवाय० संहारभैरवाय० ॥ ततःपूर्वे विप्रवर्णश्वेतंसहस्रफणालंकृतंशेषंआवाहयामि ॥ आग्नेय्यांवैश्यवर्णनीलपंचशतफणालंकृतंतक्षकंआवाह० ॥ दक्षिणे विप्रवर्णे कुंकुमाभंसहस्रफणालंकृतंअनंतंआवा० ॥ नैर्ऋत्यांक्षत्रियवर्णपीतंसप्तफणायुतंवासुकिंआवा० ॥ पश्चिमे क्षत्रियवर्णपीतंसप्तश तफणालंकृतंशंखपालंआवा० ॥ वायव्यां वैश्यवर्णनीलंपंचशतफणालंकृतंमहापद्मंआवा० ॥ उत्तरेशूद्रवर्णश्वेतंत्रिंशत्फणालं कृतंकंबलंआवा० ॥ ईशान्यां शूद्रवर्णश्वेतंत्रिंशत्फणालंकृतंकर्कोटकंआवा० ॥ इत्थंपीठदेवताआवाह्य ॥ तदस्तुमित्रावरुणा० गृहावैप्रतिष्ठा० ॥ कृत्वादर्भमयंशेषंमुष्टिमात्रमिदंशुभं ॥ फणासमन्वितानंतशायिनंचचतुर्भुजं ॥ वस्त्रोपरिसप्तफणान्वितंस लक्षणंदर्भमयंशेषंसंस्थाप्यपूजयेत् ॥ तद्यथा ॥ तक्षकंपन्नगाधीशंफणानेकशतोज्वलं ॥ दिव्यांवरधरंदीप्तंरत्नकुंडलमंडितं ॥ नानारत्नपरिक्षिप्तमुकुटद्युतिरंजितं ॥ फणामणिसहस्राढ्यैरसंख्यैःपन्नगोत्तमैः ॥ नागकन्यासहस्रेणसमंतात्परिवारितं ॥ दि व्याभरणदीप्तांगंदिव्यचंदनचर्चितं ॥ कालाग्निमिवदुर्धर्षतेजसादित्यसन्निभं ॥ ब्रह्मांडाधारभूतंतंयमुनांतर्निवासिनं ॥ फणैः सप्तभिराश्लिष्टंविष्णुस्वापविराजितं ॥ दिव्याभरणदीप्तांगंदिव्यांवरविराजितं ॥ ध्यायाम्येतादृशंशेषंपूजार्थमिहतेनमः॥ इति ध्यात्वा॥ ॐसहस्रशीर्षा० शेषंसप्तफणायुक्तंकालियंनागनायकं ॥ अनंतशयनार्थंत्वांभक्त्याआवाहयाम्यहं ॥ शेपायनमः आ

वाहनंस० ॥ ॐपुरुषएवेदं०॥नवनागकुलाधीशशेषोद्धारककाश्यप॥नानारत्नसमायुक्तमासनंप्रतिगृह्यतां॥शेषाय० आसनं०॥
ॐएतावानस्य०॥अनंतप्रियशेषेशजगदाधारविग्रह॥पाद्यंगृहाणभक्त्यात्वंकाद्रवेयनमोस्तुते॥शेषाय० पाद्यं०॥ॐत्रिपाद्०॥
कश्यपानंदजनकमुनिवंदितहेप्रभो॥अर्घ्यंगृहाणत्वंशेषसादरंशंकरप्रिय॥शेषाय० अर्घ्यं०॥ तस्माद्विराळ०॥ सहस्रफणिरूपेण
वसुधोद्धारकप्रभो ॥ गृहाणाचमनंदेवपावनंचसुशीतलं ॥ शेषाय० आचमनंस० ॥ ॐयत्पुरुषेण० ॥ गंगादिपुण्यतीर्थैस्त्वा
मभिषिंचामिभूधर॥ बलभद्रावतारेशनंदनश्रीपतेःसखे॥ शेषाय० शुद्धोदकस्नानं०॥कुमाररूपिणेतुभ्यंदधिमध्वाज्यसंयुतं॥
मधुपर्कंप्रदास्यामिसर्पराजनमोस्तुते ॥ शेषाय० मधुपर्कं०॥ क्षीरंदधिघृतंचैवमधुशर्करयान्वितं ॥ पंचामृतस्नानमिदंस्वीकुरु
ष्वदयानिधे॥ शेषाय० पंचामृतस्नानं० ॥ पुरुषसूक्तेनमहाभिषेकः॥ ॐतंयज्ञं० ॥कौशेययुग्मंदेवेशप्रीत्यातवमयार्पितं॥ पन्न
गाधीशनागेंद्रताक्ष्यशत्रोनमोस्तुते ॥ शेषाय० वस्त्रयुग्मं० ॥ ॐतस्माद्यज्ञा० ॥सुवर्णनिर्मितंसूत्रंपीतितोरंजितंप्रभो॥अनेकर
त्नखचितंसर्पराजार्पयाम्यहं॥ शेषाय० यज्ञोपवीतं॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥कर्पूरकस्तूरिककेशराढ्यंगोरोचनंचागरुरक्त
चंदनं ॥ श्रीचंदनाढ्यंशुभदंसुगंधंगृहाणविष्णुप्रियतेमयार्पितं ॥ शेषाय० चंदनं ॥ काश्मीरपंकलिप्तांश्चशालीयानक्षतान्शु
भान्॥पातालाधिपतेतुभ्यमर्पयामिगृहाणभो॥ शेषाय० अक्षतान्० ॥ अनेकरत्नान्वितहेमकुंडलेमाणिक्यसंकाशितकंकणद्वयं॥
हीरैस्तुसंशोभितरत्नमुद्रिकांहैमंकिरीटंफणिराजतेर्पितं ॥ शेषाय० सर्वाभरणानि० ॥ अहिरिवेतिपरिमलद्रव्यं ॥ ॐतस्माद
श्वा०॥करवीरैर्जातिपुष्पैश्चंपकैर्बकुलैःशुभैः ॥ तवपूजांकरोम्यत्रविष्णुप्रियनमोस्तुते ॥ शेषाय० पुष्पाणि० ॥ अथांगपूजा ॥

सहस्रपदेनमः पादौपूजयामि ॥ गूढगुल्फाय० गुल्फौ० ॥ हेमजंघाय० जंघे० ॥ मंदगतये० जानुनी० ॥ पीतांवरधराय०
कटिं० ॥ गंभीरनाभाय०॥नाभिं० ॥ वाताशनाय० उदरं० ॥ उरगाय०स्तनौ०॥कालियाय० भुजौ० ॥ कंबुकंठाय० कंठं० ॥
विषवक्राय० मुखं० ॥ मणिभूषणाय० ललाटं० ॥ सुलक्षणाय० शिरः० ॥ अनंतप्रियाय० सर्वांगंपूजयामि ॥ ततःसप्तफ
णाउदक्संस्थाःपूजयेत् ॥ शेषायनमः तक्षकाय० वासुकये० कालियाय० वलभद्राय० लक्ष्मणाय० सुब्रह्मणे०अनंतप्रियाय०॥
अथानामपूजा ॥ उरगाय० पन्नगाय० शंकरभूषणाय० अनंतशिखिने० पातालवासिने० यमुनांतर्वासिने० विषग्रहाय०वि
षहंत्रे० नागेंद्राय० नागकन्यापरिवृताय० शेषाय० नागलोकाधिपतये० इतिनामपूजा ॥ ॐयत्पुरुषं० वनस्पति०शेषाय०
धूपं० ॥ ॐब्राह्मणोस्य० आज्यंचवर्तिं० शेषाय० दीपं० ॥ ॐचंद्रमाम० नैवेद्यंगृ०शेषाय० नैवेद्यं० ॥ मध्येपानीयं० उत्त
रापोशनं० हस्तप्रक्षालनादि०॥इदंफलं० महाफलं०॥पूगीफलंमहत्० तांबूलं०॥हिरण्यगर्भ० दक्षिणां० ॥ श्रियेजात० ॥सर्प
राजनमस्तुभ्यंतडित्संकाशभूधर ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणहरभूषण ॥ नीराजनं ॥ ॐनाभ्याआसी० ॥ अनंतसंसार
रुचिःसदाहंकालीयनागाधिपतेसदात्वां ॥ नतोस्मिमत्वाकृपणंहिदीनंरक्षस्वमांशंकरभूषणेश ॥ नमस्कारान् ॥ ॐसप्तास्यास
न्० यानिकानिच० प्रदक्षिणाः ॥ ॐयज्ञेनयज्ञ० ॥ नानाकुसुमसंयुक्तंपुष्पांजलिमिमंप्रभो ॥ कश्यपानंदजनकसपदिप्रतिगृह्य
तां ॥ मंत्रपुष्पं ॥ अनंतव्रतकल्पोक्तफलंदेहिफणीश्वर ॥ सांगपूजाफलंप्राप्तुंप्रार्थयेभक्तवत्सल ॥ आवाहनं० यस्यस्मृत्या०मं
त्रहीनं० ॥ अनेनयथाशक्तियथाज्ञानेनयथामिलितोपचारैःकृतपूजनेनभगवान्श्रीशेषःप्रीयताम् ॐतत्सद्ब्रह्मार्पणमस्तु ॥ ॥

अथानंतपूजा० ॥ ॥ तत्रसमीपतःपात्रांतरेपाद्याद्यभिषेकांतकरणप्राशस्त्यात् चतुर्दशग्रंथियुतंकुंकुमाक्तदोरकद्वयमुपकल्प्य अग्न्युत्तारणंकुर्यात्॥अग्निःसप्तिमितिअग्निपदरहितंसूक्तंपठित्वातत्सहितंपुनःपठित्वाजलंपातयेत् एवंदोरकशुद्धिंविधायप्राण प्रतिष्ठांकुर्यात् ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरायऋषयः ऋग्यजुःसामानिछंदांसि पराप्राणशक्तिर्देवता आं बीजंह्रींशक्तिःक्रोंकीलकं दोरकयोःश्रीमदनंतप्राणप्रतिष्ठापनेविनियोगः ॥ ॐआंह्रींक्रों अंयंरंलंवंशंषंसंहंळंक्षंअः क्रोंह्रींआं हंसः सोहं श्रीमदनंतस्यप्राणाइहप्राणाः ॥ ॐआंह्रीमित्यादिहंसःसोहं श्रीमदनंतस्यजीवइहस्थितः ॥ ॐआंह्रीमित्यादि श्रीमदनंत स्यसर्वेंद्रियाणि ॥ ॐ आंह्रींक्रोमित्यादि सर्वेंद्रियाणिवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहागत्यसुखंसुचिरंतिष्ठंतुस्वाहा ॐ असुनीते० १ चत्वारिवाक्० १ ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॐ १५ ॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणान्॥बिभ्राणासृक्कपालंत्रिनयनलसिता पीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ इतिप्राणप्रतिष्ठा ॥ अथध्यानं ॥ नवाम्रपल्लवाभासं पिंगभ्रूश्मश्रुलोचनं ॥ पीतांबरधरंदेवंसर्वाभरणभूषितं ॥ समुद्रालंकृतंदिव्यंकौस्तुभाद्यैर्विराजितं ॥ शंखचक्रगदापद्मलक्ष्मीगरुडशोभितं ॥ ध्यायाम्येतादृशंभक्तवत्सलंशेषशायिनं ॥ शांताकारं० मेघश्यामं० इतिध्यात्वावाह्यपूजयेत् ॥ ॐसहस्रशीर्षा० ॐहिरण्यवर्णां० ॥ आगच्छानंतदेवेशतेजोराशेजगत्पते ॥ इमांमयाकृतांपूजांगृहाणपुरुषोत्तम ॥ ॐनमो

[1] द्वादशार्णोमूलमंत्रोनंतपूजायांप्रशस्यते अतःसर्वोपचारेषुमूलमंत्रोत्रनिर्दिष्टवत्सर्वत्रप्रयोक्तव्यः ॥

भगवतेवासुदेवायश्रीमदनंतायनमःआवाहयामि ॥ अत्रचतुर्दशग्रंथिदेवतावाहनं ॥ तत्रादौपुंदोरके अनघायनमः अनघंआवाहयामि १ इतिसर्वत्र वामनाय० २ शौरये० ३ वैकुंठाय० ४ पुरुषोत्तमाय० ५ पद्मनाभाय० ६ हृषीकेशाय० ७ माधवाय० ८ मधुसूदनाय० ९ अच्युताय० १० अनंताय० ११ गोविंदाय० १२ कृष्णाय० १३ अपराजिताय० १४ ॥ अथस्त्रीदोरके मोहिन्यै० १ श्रियै० २ देव्यै० ३ पद्मिन्यै० ४ महाबलायै० ५ अजायै० ६ मंगलायै० ७ वरदायै० ८भगवत्यै० ९ अपराजितायै० १० जयायै० ११ विजयायै० १२ सुभद्रायै० १३ सर्वगायै० १४ इत्यावाह्य ॥ नमस्तेजगदाधार नमस्तेनंतमूर्तये ॥ नमस्तेदेवदेवेशपुराणपुरुषायते ॥ इतिनत्वा आगच्छभगवन्विष्णोस्थानेचात्रस्थिरोभव ॥ यावद्व्रतंसमाप्येततावत्त्वंसंनिधोभव ॥ क्रियमाणांमयापूजांगृहाणसुरसत्तम॥इतिसंप्रार्थ्य ॥ ॐपुरुषएवेदं० ॐतांमआवह० ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितं ॥ आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां ॥आसनं० ॥ ॐएतावानस्य० ॐअश्वपूर्वां०॥गंगादिसर्वतीर्थेभ्योजलमानीतमुत्तमं ॥ पाद्यार्थंदेवतेभक्त्यागृहाणपुरुषोत्तम ॥ ॐन० श्रीम० पाद्यं० ॥ ॐत्रिपादूर्ध्व०ॐकांसोस्मितां०॥ अनंतानंतदेवेशअनंतफलदायक ॥ नागेशानंतरूपोसिअर्घोयंप्रतिगृह्यतां ॥ ॐनमो० अर्घ्यं० ॥ ॐतस्माद्विराळ०॥ॐचंद्रांप्रभासां०॥गंगाजलंसुगंधाद्यैःसंस्कृतंकनकेस्थितं ॥ आचम्यतांहृषीकेशत्रैलोक्यस्याघनाशन ॥ ॐनमो० आचमनीयं० ॥ ॐयपुरुषेण० ॐआदित्यवर्णे०॥गंगाचयमुनाचैवगोदावरीसरस्वती ॥ तापीपयोष्णीरेवाचताभ्यःस्नानंकुरुप्रभो ॥ ॐनमो०मलापकर्षस्नानं० ॥ आपोहिष्ठेतितृचेनच ॥ अनंतसर्वकामानामधीशसर्वसौख्यद ॥ मधुपर्कंगृहाणेदंमयादत्तमधोक्षज ॥ मधुवाते

तिऋचः३ ॐन० मधुपर्कं० ॥ पयोदधिघृतक्षौद्रशर्कराभिरनुक्रमात् ॥ पृथक्संस्नापयेदेवंमूलमंत्रमनुस्मरन् ॥ ॐआप्यांय
स्व० ॥ सुरभेस्तुसमुत्पन्नंदेवर्षिपितृतृप्तिदं ॥ मयादत्तंपयोदेवस्नानार्थंप्रतिगृह्यतां० ॥ ॐन० श्रीम० पयःस्नानं० ॥ ॐदधिक्रा
व्णोअ० ॥ दध्नाचैवमहादेवस्नापनंक्रियतेमया ॥ गृहाणत्वंसुराधीशप्रसन्नोमांभवाव्यय ॥ ॐन० श्रीम० दधिस्नानं ॥ ॐघृतं
मिमिक्षे० ॥ सर्पिषाचजगन्नाथस्नापनंक्रियतेधुना ॥ गृहाणश्रद्धयानंततवप्रीत्यैमनोहरं ॥ ॐनमो० श्रीम० घृतस्नानं० ॥ ॐम
धुवाताऋ० ॥ इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच ॥ स्नातुंगृहाणदेवेशततःशांतिंप्रयच्छमे ॥ ॐन० मधुस्नानं० ॥ ॐस्वादुःपव
स्व० ॥ सितयाचसुरश्रेष्ठस्नापनंक्रियतेत्वयि ॥ तस्माद्भक्तपराधीनप्रसन्नोभवसर्वदा० ॐनमो० शर्करास्नानं० ॥ गंधोदकेनदेवे
शकुशपुष्पफलोदकैः ॥ रत्नांबुनाचशुद्धेनस्नापयामिपृथक्पृथक् ॥ ॐगंधद्वारां० ॥ कृष्णागरुप्रचुरकर्दमगंधसारकस्तूरिकाम
लकचर्चितरोचनाद्यैः ॥ त्वांकेशरैःसुरुचिरैश्चसुगंधवार्भिर्भक्त्यानिरंतरमहंस्नपयामिदेव ॥ ॐनमो० गंधोदकस्नानं० ॥ शरा
सःकुशरासइतिऋक् ॥ गोधूमदूर्वउशिराकुशपिंजुलैश्चकाशायवास्तुलसिवञ्जुलविल्वखंडैः ॥ अश्वत्थवल्वजशरांकुरलाजधान्यै
र्भक्त्यानिरंतरमहंस्नपयामिदेव ॥ ॐनमो० श्रीम० कुशोदक० ॥ ॐओषधीःप्रतिमोदध्वमितिऋक् ॥ कह्लारनीलकमलोत्पलपा
रिजातपुन्नागकैःकदलिचंपकपाटलैश्च ॥ विल्वप्रवालतुलसीशतपत्रजातीपुष्पैर्निरंतरमहंस्नपयामिदेव ॥ ॐन० पुष्पोदकस्ना
नं० ॥ खर्जूरपूगकदलीफलमातुलुंगदाडिंवकादिऋतुसंभवकैस्तथाच ॥ धात्रीफलैःसुरुचिरैश्चतथाचपक्वैर्भक्त्यानिरंतरमहंस्नपया
मिदेव ॥ ॐनमो० फलोदकस्नानं ॥ ॐसहिरत्नानीतिऋक् ॥ माणिक्यमुक्ताफलविद्रुमाद्यैर्गारुत्मकैःपुष्पकवज्रनीलैः ॥ गोमे

दकैःसंस्कृतचारुवार्भिर्भक्त्यानि० ॥ ॐनमो० रत्नोदकस्नानं० ॥ शुद्धोदकेनदेवेशस्वर्णकुंभाहृतेनच ॥ सर्वतीर्थोदकस्नानंगृ
हाणजगदीश्वर ॥ ॐनमो० शुद्धोदकस्नानं०॥पूर्वपूजांसमाप्यपुरुषसूक्तश्रीसूक्तविष्णुसूक्तादिभिर्महाभिषेकःकार्यः॥ॐनमो०
श्रीम० महाभिषेकः ॥ नखाग्रपातसंभूतसर्वदोषापनुत्तये ॥ अनंतशेषरूपत्वंगृहाणाचमनीयकं ॥ ॐनमो० आचमनीयं ॥
ऐश्वर्यपुत्रकामार्थधनधान्यसमृद्धये ॥ वास्तुवाहनसंभूततुष्टिपुष्टियशस्करं ॥ इतिदेवमभिषेकस्थानतउत्थाप्यशेषोपरिसंस्थाप
येत् ॥ तदस्तु० गृहावैप्रतिष्ठा० ॥ ॐतंयज्ञं० उपैतुमा०॥नवकांचनसंकाशंनिर्मलंमृदुलंशुभं॥ पीतांबरयुगंदेवदामोदरगृहाण
भो ॥ ॐनमो० वस्त्रयुग्मंस० ॥ आचमनं ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतं० ॐक्षुत्पिपासामलां०॥नारायणनमस्तुभ्यंत्राहिमां
भवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ ॐनमो० उपवीतं० ॥ आचमनं० ॥ तस्माद्यज्ञात्सर्वहुतऋचःसा० गंध
द्वारां० ॥कुंकुमागरुकर्पूरकुष्ठंरोचनसर्जकं ॥ जटामांसीमृगमदाविष्णोर्गंधाष्टकंविदुः॥मलयाचलसंभूतकस्तूरीकेशरान्वितं ॥
गंधंमनोहरंदेवअनंतप्रतिगृह्यतां ॥ ॐनमो० चंदनं० ॥ श्वेतान्कुंकुमसंयुक्तानुत्तमान्शालितंडुलान् ॥ गृहाणदेवदेवेशप्रस
न्नोभवतेनमः ॥ ॐनमो० अक्षतान्० ॥ केयूरहारमुकुटकुंडलेमेखलादिकं ॥ कौस्तुभंमुद्रिकादीनिअनंतप्रतिगृह्यतां ॥ ॐ
नमो० आभरणानि० ॥ ॐ तस्मादश्वा० ॐमनसःकाम० ॥ करवीरैर्जातिपुष्पैश्चंपकादिऋतूद्भवैः ॥ नानाविधैःसुकुसुमैःपू
जयामिरमापतिं॥ ॐनमो०श्रीम० यथालाभपुष्पाणि०॥ अहिरिवेत्यादिपरिमलद्रव्याणि ॥ लक्ष्म्यैसौभाग्यद्रव्याणिच ॥ अथ
नामपूजा ॥ ॐकारःसर्वत्रादौनामपूजासु ॥ ॐअनघाय० वामनाय० शौरये० वैकुंठाय० पुरुषोत्तमाय० पद्मनाभाय० हृषी

केशाय० माधवाय० मधुसूदनाय० अच्युताय० अनंताय० गोविंदाय० कृष्णाय० अपराजिताय० १४॥मोहिन्यै० श्रियै० देव्यै० पद्मिन्यै० महाबलायै० अजायै० मंगलायै० वरदायै० भगवत्यै० अपराजितायै० जयायै० विजयायै०सुभद्रायै०सर्वगायै० १४ ॥ अथांगपूजा० ॥ अनंतायनमः पादौपूजयामि ॥ संकर्षणाय० गुल्फौपू० ॥ कालात्मने० जंघेपू० ॥ विश्वरूपिणे० जानुनीपू० ॥ विश्वात्मने० ऊरूपू० ॥ जगत्पतये० कटिंपू० ॥ सर्वभूतात्मने० गुह्यंपू० ॥ पद्मनाभाय० नाभिंपू० ॥ दामोदराय० उदरंपू० ॥ परमात्मने० हृदयंपू० ॥ मुकुंदाय० स्तनौपू० ॥ चतुर्भुजाय०हस्तान्पू०॥सर्वास्त्रधारिणे०बाहूपू०॥ कंबुग्रीवाय० कंठंपू० ॥ वाचस्पतये० मुखंपू० ॥ कमलपत्राक्षाय० नेत्रेपू० ॥ केशवाय० ललाटंपू० ॥ सर्वात्मने०शिरःपू०॥ सर्वेश्वराय० सर्वांगंपूजयामि ॥ चंचलायै० पादौपू० ॥ चपलायै० गुल्फौपू० ॥ अजायै० जानुनी० ॥ कमलायै०कटिं० ॥ क्षेत्रज्ञायै० नाभिं० ॥ मन्मथवासिन्यै० स्तनौ० ॥ महाबलायै० बाहुद्वयं० ॥ उत्कंठायै० कंठं० ॥ श्रियै० मुखं० ॥ विजयायै० ललाटं ॥ भगवत्यै० शिरःपूज० ॥ सर्वेश्वर्यै० सर्वांगंपू० ॥ ॥ अथावरणपूजा ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० ब्रह्मणे० अनंताय० वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय०अंकुशाय० गदायै० त्रिशूलाय० अंबुजाय० चक्राय० ॥ दयाब्धेत्राहिसंसारसर्पान्मांशरणागतं ॥ भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं ॥ इत्यनंतायगंधंपुष्पंशंखोदकंचसमर्पयेदितिप्रत्यावरणं १ ॥ ध्रुवाय० अध्वराय० सोमाय० अब्भ्यो० अनिलाय०अनलाय० प्रत्यूषाय० प्रभासाय० ॥ दयाब्धेत्राहि० इतिद्वितीयावरणं २ ॥ वीरभद्राय० शंभवे० गिरिशाय० अजैकपदे० अहिर्बु

भ्याय० पिनाकिने० भुवनेश्वराय० कपिलाय० दिक्पतये० स्थाणवे० भवाय० ॥ दयाब्धेत्राहि० ३ ॥ धात्रे० विधात्रे० अ
र्यम्णे० मित्राय० अंशुमते० वरुणाय० इंद्राय० भर्गाय० विश्वतेजसे० पूष्णे० त्वष्ट्रे० विष्णवे० ॥ दयाब्धेत्राहि० ४॥ आदि
त्याय० सोमाय० भौमाय० बुधाय० गुरवे० शुक्राय० शनैश्चराय० राहवे० केतवे० ॥ दयाब्धेत्राहि० ५ ॥ वसंताय० ग्री
ष्माय० वर्षाभ्यो० शरद्भ्यो हेमंताय० शिशिराय० ॥ दयाब्धेत्रा० ६ ॥ मेषाय० वृषभाय० मिथुनाय० कर्काय० सिंहाय०
कन्यायै० तुलायै० वृश्चिकाय० धनुषे० मकराय० कुंभाय० मीनाय० ॥ दयाब्धे० ७ ॥ ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्ण
व्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० ॥ दयाब्धेत्राहि० ८॥ असितांगभैरवाय० रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय०
उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० ॥ दयाब्धेत्राहि० ९ ॥ मत्स्याय० कूर्माय० वराहाय०
नारसिंहाय० वामनाय० परशुरामाय० रामाय० कृष्णाय० बौद्धाय० कलंकिने० ॥ दयाब्धेत्राहि० १० ॥ दीप्तायै० सूक्ष्मा
यै० जयायै० भद्रायै० विभूत्यै० विमलायै० अमोघायै० विद्युतायै० विश्वतोमुख्यै० अनंतमुख्यै० ॥ दयाब्धेत्राहि० ११ ॥
मधवे० माधवाय० शुक्राय० शुचये० नभाय० नभस्याय० इषाय० ऊर्जाय० सहाय० सहस्याय० तपसे० तपस्याय० ॥ दया
ब्धेत्राहि० १२ ॥ लक्ष्म्यैनमः श्रियै० दुर्गायै० तुष्ट्यै० पुष्ट्यै० ऋद्ध्यै० शक्तये० कांत्यै० श्रीमहालक्ष्म्यै० ॥ दयाब्धेत्राहि० १३॥
शंखायुधाय० चक्रायुधाय० गदायुधाय० पद्मायुधाय० मुसलायुधाय० खड्गायुधाय० शार्ङ्गायुधाय० बाणायुधाय० ॥ दया
ब्धेत्राहि० १४ ॥ इतिचतुर्दशावरणानि ॥ अथपत्रपूजा ॥ अनंताय० तुलसीपत्रं० ॥ संकर्षणाय० भृंगराजपत्रं ॥ परमा

त्मने० जातीपत्रं०॥विश्वरूपिणे० अपामार्गपत्रं० ॥ विश्वनाथाय०त्रिल्वपत्रं० ॥ पद्मनाभाय० करवीरपत्रं०॥ महात्मने० शमीपत्रं० ॥ श्रीकंठाय० अर्जुनपत्रं० सर्वास्त्रधारिणे० धत्तूरपत्रं० ॥ वाक्पतये० विष्णुक्रांतपत्रं० ॥ केशवाय० दाडिमी पत्रं० सर्वात्मने० मातुलुंगप० ॥ महीधराय० देवदारुप० ॥ अच्युताय०मरुपत्रंसमर्पयामि १४ ॥ इतिपत्रपूजा ॥ अथ पुष्पपूजा०॥ अनंताय०पद्मपुष्पं०॥ विष्णवे०जातीपुष्पं०॥ शिष्टेष्टाय० करवीरपुष्पं० ॥ केशवाय० चंपकपुष्पं० ॥ अच्युताय० कह्लारपु० ॥ सहस्रजिते० केतकीपु० ॥ अनंतरूपाय० पारिजातकपुष्पं० ॥ इष्टाय०शतपु० ॥ विशिष्टाय० पुन्नागपु० ॥ शिखंडिने० धत्तूरपु० ॥ नहुपाय० नंद्यावर्तपु० ॥ विश्ववाहवे० मल्लिकापु०॥महीधराय०मालतीपु० ॥ श्रीकंठाय० कर्णिकापुष्पं० १४ इतिपुष्पपूजा ॥ ॥ अथाष्टोत्तरशतनामावलिः ॥ ॐ अनंतायनमः अच्युताय० अद्भुतकर्मणे० अमितविक्रमाय० अपराजिताय० अखंडाय० अग्निनेत्राय० अग्निवपुषे० अदृश्याय० अत्रिपुत्राय० ॥१०॥ अट्टहासाय० अनाकुलाय० अघनाशिने० अनघाय० अप्सुनिलयाय० अर्हाय० अष्टमूर्तये० अनिरुद्धाय०अनिर्विण्णाय०अचंचलाय० ॥ २० ॥ अष्टदिक्पालमूर्तये० अखिलमूर्तये० अव्यक्ताय० अरूपाय० अनंतरूपाय० अभयंकराय० अक्षराय० अभ्रवपुषे० अयोनिजाय० अरविंदाक्षाय० ॥ ३० ॥ अशनवर्जिताय० अधोक्षजाय० अत्रिपुत्राय० अंबिकापतिपूर्वजाय०अपस्मारनाशिने० अव्ययाय० अनादिनिधनाय० अप्रमेयाय०अघशत्रवे० अमरारिघ्ने० ॥४०॥ अमरविघ्नहंत्रे० अनीश्वराय० अजाय० अनादये० अमरप्रभवे० अग्राह्याय० अक्रूराय० अनुत्तमाय० अर्हे० अमोघाय० ॥५०॥ अक्षयाय० अमृताय०

अघोरवीर्याय० अन्यंगाय० अविघ्नाय० अतींद्रियाय० अमिततेजसे० अष्टांगन्यस्तरूपाय० अनिलाय० अवशाय० ॥६०॥ अणोरणीयसे० अशोकाय० अनूकूलाय० अमिताशनाय० अरण्यवासिने० अप्रमत्ताय० अनलाय० अनिर्देश्यवपुषे० अहोरात्राय० अमृत्यवेन० ॥ ७० ॥ अकारादिहकारांताय० अनिमिषाय० अस्त्ररूपाय० अग्रण्याय० अप्रथिताय० असंख्याय० अमरवर्याय० अन्नपतये० अमृतपतये० अजिताय० ॥८०॥ अपांनिधये० अपांपतये० असुरघातिने० अमरप्रियाय० अधिष्ठानाय० अरविंदप्रियाय० अरविंदोद्भवाय० अष्टसिद्धिदाय० अनंतशयनाय० अनंतब्रह्मांडपतये० ॥९०॥ अशिववर्जिताय० अतिभूषणाय० अविद्याहराय० अतिप्रियाय० अकल्मषाय० अकल्पाय० अब्दादिकाय० अचलरूपाय० अघोराय० अक्षोभ्याय० ॥१००॥ अलक्ष्मीशमनाय० अतिसुंदराय० अमोघौघाधिपतये० अक्षताय० अमितप्रभावाय० अवनीपतये० अर्चिष्मते० अपवर्गप्रदाय० ॥ १०८ ॥ इत्यष्टोत्तरशतनामावलिः ॥ अथपुष्पमालांसमर्पयेत् ॥ तत्रमंत्रः ॥ वनमालांसुगंधाढ्यांनानापुष्पैःसमन्वितां ॥ पूजार्थंसाधितांदेवप्रीत्यर्थंप्रतिगृह्यतां ॥ इतिमालासमर्पणं॥ ॐयत्पुरुषं० ॐकर्दमेन० ॥ दशांगंगुग्गुलंधूपंसुगंधंसुमनोहरं ॥ सर्वेषामुत्तमंधूपंगृहाणसुरपूजित ॥ ॐनमो० श्रीम० धूपं०॥ब्राह्मणोस्य० आपःसृजंतु०॥ अग्निर्ज्योतीरविर्ज्योतिरात्मज्योतिरयंहरिः ॥ दीपोयंदेवराजेंद्रप्रीत्यर्थंप्रतिगृह्यतां ॥ ॐनमो० श्रीम० दीपंस० ॥ ॐचंद्रमाम० आर्द्रांयःकरिणीं०॥अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नैवेद्यंगृह्यतांदेवप्रसादंकुरुसर्वदा ॥ ॐनमो० श्रीम० नैवेद्यंस० ॥ पानीयंशीतलंस्वच्छंवस्त्रपूतंसुगंधयुक् ॥ भक्त्यादत्तंगृहाणत्वमनंतफलदायक ॥ ॐनमो० श्रीम० पानीयं० ॥ उत्तरापोशनं०

हस्तप्रक्षालनं० मुखप्रक्षालनं० ॥ चंदनंमलयोद्भूतंकर्पूरादिसमन्वितं ॥ करोद्वर्तनकंदेवअनंतप्रतिगृह्यतां ॥ ॐनमो० श्रीम० करोद्वर्तनं० ॥ नालिकेरंमातुलिंगंकपित्थंकदलीफलं ॥ कूष्मांडंकर्कटीयुक्तंगृह्यतामखिलार्थद ॥ इदंफलंमयादेव० ॐनमो० श्रीम०महाफलं०॥पूगीफलंमहद्दिव्यं०ॐनमो०श्रीम०तांबूलं०॥अनंतगुणितांचैतांनानारत्नगुणैर्युतां॥ दक्षिणांगृह्यतांदेवयथाशक्तिनिवेदितां॥ हिरण्यगर्भ० ॐनमो० श्रीम० दक्षिणां०॥ ॐश्रियेजातः०॥ ज्ञानप्रकाशकंदेवगृहाणत्वंरमापते॥ नीराजनंसुमांगल्यंतिमिरस्यनिवारणं॥ ॐनमो० श्रीम० नीराजनदीपं०॥ ॐनाभ्यांआसीदं० ॐआर्द्रांपुष्करिणीं०॥ नमस्तेदेवदेवेशनमस्तेधरणीधर॥ नमस्तेसर्वनागेंद्रनमस्तेनंतमाधव॥ ॐनमो० श्रीम० नमस्कारान्०॥ ॐसप्तास्यासन्०॥ तांमआवह०॥ प्रदक्षिणत्रयंदेवप्रणामंचकरोम्यहं॥तेनपापानिसर्वाणिव्यपोहंतुममाच्युत॥ ॐनमो०श्रीम० प्रदक्षिणाः०॥ ॐयज्ञेनयज्ञ० यःशुचिःप्रयतोभूत्वा०॥देवदेवकृपासिंधोत्राहिमांभवसागरात्॥अपराधंक्षमस्वाद्यगृहाणकुसुमांजलिं॥राजाधिराजा० ॐनमो० मंत्रपुष्पं०॥ गीतंवाद्यंनृत्यंछत्रंचामरंदर्पणंआंदोलनंसर्वराजोपचारार्थेअक्षतान्०॥ अत्रस्तुत्यर्थंविष्णुसूक्तानिपुराणोक्तस्तोत्राणिचपठेत्॥ स्तुतिंकृत्वातद्विष्णोःपरमंपदमितिमंत्राभ्यांपुष्पांजलिंसमर्पयेत्॥ अथप्रार्थना॥ भुक्तिमुक्तिप्रदस्त्वंहिशरीरारोग्यदायक॥ सर्वपापहरानंतत्राहिमांभवसागरात्॥ नमस्तेदेवदेवेशदेवदेवजनार्दन॥ लोकनाथनमस्तेस्तुसर्वान्कामान्प्रयच्छमे॥ यथात्वंसर्वलोकानांनागादीनांचतक्षकः॥ तथामांत्राहिदेवेशत्वदंघ्रीशरणागतं॥ लक्ष्मीदेविनमस्तेस्तुसौभाग्यवरदायिनि॥ धनधान्यसुपुत्रादिदेहिमह्यंसुशोभने॥ ४॥ आवाहनंन० यस्यस्मृत्या० मंत्रहीनं० कायेनवाचा०॥ अनेनयथाशक्तिय

थाज्ञानेनयथामिलितोपचारैर्ध्यानावाहनादिषोडशोपचारैःकृतपूजनेनभगवान्श्रीमदनंतःप्रीयताम् ॥अथार्घ्यदानं॥नमःसर्व
हितानंतजगदानंदकारिणे ॥ सर्गस्थित्यंतरूपायगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदद्यात् ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ अथदोरक
ग्रहणं ॥ स्वीकरोमिनवंसूत्रंममविज्ञानदोभव ॥ दोररूपेणमांरक्षपुराणपुरुषोत्तम ॥ अनंतसंसारमहासमुद्रमग्नंसमभ्युद्धरवासु
देव ॥ अनंतरूपेविनियोजयस्वअनंतसूत्रायनमोनमस्ते ॥ इतिनमस्कृत्वाग्रहणंकार्यं ॥ अनंतसर्वदेवेशभुक्तिमुक्तिफलप्रद ॥
अनंताख्यमिदंसूत्रंधारयामितवप्रियं ॥ संसारगह्वरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्वाः॥ संपूज्यचत्रिभुवनेशम
नंतदेवंबध्नंतिदक्षिणकरेवरदोरकंते ॥इतिमंत्रेणअनंतदोरकंस्वदक्षिणकरेबध्वालक्ष्मीदोरकंपत्नीवामकरेबध्नीयात् ॥ अनंतगु
णरत्नायविश्वरूपधरायच॥सूत्रग्रंथिषुसंस्थायअनंतायनमोनमः ॥ इति ॥ अनंतःसर्वदेवानामधिपःसर्वकामदः ॥ व्रतेनानेन
सुप्रीतोभवत्विहसदामम ॥इतिनमस्कृत्य ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयानंतशरणागतवत्सल ॥ अ
द्यमेसफलंजन्मजीवितंचसुजीवितं ॥ यत्तवांघ्रियुगांभोजेमन्मूर्धाभ्रमरायते ॥नमस्तेदेवदेवायविश्वरूपधरायच ॥ जीर्णदोरं
परित्यज्यनूतनेऽस्मिन्वसप्रभो ॥इतिजीर्णदोरकोत्तारणं ॥ नमस्तेदेवदेवेशविश्वरूपधरायच॥ सूत्रग्रंथिषुसंतिष्ठअनंतायनमो
नमः ॥ इतिप्रार्थना॥ अथजीर्णदोरकविसर्जनं॥ अद्यपूर्वोच्चरित० जीर्णदोरकस्थश्रीमदनंतस्यगंधाद्युपचारैरुत्तरपूजांकरिष्ये
इतिसंकल्प्ययथावत्पूजांविधाय॥ विसर्जयामिदेवेशजीर्णदोरस्थितंपरं ॥ संपूर्णमेव्रतंचास्तुदेवदेवनमोस्तुते ॥ अधिष्ठायनवेऽ
न्यस्मिन्यतोऽनंतनिवेशितः॥ अतोजीर्णमधिष्ठानंविसर्जयरमापते ॥ संवत्सरकृतांपूजांसंपाद्यविधिवन्मया ॥ व्रजेदानीमनंत

त्वंस्वंलोकंहियदृच्छया ॥ संवत्सरकृतांपूजांगृहीत्वानंतविक्रम॥स्वस्थानंगम्यतांविष्णोत्राहिमांत्वमहर्निशं॥ न्यूनातिरिक्तानिप
रिस्फुटानियानीहकर्माणिमयाकृतानि ॥ क्षम्याणिचैतानिममक्षमस्वप्रयाहितुष्टःपुनरागमाय ॥ इतिजीर्णदोरकविसर्जनं ॥
अथदोरकदानं ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंब्राह्मणपूजनंतस्मैअनंतदोरकदानंवायनदानंचकरिष्ये ॥ विप्रंसंपूज्य॥अनंतानं
तदेवेशअनंतफलदायक ॥ अनंतानंतरूपायअनंतायनमोनमः ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ त्वत्प्रसादादहंविप्रमु
च्येयंकर्मबंधनात् ॥ अनंतःप्रतिगृह्णातिअनंतोवैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ॥ सुपक्वान्सफलान्साज्या
न्पुंनाम्नोघृतपाचितान् ॥ अनंतायप्रदास्यामिप्रसन्नोवरदोस्तुमे ॥ सधान्यंसफलंपक्वंजीर्णदोरसमन्वितं ॥ सदक्षिणंद्विजेंद्रायद
दाम्यनंततुष्टये ॥ देवस्यत्वा० विप्रायवेदवि० एतद्वायनंसफलंसधान्यंश्रीमदनंतजीर्णदोरकसहितंसदक्षिणाकंतुभ्यमहंसंप्रदद
नमम ॥ अनेनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयताम् ॥ कर्मणःसांगतासिद्ध्यर्थंब्राह्मणसमाराधनंकरिष्ये तेभ्योभूयसींदक्षिणां
दातुमहमुत्सृज्ये ॥ श्रीमदनंतार्पणमस्त्वितिकर्मेश्वरार्पणंकृत्वासुहृद्युतोभुंजीत ॥ इतिअनंतव्रतपूजाविधिः ॥ ॥छ॥

॥४८॥ शारदनवरात्रपूजा ॥ कर्ताप्रातःकृतनित्यक्रियःपूजांगत्वेनसंकल्पपूर्वंशुक्लतिलैःस्नात्वापरिहितधौतवासाःकुंकु
मचंदनादिकृतपुंड्रोबद्धशिखःपूर्वाह्णेदशघटीमध्येऽभिजिन्मुहूर्तेवापीठेपत्न्यासहप्राङ्मुखउपविश्याचमनादिदेशकालकीर्तनांते
अमुकगोत्रस्यामुकशर्मणःसकुटुंबस्यसपरिवारस्यत्रिगुणात्मकश्रीदुर्गाप्रीतिद्वारा सर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यस
मृद्धिपुत्रपौत्राद्यविच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीःकीर्तिलाभशत्रुपराजयविद्याविजयविविधश्रेयःसंपदाद्यभीष्टसिद्ध्यर्थं अद्यार

ध्यनवमीपर्यंतंप्रत्यहमुपवासादिनियमोपेतःश्रीमहाकालीमहालक्ष्मीमहासरस्वतीनवदुर्गापूजनमालाबंधनाखंडदीपप्रज्वालन (वलिदानचंडिकास्तोत्रपाठतन्मन्त्रजपकुमारीपूजन) ब्राह्मणसुवासिनीभोजनादिविविधनियमरूपंशारदनवरात्रमहोत्सवंकरिष्ये॥(संकल्पेन्यदपिकुलाचारानुसारेणयथायथमूहनीयं॥)तदंगत्वेनप्रतिपदिविहितंकलशस्थापनादिकरिष्ये ॥ गणेशंसंपूज्य स्वस्तिवाचनाद्यंतेआसनविधिंभूशुद्ध्यादिन्यासांश्चकरिष्ये ॥ ॥ अथासनविधिर्न्यासाश्च ॥ यथा ॥ आसनाधोजलादिनात्रिकोणंविलिख्य ॐह्रींआधारशक्तिकमलासनायनमः इत्याधारशक्तिंसंपूज्य तदुपर्यनुद्विग्नताकरंकुशकंवलाद्यन्यतममासनमास्तीर्य ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसनेविनियोगः॥ॐपृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ इतिमंत्रेणाधारशक्तिंसंप्रार्थ्य ॥ ॐभूर्भुवःस्वःइत्यासनंसंप्रोक्ष्य तदुपरिप्राङ्मुखउदङ्मुखो वाउपविश्य ॥ ॐअनंतासनायनमः ॥ कूर्मासनायनमः ॥ विमलासनायनमः ॥ पद्मासनायनमः ॥ योगासनायनमः ॥ आधारशक्त्यैनमः ॥ दुष्टविद्रावणनृसिंहासनायनमः मध्येपरमसुखासनायनमः इतिनत्वा ॥ ॐऊर्ध्वकेशिविरूपाक्षिमांसशोणितभक्षणे ॥ तिष्ठदेविशिखावंधेचामुंडेह्यपराजिते ॥ इतिमंत्रेणशिखामाबध्य ॥ ॥ अथवाह्यभूतशुद्धिः ॥ अपसर्पंत्वित्यस्यभूतान्यनुष्टुप् भूतोत्सारणेवि० ॥ ॐअपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं॥ सर्वेषामविरोधेनपूजाकर्मसमारभे ॥ इतिभूतान्युत्सार्य ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिभैरवाज्ञांगृहीत्वा ॥ ॥ अथस्थलशुद्धिः ॥ देवतामंडपंचतुर्द्वारंवि

चिंत्य ॥ ॐअंतरितंरक्षोंतरिताअरातयःहुंफट्इतिमंडपांतःअक्षतान्क्षिप्त्वा ॥ वामतो गुंगुरुभ्योनमः ॥ दक्षिणतो भंभद्र काल्यैनमः ॥ उपरिष्टात् गंगणपतयेनमः ॥ इतिद्वारदेवताःसंपूज्य ॥ ॥ अथविघ्नोत्सारणंआत्मरक्षणंच ॥ यथा ॥ मूलंप ठन्दिव्यदृष्ट्यवलोकनेनदिव्यान्विघ्नानुत्सारयामि ॥ ॐफडितिप्रोक्षणेनांतरिक्षान्विघ्नानुत्सारयामि ॥ ॐफडितिवामपादपा र्ष्णिघातेनभौमान्विघ्नानुत्सारयामि ॥ ॐअस्त्रायफट्इतितालत्रयेणदिग्बंधनंकृत्वा ॥ ॐनमःसुदर्शनायअस्त्रायफट्इतिमंत्रे णछोटिकयावह्निप्राकारत्रयंविभाव्यभूशुद्ध्यादीनिकुर्यात् ॥ ॥ अथभूशुद्धिः ॥ गायत्र्याप्राणानायम्य हुंइतिबीजेनकुंडलि नीमुत्थाप्य हृदिस्थंदीपकलिकाकारंजीवं ॐहंसःइतिमंत्रेणब्रह्मणिसंयोज्य स्वदक्षिणकुक्षिस्थंपापपुरुषंध्यात्वा यंइति १६ षोड शवारोच्चारितवायुबीजेनपिंगलयापूरकेणतंपापपुरुषंशोषयित्वा कुंभके रंइति ६४ चतुःषष्टिवारोच्चारितवह्निबीजेनतंदग्ध्वापु नःयंइति ३२ द्वात्रिंशद्वारोच्चारितवायुबीजेनतद्भस्मइडयारेचयेत् ॥ ब्रह्मरंध्रगतेचंद्रमंडलेऽमृतवर्षिणीं ॥ भवानींभूमिशुद्ध्य र्थंभावयेदमृतेश्वरीं ॥ ततस्तन्मौलिनिष्पंदसुधाकल्लोलवृष्टिभिः ॥ चिंतयेन्मनसात्मानंभूमिशुद्धिरियंभवेत् ॥ इतिसंक्षेपतोभू शुद्धिः ॥ ॥ अथभूतशुद्धिः ॥ इडयावायुमापूर्यकुंभकेलंवंरंयंहंइतिपंचभूतबीजानिसकृदावर्त्यपिंगलयारेचयेत् ॥ ततोवमि त्यमृतबीजेनप्राणायामंकृत्वा सद्यासनात्मकंदेवीशरीरमुत्पाद्यसोहंइतिमंत्रेणकुंडलिनींब्रह्मणोवहृत्यतत्रस्थंजीवंहृदिनिधायकुं डलिनींमूलाधारगतांविभावयेदितिसंक्षेपतोभूतशुद्धिः ॥ ॥ अथप्राणप्रतिष्ठा ॥ हृदिहस्तंदत्वा ॐआंह्रींक्रोंममप्राणाइहप्राणाः ॥ ॐआंह्रींक्रोंममजीवइहस्थितः ॥ ॐआंह्रींक्रोंममसर्वेंद्रियाणि ॥ ॐआंह्रींक्रोंममवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहा

गत्यसुखंसुचिरंतिष्ठंतुस्वाहा॥ॐअसुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानः स्वस्ति ॥ ममगर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॥ ॐ १५वारं ॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचवाणान् ॥ विभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवी वालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ सुप्रतिष्ठितमस्तु ॥ इतिसंक्षेपेणप्राणप्रतिष्ठा ॥ ॥ अथमातृकान्यासोयथा॥अंजलिंवध्वा अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंवंभंमं यंरंलंवंशंपंसंहंळंक्षं इतिमातृकावीजान्यंजलिगतानिविभाव्य मूर्धादिपादांतंत्रिर्न्यसेदितिसंक्षेपः ॥ सहस्रशीर्षाषोळशनारायणःपौरुषमानुष्टुभंत्रिष्टुत्रंतं शरीरशुध्यर्थेन्यासेपूजायांचविनि० ॥ पौरुषंन्यस्य ॥ श्रीसूक्तन्यासः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयः श्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभःचतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्यावृहतीव्यंजनानिवीजानिस्वराःशक्तयःविंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेपूजायांचविनियोगः ॥ ॐहिरण्यवर्णां० मूर्ध्नि ॥ तांमआवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितां० नासिकायां ॥ चंद्रांप्रभासां० मुखे० ॥ आदित्यवर्णे० कंठे॥ उपैतुमां० वाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥ मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु० ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं० जंघयोः ॥ तांमआवह० पादयोः यःशुचिःप्र० सर्वांगे ॥ अथांगुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायै० तर्जनीभ्यां० ॥ रजत

स्रजायै० मध्यमाभ्यां० ॥ चंद्रायै० अनामिकाभ्यां० ॥ हिरण्मय्यै० कनिष्ठिकाभ्यां० ॥ लक्ष्म्यै० करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ ( अथमूलषडंगन्यासः ॥ अस्यश्रीनवार्णमंत्रस्य ब्रह्मविष्णुरुद्राऋषयः गायत्र्युष्णिगनुष्टुभश्छंदांसि श्रीमहाकालीमहालक्ष्मीमहासरस्वत्योदेवताः नंदाशाकंभरीभीमाःशक्तयः रक्तदंतिकादुर्गाभ्रामर्योबीजानि अग्निवायुसूर्यास्तत्वानि श्रीजगदंबाप्रीत्यर्थेन्यासेपूजायांचविनियोगः ॥ ॐऐंअंगुष्ठाभ्यांनमः ॥ ॐह्रींतर्जनीभ्यांनमः ॥ ॐक्लींमध्यमाभ्यांनमः ॥ ॐचामुंडायैअनामिकाभ्यांनमः ॥ ॐविच्चेकनिष्ठिकाभ्यांनमः ॥ ॐऐंह्रींक्लींचामुंडायैविच्चे करतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥ ततोऽक्षरन्यासः ॐऐंनमः शिखायां ॥ ॐह्रींनमः दक्षिणनेत्रे ॥ ॐक्लींनमः वामनेत्रे ॥ ॐचांनमः दक्षिणकर्णे ॥ ॐमुंनमः वामकर्णे ॥ ॐडांनमः दक्षिणनासायां ॥ ॐयैंनमः वामनासायां ॥ ॐविंनमः मुखे ॥ ॐच्चेंनमः गुह्ये ॥ एवंविन्यस्याष्टवारंमूलमंत्रेणव्यापकंकुर्यात् ॥ अथाङ्गन्यासः ॥ ॐऐंप्राच्यैनमः ॥ ॐऐंआग्नेय्यैनमः ॥ ॐह्रींदक्षिणायैनमः ॥ ॐह्रींनैर्ऋत्यैनमः ॥ ॐक्लींप्रतीच्यैनमः ॥ ॐक्लींवायव्यैनमः ॥ ॐचामुंडायै उदीच्यैनमः ॐविच्चेईशान्यैनमः ॥ ॐऐंह्रींक्लींचामुंडायैविच्चे ऊर्ध्वायैनमः ॥ ॐऐंह्रींक्लींचामुंडायैविच्चेभूम्यैनमःइति॥) ततोनित्यवत्कलशादिदीपपूजांतेअपवित्रइतिसंभारान्प्रोक्षेत्॥ ततोघटस्थापनंतत्रप्रधानदेवतानांघटेस्थापनपक्षेस्वपुरतःमध्येएववेदिंकृत्वातदुपरिस्थापयेत्॥ अथवाकलशभिन्नासनेप्रधानदेवतास्थापनपक्षेमुख्यदेवतादक्षिणभागेवेदिंकृत्वातदुपरिस्थापयेत्॥ ॐमहीद्यौरितिभूमिंस्पृष्ट्वा ओषधयःसमितियवान्निक्षिप्यआकलशेष्वितिकुंभंसंस्थाप्य इमंमेगंगेइतिजलेनापूर्य गंधद्वारामितिगंधयाओषधीरितिसर्वौष

धीः कांडात्कांडादितिदूर्वानिक्षिप्य अश्वत्थेवइतिपंचलवान् स्योनापृथिवीभवेतिसप्तमृदः याः फलिनीरितिफलं सहिरत्नानी
तिपंचरत्नानि हिरण्यरूपइतिहिरण्यं क्षिप्त्वा युवासुवासाइतिवस्त्रेणसूत्रेणवावेष्ट्य तदुपरिपूर्णादर्वीतिपूर्णपात्रंनिधाय ततःकुंभे
तत्त्वायामीतिवरुणमावाह्यपंचोपचारैःपूजयेत् ॥ ततःकलशाधःकृतवेद्युपरि ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानः
शर्मसप्रथः॥इतिमृदंविकीर्य तदुपरि ॥ ॐयेनंतोकायतनयायधान्यं१वीजंवहध्वेअक्षितं॥ अस्मभ्यंतद्धत्तनयद्वईमंहेराधोविश्व
युसौभगं॥इतिधान्यंविकीर्य॥ॐपर्जन्यायप्रगायतदिवस्पुत्रायमीढुषे॥ सनोयवसमिच्छतु ॥ इतिजलंसिक्त्वा ॥ ॐवर्षंतुते
विभावरिदिवोअभ्रस्यविद्युतः॥ रोहंतुसर्ववीजान्यवब्रह्मद्विषोजहि॥इतिप्रार्थ्य॥घटंप्रार्थयेत् ॥ देवदानवसंवादेमथ्यमानेमहो
दधौ॥उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं ॥ त्वत्तोयेसर्वतीर्थानि देवाःसर्वेत्वयिस्थिताः॥त्वयितिष्ठंतिभूतानित्वयिप्राणाः
प्रतिष्ठिताः॥शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतः
कामफलप्रदाः ॥ त्वत्प्रसादादिमांपूजांकर्तुमीहेजलोद्भव ॥ सांनिध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥ आगच्छवरदेदेविदैत्यदर्पनि
षूदनि ॥ पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये ॥ सर्वतीर्थमयंवारिसर्वदेवसमन्वितं ॥ इमंघटंसमागच्छसांनिध्यमिहकल्पय ॥
इतिप्रार्थना ॥ ततःघृतदीपस्थापनपक्षेदेवीदक्षिणतःस्थाप्यःतैलदीपस्थापनपक्षेदेवीवामतःउभयस्थापनपक्षेउभयत्र ॥ ॐ ऐंह्रीं
श्रींवास्तुपुरुषायनमः इतिगंधादिनास्थलंसंपूज्य तत्रगंधजलादिनात्रिकोणंविरच्य दीपाधारयंत्रंगंधादिनासंपूज्यतदुपरिघृतपू
र्णंतैलपूर्णंवापात्रंसंस्थाप्यदीपंप्रज्वाल्य ॐ ऐंह्रींश्रींदीपायनमःइतिपंचोपचारैःसंपूज्यप्रार्थयेत् ॥ अखंडदीपकंदेव्याःप्रीतयेनव

रात्रकं ॥ उज्ज्वालयेअहोरात्रमेकचित्तोदृढव्रतः ॥ अस्मिन्क्षेत्रेदीपनाथनिर्विघ्नसिद्धिहेतवे ॥ लक्ष्मीयंत्रस्यपूजार्थमनुज्ञादातुमर्हसि ॥ इतिसंप्रार्थ्यघटेआसनांतरेवायथाकुलाचारंपीठंपूजयेत् ॥ तच्चेत्थं ॥ ॐ आधारेमंमंडूकायनमः कालाग्निरुद्राय० मूलप्रकृत्यै० आधारशक्त्यै० कूर्माय० अनंताय० वराहाय० पृथिव्यै० क्षुधासमुद्राय० रत्नद्वीपाय० सुवर्णद्वीपाय० नंदनोद्यानाय० मणिमंडपाय० सुवर्णमंडपाय० सुवर्णवेदिकायै० रत्नसिंहासनाय० धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० ॥ पूर्वादिदिक्षु अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० अनंताय० पद्माय० अंअर्कमंडलाय० उंसोममंडलाय० मंवह्निमंडलाय० संसत्वाय० रंरजसे० तंतमसे० अंआत्मने० अंअंतरात्मने० पंपरमात्मने० ह्रींज्ञानात्मने० मायातत्त्वाय० कालतत्त्वाय० विद्यातत्त्वाय० परतत्त्वाय ॥ अथाष्टदलेषुकर्णिकायांनवशक्तीर्विभावयेत् ॥ पूर्वादिप्रादक्षिण्येन इच्छायै० ज्ञानायै० क्रियायै० कामिन्यै० कामदायिन्यै० रत्यै० रतिप्रियायै० नंदायै० मनोन्मनायै० मध्येमहाकालीमहालक्ष्मीमहासरस्वतीभ्योनमः इतिपुष्पाक्षतैर्वापूजयेत् ॥ ततोगणपतिचतुष्टयं ॥ गणानांत्वेतिईशान्यां गणपतिं ॥ जज्ञानंसप्तइतिआग्नेय्यांमातृः ॥ जातवेदसेइतिनैर्ऋत्यांदुर्गां क्षेत्रस्यपतिनाइतिवायव्यांक्षेत्रपालं ॥ पूर्वादिदिक्षुपूर्वेइंद्रत्वा० इंद्रं आग्नेयेअग्निंदूतं० अग्निं दक्षिणेयमायसो० यमं नैर्ऋत्येमोषुणःपरा० नैर्ऋतिं पश्चिमेत्वंनोअग्ने० वरुणं वायव्येतववाय० वायुं उदीच्यांसोमोधेनुं० सोमं ईशान्यांतमीशानं० ईशानंइति पीठदेवताआवाह्यसंपूज्य तदुपरिवस्त्रादौशक्तिगंधाष्टकेनकुंकुमेनवायंत्रंविलिखेत् ॥ तदित्थं ॥ विंदुंत्रिकोणषट्कोणाष्टकोणद्वादशदलमिति ॥ तत्रत्रिकोणाद्बहिःषट्कोणांतःनवकोष्ठंविलिख्यतत्रप्रधानदेवताःस्थापयेत् ॥ तदित्थं ॥



॥ ४८ ॥

॥ ५९ ॥

त्रिखंडमुद्रयापुष्पंगृहीत्वास्वहृदिस्थांतेजोमयींदेवतांसंचिंत्यपुनस्तांमहाकालीमहालक्ष्मीमहासरस्वतीरूपेणविभाव्यब्रह्मरंध्रेण
नासाद्वाराउच्छ्वासनेनपुष्पेसमानीय ॥ध्यानं॥ अरुणकमलसंस्थातद्रजःपुंजवर्णाकरकमलधृतेष्टाभीतियुग्मांबुजाच॥मणिमुकु
टविचित्रालंकृताकल्पजालैर्भवतुभुवनमातासंततंश्रीःश्रियैनः ॥ चतुर्भुजांत्रिनेत्रांचवरदाभयपाणिकां ॥ रक्तांबरधरांदेवींदि
व्यरूपांनमाम्यहं ॥ अक्षस्रक्परशूगदेषुकुलिशंपद्मंधनुःकुंडिकांदंडंशक्तिमसिंचचर्मजलजंघंटांसुराभाजनं ॥ शूलंपाशसुदर्शने
चदधतींहस्तैःप्रवालप्रभांसेवेसैरिभमर्दिनीमिहमहालक्ष्मींसरोजस्थितां ॥ इतिमहालक्ष्मींध्यात्वातत्पुष्पंमध्यकोष्ठस्थत्रिकोणेसं
स्थापयेत् ॥एवं ॥खड्गंचक्रगदेषुचापपरिघान्शूलंभुशुंडींशिरःशंखंसंदधतींकरैस्त्रिनयनांसर्वांगभूषावृतां॥ नीलाश्मद्युतिमास्यपा
ददशकांसेवेमहाकालिकांयामस्तौत्स्वपितेहरौकमलजोहंतुंमधुंकैटभं॥इतिध्यात्वामहालक्ष्मीदक्षिणकोष्ठेमहाकालीमावाहयेत् ॥
एवं ॥ घंटाशूलहलानिशंखमुसलेचक्रंधनुःसायकंहस्ताब्जैर्दधतींघनांतविलसच्छीतांशुतुल्यप्रभां ॥गौरीदेहसमुद्भवांत्रिजगतामा
धारभूतांमहापूर्वामत्रसरस्वतीमनुभजेशुंभादिदैत्यार्दिनीं ॥ इतिध्यात्वामहालक्ष्मीवामकोष्ठेमहासरस्वतीमावाहयेत् ॥एवमेवम
ध्यकोष्ठेमहालक्ष्मीपुरतआरभ्यतत्तन्मंत्रैर्नवदुर्गाःध्यात्वामहालक्ष्मीपरितआवाहयेत् ॥ तेमंत्राश्चयथा ॥ जगत्पूज्येजगद्वंद्येसर्व
शक्तिस्वरूपिणि ॥ पूजांगृहाणकौमारिजगन्मातर्नमोस्तुते ॥ शैलपुत्र्यैनमः शैलपुत्रींआवाहयामि० ॥ त्रिपुरांत्रिगुणाधारांमा
र्गज्ञानस्वरूपिणीं ॥ त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहं ॥ ब्रह्मचारिण्यै० २ ॥ कालिकांतुकलातीतांकल्याणहृदयांशिवां ॥
कल्याणजननींनित्यंकल्याणींपूजयाम्यहं ॥ चंद्रघंटायै० ३ ॥ अणिमादिगुणोदारांमकराकारचक्षुषं ॥ अनंतशक्तिभेदांतांका

माक्षींपूजयाम्यहं ॥ कूष्मांडायै० ४ ॥ चंडवीरांचंडमायांचंडमुंडप्रभंजिनीं ॥ तांनमामिचदेवेशींचंडिकांपूजयाम्यहं ॥ स्कंद
मात्रेनमः ५ ॥ सुखानंदकरींशांतांसर्वदेवैर्नमस्कृतां ॥ सर्वभूतात्मिकांदेवींशांभवींपूजयाम्यहं ॥ कात्यायन्यैनमः ६ ॥ चंड
वीरांचंडमायांचंडमुंडप्रभंजिनीं ॥ तांनमामिचदेवेशींगायत्रींपूजयाम्यहं ॥ कालरात्र्यैन० ७॥ सुंदरींस्वर्णवर्णांगींसुखसौभा
ग्यदायिनीं ॥ संतोषजननींदेवींसुभद्रांपूजयाम्यहं ॥ महागौर्यै० ८॥ दुर्गमेदुस्तरेकार्येभयदुर्गविनाशिनीं ॥ पूजयामिसदाभ
क्त्यादुर्गांदुर्गार्तिहारिणीं ॥ सिद्धिदायै० ९॥ इत्यावाह्य (अथवाप्रकारांतरेणकुलाचारानुरूपंदुर्गाध्यानं ॥ विद्युद्दामसमप्रभां
मृगपतिस्कंधस्थितांभीषणांकन्याभिःकरवालखेटविलसद्धस्ताभिरासेवितां ॥ हस्तैश्चक्रदरालिखेटविशिखांश्चापंगुणंतर्जनींवि
भ्राणामनलात्मिकांशशिधरांदुर्गांत्रिनेत्रांभजे॥इतिमहालक्ष्मीस्थानेदुर्गांध्यात्वाआवाहयेत्) ॥ श्रीमहाकालीमहालक्ष्मीमहास
रस्वतीत्रिगुणात्मिकांनवदुर्गांध्यायामि ॥ हिरण्यवर्णां० सहस्रशीर्षा०॥तप्तकांचनसंकाशांमुक्ताभरणभूषितां ॥ रत्नसिंहासना
सीनांवंदेतांवैमहेश्वरीं ॥ आवाहनं० तांमआवह० पुरुषएवेदं० ॥ खड्गशूलगदाहस्तामभयंदधतींकरैः ॥ गजारूढांमहादेवीं
सर्वैश्वर्यप्रदायिनीं ॥ आसनं० ॥ अश्वपूर्वां० एतावान०॥ विद्याधरींमहादेवींपद्माभांलोकनायकां ॥ सर्वैश्वर्यप्रदांदेवींमहाल
क्ष्मींप्रपूजये ॥ पाद्यं० ॥ कांसोस्मितां० त्रिपादूर्ध्व०॥ दधिदूर्वाक्षतायुक्तंगंगातोयसमन्वितं ॥ अर्घ्यंगृहाणभोदेविमयाभक्त्या
निवेदितं ॥ अर्घ्यं० ॥ चंद्रांप्रभासां०तस्माद्वि० ॥ नानारत्नप्रभांदेवींनानागणसमन्वितां ॥ नारायणींमहालक्ष्मींवंदेतांविष्णुव
ल्लभां॥ आचम० ॥ आदित्यवर्णे०यत्पुरुषेणह० ॥ आपोहिष्ठेतिमलापकर्षस्नानं ॥ ततःपंचामृतंआप्यायस्वेत्यादिमंत्रैःपौराणैश्च

पृथक्कार्यं ॥ दधिमध्वाज्यसंयुक्तशर्कराभिःसमन्वितं ॥ गंगोदकंसमानीतंत्वंगृहाणसुरेश्वरि ॥ गंधद्वारां० इतिगंधोदकं ॥ कनि
क्रदत् ० इतिमांगलिकस्नानं॥पूर्वपूजांसमाप्य ततःश्रीसूक्तेनपुरुषसूक्तेनचाभिषेकंकुर्यात् ॥आचमनं॥उपैतुमां०तंयज्ञंबर्हिषि०॥
मुक्तामणिगणस्पर्शस्फुरत्कंचुकमुत्तमं ॥ पीतांबरंसोत्तरीयंगृहाणपरमेश्वरि ॥ वस्त्रं० ॥ आचमनं० ॥ क्षुत्पिपासा० तस्मा
द्यज्ञात्सर्वहुतःसंभृतं० ॥ नानासिद्धिप्रदांदेवींनानागुणविवर्धिनीं ॥ नानासूत्रधरांदेवींसर्वलोकमहेश्वरीं ॥ उपवस्त्रं० ॥
तप्तकांचनसंकाशांमहालक्ष्मींवरप्रदां ॥ नानाभरणशोभाढ्यांवंदेतांवरदासनां ॥ कंचुकीं सर्वाभरणानिच० ॥ महागुणसमायु
क्तंनानामणिसमन्वितं ॥ कंठसूत्रंमयानीतंगृहाणभक्तवत्सले॥कंठसूत्रं० ॥ गंधद्वारां० तस्माद्यज्ञात्सर्वहुतऋचः० ॥ चंदनागरुक
र्पूरकुंकुमारोचनैस्तथा ॥ कस्तूर्यादिसुगंधंचसर्वांगेषुविलेपये ॥ गंधं० ॥ अक्षतान्निर्मलान्शुद्धान्मुक्तामणिसमप्रभान् ॥ गृहा
णेमान्महादेविदेहिमेनिर्मलांधियं ॥ अक्षतान्० हरिद्रां० कुंकुमं० सिंदूरं० कज्जलं० ॥ मनसःकाम०तस्मादश्वा०॥ मंदारपारि
जातादिपाटलीकेतकानिच ॥ जातीचंपकपुष्पाणिगृहाणेमानिशोभने ॥ पुष्पाणि० ॥ पद्मशंखजपुष्पादिशतपत्रैर्विचित्रितां ॥
पुष्पमालांप्रयच्छामिगृहाणत्वंसुरेश्वरि ॥ पुष्पमालां० ॥ दूर्वादलश्यामलेत्वंमहीरूपेहरिप्रिये ॥ अतोदूर्वाभिर्भवतींपूजयामिस
दाशिवे ॥ दूर्वांकुरान् ॥ अमृतोद्भवःश्रीवृक्षोमहादेवप्रियःसदा ॥ बिल्वपत्रंप्रयच्छामिपवित्रंतेसुरेश्वरि ॥ बिल्वपत्रं०॥ उग्र
द्वारेचोग्रमयिदुष्टासुरनिबर्हिणि ॥ पूजांकरोमिचार्वंगिपल्लवैर्नंदनोद्भवैः ॥ पल्लवान्० ॥ शरत्कालेसमुद्भूतांनिशुंभेमर्दितेत्व
या ॥ फलमालांवरांदेविगृहाणसुरपूजिते ॥ फलमालां० ॥ ॥ अथांगपूजा ॥ दुर्गायैनमः पादौपूजयामि ॥ महाकाल्यै०

गुल्फौ० ॥ मंगलायै० जानुद्वयं० ॥ कात्यायन्यै० ऊरू० ॥ भद्रकाल्यै० ॥ कटिं० ॥ कमलवासिन्यै० नाभिं० ॥ शिवायै० उदरं० ॥ क्षमायै० हृदयं० ॥ कौमार्यै० स्तनौ० ॥ उमायै० हस्तौ० ॥ महागौर्यै० दक्षिणबाहुं० ॥ वैष्णव्यै० वामबाहुं० ॥ रमायै० स्कंधौ० ॥ स्कंदमात्रे० कंठंपू० ॥ महिषमर्दिन्यै० नेत्रे० ॥ सिंहवाहिन्यै० मुखंपू० ॥ महेश्वर्यै० शिरः० ॥ कात्यायन्यै० सर्वांगंपूजयामि ॥ अथावरणपूजा ॥ महालक्ष्मीपश्चिमकोष्ठे स्वरयासहविरिंचयेनमः स्वरयासहविरिंचिश्रीपादुकां पूजयामि ॥ तद्दक्षिणकोष्ठे गौर्यासहरुद्रायनमः गौर्यासहितरुद्रश्रीपादुकांपू० ॥ वामकोष्ठे लक्ष्म्यासहहृषीकेशायनमः लक्ष्म्यासहहृषीकेशश्रीपादुकांपू० ॥ महालक्ष्मीपुरःकोष्ठेअष्टादशभुजायैनमः अष्टादशभुजाश्रीपादुकां० ॥ तद्वामकोष्ठे दशाननायैनमः दशाननाश्रीपादुकांपू० ॥ दक्षिणकोष्ठे अष्टभुजायै० अष्टभुजाश्रीपा० ॥ अभीष्टसिद्धिंमेदेहिशरणागतवत्सले ॥ भक्त्या समर्पयेतुभ्यंप्रथमावरणार्चनं ॥ १ ॥ प्रथमावरणार्चनेनश्रीमहालक्ष्मीःप्रीयतां ॥ षट्कोणेमहालक्ष्मींपूर्वकोणमारभ्ययथाक्रमं ऐंहृदयायनमः हृदयश्रीपादुकांपू० ॥ ह्रींशिरसेस्वाहा शिरःश्रीपा० ॥ क्लींशिखायैवषट् शिखाश्रीपा० ॥ चामुंडायैकवचायहुं कवचश्रीपा० ॥ विच्चेनेत्रत्रयायवौषट् नेत्रत्रयश्रीपा० ॥ ऐंह्रींक्लींचामुंडायैविच्चेअस्त्रायफट् अस्त्रश्रीपा० ॥ तत्रैवमहालक्ष्मीपुरःकोणमारभ्य हिरण्यायै० हिरण्याश्रीपा० ॥ चंद्रायै० चंद्राश्रीपा० ॥ रजतस्रजायै० रजतस्रजाश्री० ॥ हिरण्यस्रजायै हिरण्यस्रजाश्रीपा० ॥ हिरण्याक्षायै० हिरण्याक्षाश्रीपा० ॥ हिरण्यवर्णायै० हिरण्यवर्णाश्रीपा० ॥ अभीष्टसिद्धिं० ॥ २ ॥ ततःषड्दलेसंधिषु० ॥ देवीपुरोदलमारभ्य ॥ वसंताय० ॥ ग्रीष्माय० ॥ वर्षाभ्यः० ॥ शरद्भ्यः० ॥ हेमंताय० ॥ शिशिराय० ॥

अभीष्टसिद्धिं०॥३॥अष्टदलेमहालक्ष्मीपुरोदलमारभ्ययथाक्रमंप्रदक्षिणं॥ ब्राह्म्यैनः ब्राह्मीश्रीपादुकां० ॥ एवंसर्वत्र ॥ माहे
श्वर्यै० ॥ कौमार्यै० ॥ वैष्णव्यै० ॥ वाराह्यै० ॥ इंद्राण्यै० ॥ चामुंडायै० महालक्ष्म्यै० ॥ तत्रैवपूर्वक्रमेणप्रदक्षिणं॥ पद्मा
सनायै० ॥ पद्मवर्णायै० ॥ पद्मस्थायै० ॥ आर्द्रायै० ॥ तर्पयंत्यै० ॥ तृप्तायै० ज्वलंत्यै० ॥ हिरण्यप्राकारायै० ॥ तत्रैव
पूर्वक्रमेणप्रदक्षिणं॥ असितांगभैरवाय० ॥ रुरुभैरवाय० ॥ चंडभैरवाय० ॥ क्रोधभैरवाय० ॥ उन्मत्तभैरवाय० ॥ कपाल
भैरवाय० ॥ भीषणभैरवाय० ॥ संहारभैरवाय० ॥ अभीष्टसिद्धिं० ॥४॥ महालक्ष्मीपृष्ठतः पूर्वदिशमारभ्य ॥ इंद्रायनमः
इंद्रश्रीपा० ॥ एवंअग्नये० ॥ यमाय० ॥ निर्ऋतये० ॥ वरुणाय० ॥ वायवे० ॥ सोमाय० ॥ ईशानाय० ॥ अभीष्ट० ॥५॥
अष्टदलसंधिषु ॥ आदित्याय० सोमाय० ॥ अंगारकाय० ॥ बुधाय० ॥ बृहस्पतये० ॥ शुक्राय० ॥ शनैश्चराय० ॥ राहु
केतुभ्यो० ॥ अभीष्टसिद्धिं० ॥ ६ ॥द्वादशदलमूलेषुदेवीपुरोभागमारभ्यप्रदक्षिणं॥ मेषाय० ॥ वृषभाय० ॥ मिथुनाय० ॥
कर्काय० ॥ सिंहाय० ॥ कन्यायै० ॥ तुलायै० ॥ वृश्चिकाय० ॥ धनुषे० ॥ मकराय० ॥ कुंभाय० ॥ मीनाय० ॥ अभीष्ट
सिद्धिं० ॥ ७ ॥ द्वादशदलमध्येषुपूर्वदलमारभ्यप्रदक्षिणं॥ मधवे० ॥ माधवाय० ॥ शुक्राय० ॥ शुचये० ॥ नभाय० ॥
नभस्याय० ॥ इषाय० ॥ ऊर्जाय० ॥ सहाय० ॥ तैपाय० ॥ तपसे० ॥ तपस्याय० ॥ अभीष्ट० ॥ ८ ॥ पुनःद्वादशदला
ग्रेषुपूर्वक्रमेण॥ दीप्तायै० ॥ सूक्ष्मायै० ॥ जयायै० ॥ विमलायै० ॥ लक्ष्म्यै० ॥ श्रियै० ॥ गौर्यै० ॥ तुष्ट्यै० ॥ बुद्ध्यै० ॥
शांतायै० ॥ कांत्यै० ॥ महालक्ष्म्यै० ॥ अभीष्ट० ॥९॥ कर्दमेन० ॥यत्पुरुषं० ॥ दशांगंगुग्गुलंधूपंचंदनागरुसंयुतं ॥ सम

पिंतंमयाभक्त्यामहालक्ष्मिप्रगृह्यतां ॥ धूपं० ॥ आपः स्रजं० ब्राह्मणोस्य० ॥ घृतवर्तिसमायुक्तंमहातेजोमहोज्ज्वलं ॥ दीपंदास्या
मिगिरिजेसुप्रीताभवसर्वदा ॥ दीपं० ॥ आर्द्रांयःकरिं० चंद्रमाम० ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नैवेद्यंगृह्यतांदे
विभक्तिंमेह्यचलांकुरु ॥ नैवेद्यं० ॥ गंधतोयंसमानीतंसुवर्णकलशेस्थितं॥ हस्तप्रक्षालनार्थायपानीयंतेनिवेदये ॥ हस्तप्रक्षा० ॥
द्राक्षाखर्जूरकदलीपनसाम्रकपित्थकं ॥ नारिकेलेक्षुजंब्वादिफलानिप्रतिगृह्यतां ॥ फलंस० ॥ एलालवंगकस्तूरीकर्पूरैःपुष्पवा
सितां ॥ वीटिकांमुखवासार्थमर्पयामिसुरेश्वरि ॥ तांबूलं० ॥ पूजाफलसमृद्ध्यर्थंतवाग्रेस्वर्णमीश्वरि ॥ स्थापितंतेनमेप्रीतापू
र्णान्कुरुमनोरथान्॥ दक्षिणां० ॥ श्रियेजातः०॥कौशेयवर्तिसंयुक्तंगोघृतेनसमन्वितं ॥ नीराजनंमयादत्तंगृहाणपरमेश्वरि॥ नी
राजनं०॥आर्द्रांपु० नाभ्याआसी०नमस्तेदेवदेवेशिनमस्तेईप्सितप्रदे॥ नमस्तेदेवदेवेशिनमस्तेशंकरप्रिये॥ नमस्कारान्॥ तांम
आवह०सप्तास्या०यानिकानिच०प्रदक्षिणाः ॥ यःशुचिःप्रयतो० ॥ यज्ञेनयज्ञ० ॥ दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायके॥नम
स्तेस्तुमहालक्ष्मित्राहिमांपरमेश्वरि॥मंत्रपुष्पं॥ नानापुष्पकृतांमालांनानापुष्पैःसमन्वितां ॥ प्रयच्छामिसुरेशानिसुप्रीतावरदाभ
व ॥ मालार्पणं० ॥प्रार्थना ॥पूजाफलाग्निकार्याद्यैःसुकृतंयन्मयार्चितं ॥ तत्सर्वंफलदंमेस्तुभुक्तिमुक्त्यर्थदेहिमे ॥ लक्ष्मित्वत्प्रज्ञ
यानित्यंकृतापूजातवाज्ञया॥स्थिराभवगृहेह्यस्मिन्ममसंतानकारिणी ॥ न्यूनंवाप्यधिकंवापियन्मयामोहतःकृतं॥ सर्वंतदस्तुसंपू
र्णंत्वत्प्रसादान्महेश्वरि ॥ ममाभीष्टप्रदानित्यंभवसुप्रीतमानसा॥इतिप्रार्थना॥(अथवा आवाहनं०॥ मंत्रहीनं० ॥ महिषघ्निमहा
मायेचामुंडेमुंडमालिनि ॥ द्रव्यमारोग्यविजयंदेहिदेविनमोस्तुते ॥ भूतप्रेतपिशाचेभ्योरक्षोभ्यश्चमहेश्वरि ॥ दैवेभ्योमानुषेभ्यश्च

भयेभ्योरक्षमांसदा॥कुंकुमेनसमालब्धेचंदनेनविलेपिते॥विल्वपत्रकृतापीडेदुर्गेत्वांशरणंगतः ॥ सर्वमंगल० ॥ रूपंदेहि०॥दुर्गे स्मृता० ॥ प्रार्थनं॥)ततोदुर्गास्तोत्रपाठार्थंब्राह्मणंवृत्वास्वयंवाकृत्वावैदिकमागमोक्तंवादुर्गामंत्रंयथाशक्तिजपित्वा॥ गुह्यातिगु ह्यगोप्त्रीत्वंगृहाणास्मत्कृतंजपं॥सिद्धिर्भवतुमेदेवित्वत्प्रसादान्महेश्वरि ॥ इतिदेव्यैजपंनिवेद्य तस्याउपरिपुष्पमालांबध्नीयात् ॥ मंत्रः ॥ ग्रथितांतिलकह्लारजातिमंदारचंपकैः ॥पुष्पमालांप्रयच्छामिप्रथमेह्नितवांबिके ॥ यद्वा ॥ मालाहिसर्वदेवानांप्रीतिदा शुभदायतः ॥ लंबितासौमयाभक्त्यागृहाणजगदंबिके॥द्वितीयादिदिनेषु द्वितीयेह्नि तृतीयेह्नीत्याद्यूहनीयं ॥ ततो द्विवर्षादिद शवर्षांतांपोडशवर्षांतांवाऽप्राप्तरजस्कामुक्तलक्षणांकन्यांपादप्रक्षालनपूर्वकंरम्यासनउपवेश्य ॥ मंत्राक्षरमयींलक्ष्मींमातृणांरूप धारिणीं ॥ नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहं॥ इतिमंत्रेणावाह्यगंधपुष्पहरिद्राकंचुकादिभिस्तांसंपूज्यशनैःपायसाद्यन्नं भोजयेत् ॥ ब्राह्मणभोजनमपिशक्त्याकुर्यात् ॥ अन्येविशेषाःकौस्तुभादौज्ञेयाः ॥ इतिनवरात्रपूजा ॥ ॥ ॥ छ ॥

॥ ४९ ॥ नवरात्रोत्थापनम् ॥ तत्रयथाकुलाचारमष्टम्यांनवम्यांदशम्यांवाविसर्जनदिनेसंकल्पादिकृत्वानित्यवदेवदे वीपूजांतेतांप्रणम्यकृताञ्जलिः ॥ दुर्गांशिवांशांकरींब्रह्माणींब्रह्मणःप्रियां ॥ सर्वलोकप्रणेत्रींतांप्रणमामिसदाशिवां ॥ इत्यादि स्तोत्रैःस्तुत्वा महिषघ्नीत्याद्युक्तमंत्रैःप्रार्थ्य ॥ विधिहीनंक्रियाहीनंभक्तिहीनंयदर्चितं ॥ पूर्णंभवतुतत्सर्वंत्वत्प्रसादान्महेश्वरि ॥ मातःक्षमस्वेत्युक्त्वा ॐ दुर्गायैनमइत्यैशान्यामेकपुष्पनिक्षेपेणविसर्जयेत् ॥ स्थापितकलशोदकेनयजमानाभिषेकः ॥ ततोमृ दादिमूर्तिंसत्त्वेस्रोतसितत्प्रवाहणंकर्तुमुत्थापयेत् ॥ तत्रमंत्रः ॥ उत्तिष्ठदेविचंडेशिशुभांपूजांप्रगृह्यच ॥ कुरुष्वममकल्याणमष्टा

भिःशक्तिभिःसह ॥ गच्छगच्छपरंस्थानंस्वस्थानंदेविचंडिके ॥ व्रजस्रोतोजलेवृद्ध्यैतिष्ठगेहेचभूतये ॥ ततोगीततूर्यमंत्रघोषैःस्रो
तोजलंनीत्वा ॥ दुर्गेदेविजगन्मातःस्वस्थानंगच्छपूजिता ॥ संवत्सरेव्यतीतेतुपुनरागमनायवै ॥ पूजामिमामयादेवियथाशक्ति
निवेदितां ॥ रक्षणार्थंसमादायव्रजस्थानमनुत्तमं ॥ इतिस्रोतसिप्रवाह्यतन्मनागृहमेत्यहस्तपादौप्रक्षाल्याचम्यपूजास्थानेयज
मानःसपरिवारउपविश्यविप्रभोजनादिसमाप्यबंधुभिःसहभुंजीत ॥ इतिशारदनवरात्रपूजाविधिःसविस्तरःसंपूर्णः ॥ ॥ ॥
॥ ५० ॥ उपांगललितापूजा ॥ व्रतकर्ताप्रातःसमुत्थाययथाविधिशौचाचमनादिकृत्वाअपामार्गकाष्ठैर्दंतधावनंकुर्यात् ॥
अपामार्गप्रार्थना ॥ आयुर्वलंयशोवर्चःप्रजापशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमंत्रेणकाष्ठंगृहीत्वागंगा
दितीर्थंगत्वादेशकालौसंकीर्त्यउपांगललिताव्रतांगत्वेनदंतधावनपूर्वकंअपामार्गपत्रैःअष्टाचत्वारिंशत्स्नानानिकरिष्ये ॥ दंतधा
वनमंत्रः ॥ मुखदुर्गंधिनाशायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं॥ ततोयथाविधिस्नात्वाप्रातराह्निकंकु
र्यात् ॥ दूर्वाप्रार्थना ॥ दूर्वेअमृतसंपन्नेशतमूलेशतांकुरे ॥ शतंनाशयपापानिशतमायुष्यवर्धनं ॥ त्वंदूर्वेअमृतोत्पन्नेवंदितासि
सुरासुरैः ॥ सौभाग्यसंपदोदेहिसर्वकामफलप्रदे ॥ यथाशाखाप्रशाखाभ्यांविस्तृतासिमहीतले ॥ तथाममापिसंतानंदेहित्वमज
रामरे ॥ एवंमंत्रैर्दूर्वांगृहीत्वागृहमागत्यमध्याह्नेमंगलस्नानंकृत्वावस्त्राभरणाद्यभियुक्तःसन्मंडपिकामध्येप्राङ्मुखःसपत्नीकउप
विश्य आचम्यप्राणानायम्यदेशकालौसंकीर्त्य अस्माकमित्यादिममसर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यवि
च्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थंश्रीउपांगललितादेवताप्रीत्यर्थंदेशकालानुसारतःयथाश

क्तियथाज्ञानेनयथामिलितोपचारद्रव्यैःध्यानावाहनादिषोडशोपचारपूजांकरिष्ये ॥ तदंगत्वेनकलशार्चनंशंखार्चनंघंटार्चनंपु
रुषसूक्तेनश्रीसूक्तेनचन्यासादिकरिष्ये॥ गणपतिंसंपूज्य ॥ पृथ्वीत्यादिआसनेउपविश्य ॥ आधारशक्त्यैनमः कूर्मायनमः अनं
ताय० वराहाय० पृथिव्यैनमः इत्यासनंसंपूज्य ॥ अपसर्पंतु० अपक्रामंतु० इतिमंत्राभ्यांभूतान्युत्सार्य ॥ भूर्भुवःस्वरोमित्यास
नेउपविश्य ॥ इतिदिग्बंधः ॥ तीक्ष्णदंष्ट्रमहाकायेति भैरवानुज्ञांगृहीत्वान्यासान्कुर्यात् ॥ ऋष्यादिन्यासः ॥ लक्ष्मींदिरासुत
ऋषिभ्योनमः शिरसि ॥ अनुष्टुबादिछंदोभ्यो० मुखे ॥ महालक्ष्म्यै० हृदये ॥ स्वरादिभ्यो० गुह्ये ॥ अणिमादिभ्यो० पाद
योः ॥ अर्धचंद्रकलिकायै० सर्वांगे ॥ अथषडंगन्यासः ॥ हिरण्यायैनमः अंगुष्ठाभ्यांन० हृदयाय० ॥ चंद्रायै० तर्जनीभ्यां०
शिरसेस्वाहा ॥ रजतस्रजायै० मध्यमाभ्यां० शिखायै० ॥ हिरण्यस्रजायैन० अनामिकाभ्यां० कवचायहुं ॥ हिरण्याक्ष्यै०
कनिष्ठिकाभ्यां० नेत्रत्रयायवौषट् ॥ हिरण्यवर्णायैन० करतलकरपृष्ठाभ्यां० अस्त्रायफट् ॥ ततः पुरुषसूक्तन्यासः ॥ श्रीसू
क्तन्यासः । हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आद्यमंत्रस्यलक्ष्मीर्ऋषिःउत्तरचतुर्दशमंत्राणामानंदकर्दमचिक्लीतेंदिरासुताऋ
षयः श्रीर्देवता आद्यास्तिस्रोनुष्टुभः चतुर्थीबृहती पंचमीषष्ठ्यौत्रिष्टुभौसप्ताद्याअनुष्टुभः अंत्याप्रस्तारपंक्तिःव्यंजनानिबीजानि
स्वराःशक्तयःबिंदवःकीलकं ममअलक्ष्मीपरिहारार्थेलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेपूजायांचवि० ॥ ॐहिरण्यवर्णांहरिणीं० मूर्ध्नि
तांमआवह० नेत्रयोः अश्वपूर्वां० कर्णयोः कांसोस्मितां० नासिकयोः चंद्रांप्रभासां० मुखे आदित्यवर्णे० कंठे उपैतुमां०
हृदये क्षुत्पिपासा० नाभौ गंधद्वारां० गुह्ये० मनसःकाम० अपाने कर्दमेन० ऊर्वोः आपःस्रजंतु० जान्वोः आर्द्रांयःक०

जंघयोः आर्द्रांपुष्क० गुल्फयोः तांमआवह० पादयोः ॥ ततःकलशादिपूजाते स्वपुरतःमहीद्यौरित्यादिमंत्रैःकलशंप्रतिष्ठा
प्यउदकमापूर्यमुक्ताफलादिगंधाक्षतफलहिरण्यंचतत्तन्मंत्रैर्निक्षिप्य अश्वत्थेवइत्याम्रपल्लवंनिधाय पूर्णादर्वीतिमंत्रेणपूर्णपा
त्रंनिधाय तस्योपरिवस्त्रंप्रसार्यगंधादिनाअष्टदलंविलिख्यद्वारपूजांकुर्यात् ॥ पूर्वद्वारे गंगणपतयेनमः दक्षिणेद्वारे क्षंक्षेत्रपा
लाय० वामे वंवटुकाय० अधः यौंयोगिनीभ्यो० ॥ पूर्वादिचतुर्द्वारेषु पूर्वे गंगंगायै० दक्षिणे यंयमुनायै० पश्चिमे श्रींश्रियै०
उत्तरे ऐंसरस्वत्यै० एवंद्वारचतुष्टयंसंपूज्य पीठपूजांकुर्यात् ॥ पूर्वे कामगिरिपीठाय० दक्षिणे पूर्णगिरिपीठाय० पश्चिमे जालं
धरपीठाय० उत्तरे वीड्यानपीठाय० पूर्वदले गंगणपतये० क्षंक्षेत्रपालाय० मंमंडूकाय० वंवटुकभैरवाय० ॥ आग्नेयदले
जयायै० विजयायै० जयंत्यै० अपराजितायै० ॥ दक्षिणे चेतनायै० बुध्यै० निद्रायै० क्षुधायै० ॥ नैर्ऋत्यदले शक्त्यै०
तृष्णायै० क्षांत्यै० जात्यै० लज्जायै० ॥ पश्चिमदले शांत्यै० श्रद्धायै० कीर्त्यै० लक्ष्म्यै० धृत्यै० प्रीत्यै० ॥ वायव्यदले स्मृ
त्यै० छेदायै० तुष्ट्यै० मात्रे० ॥ उत्तरदले छायायै० शांत्यै० तृष्णायै० श्रद्धायै० ॥ ईशानदले क्षुधायै० निद्रायै० दयायै०
स्मृत्यै० ॥ एताःपंचविंशतिदेवताः अष्टदलेषुस्थापयेत् ॥ पीठमध्यभागे ॥ ॐकूर्मायनमः आधारशक्त्यै० शेषाय० पृथि
व्यै० पद्माय० संविन्नालाय० पद्मनाभाय० अनंताय० एताअष्टदेवताअष्टदलेषुस्थापयेत् ॥ अथाष्टदलेषुद्वेद्वेदेवतेआवा
हयेत् ॥ ब्राह्म्यै० हंसवाहिन्यै० माहेश्वर्यै० वृषभारूढायै० कौमार्यै० मयूरवाहनायै० वैष्णव्यै० गरुडवाहनायै० वाराह्यै०
दंष्ट्रोद्धृतवसुंधरायै० नारसिंह्यै० ऐंद्र्यै० गजारूढायै० स्कंदगणेशयुतायै० चामुंडायै० मुंडमथनायै० ॥ कर्णिकायांमध्ये

ब्राह्म्यै० नंदजायै० हेमगर्भायै० सुरक्तायै० रक्तदंतिकायै० शाकंभर्यै० नीलपत्रासिन्यै० धरायै० तेजोमंडल दुर्धर्षायै० अजितायै० महाकाल्यै० महालक्ष्म्यै० महासरस्वत्यै० मध्येश्रीउपांगललितायै० इतिपीठपूजा ॥ ततःसुवर्णादिप्र तिमादौ ॥ निजासनेनियुक्तासिललितेभक्तवत्सले ॥ उपांगललितेनुज्ञांदेहिमेव्रतसिद्धये ॥ इतिव्रतानुज्ञांगृहीत्वा ॥ अथध्या नं ॥ नीलकौशेयवसनांहेमाभांकमलासनां ॥ भक्तानांवरदांनित्यंललितांचिंतयाम्यहं ॥ श्रीललितांध्यायामि ॥ सहस्रशीर्षा० हिरण्यवर्णां० ॥ आगच्छललितेदेविसर्वसंपत्प्रदायिनि ॥ यावद्व्रतंसमाप्येततावत्त्वंसंनिधाभव ॥ आवाहयामि पुरुषएवेदं० तांम्रआवह०॥कार्तस्वरमयंदिव्यंनानामणिगणान्वितं ॥ अनेकशक्तिसंयुक्तमासनंप्रतिगृह्यतां ॥ आसनं० ॥ एतावानस्य० अ [illegible]पूर्णां०॥गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं ॥ तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां॥पाद्यं०॥त्रिपादूर्ध्व०कांसोस्मितां० ॥ [illegible]नांत्वमनर्घ्यगुणाह्यसि ॥ तथापिभक्त्याराधेत्वांगृहाणार्घ्यंनमोस्तुते॥ अर्घ्यं० ॥तस्माद्विरा० चंद्रांप्रभासां० ॥ [illegible]शीतलं ॥ तोयमाचमनीयार्थंललितेप्रतिगृह्यतां ॥ आचमनीयं० ॥ यत्पुरुषेण० आदित्यवर्णे० ॥ याहृतं ॥ [illegible]णं ॥ तापत्रयविनिर्मुक्तललितेप्रतिगृह्यतां ॥ मलापकर्षस्नानंस० ॥ पयोदधिसमायुक्तंमधुपर्कम र्थंप्रतिगृह्यतां ॥ [illegible]नेप्रतिगृह्यतां ॥ मधुपर्कं० ॥ पंचामृतंमयानीतंपयोदधिघृतंमधु ॥ शर्करादिसमायुक्तंस्नाना तद्रस्तुभि[illegible]० [illegible]निधा० [illegible]पंचामृतस्नानांतेपूर्वपूजांसमाप्य पुरुषसूक्तेनश्रीसूक्तेनचमहाभिषेकः॥आचमनं ॥ [illegible]पूर्वादिचतुर्दिक्षु ॥ गणपतयेनमः सप्तमातृभ्यो० दुर्गायै० क्षेत्राधिपतये० ॥

पुनःपूर्वाद्यष्टदिक्षु इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० मध्येउपांगललितायै० उपांगललितांस्थापयामिपूजयामि॥ तंयज्ञं० उपैतुमां०॥सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां ॥जगन्मात्रे० वस्त्रं०॥तस्माद्यज्ञात्सर्वहुतःसंभृतं०क्षुत्पिपासा०॥मुक्तामणिगणोपेतमनर्घ्यंचसुखप्रदं ॥ त्वदर्थमुपवस्त्रंचललितेप्रतिगृह्यतां ॥ उपवस्त्रं० ॥ अनेकरत्नखचितंसर्वाभरणभूषितं ॥ गृहाणभूषणंदेविइष्टसिद्धिंचदेहिमे ॥ सर्वाभरणं० ॥ तस्माद्यज्ञात्सर्वहुतऋचः०गंधद्वारां०मलयाचलसंभूतंघनसारंमनोहरं ॥ हृदयानंदनंचारुचंदनंप्रतिगृह्यतां ॥चंदनं० ॥ अक्षताश्चसुरश्रेष्ठेकुंकुमाक्ताःसुशोभिताः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वरि ॥ अक्षतान्० ॥ कंठसूत्रंचसौभाग्यंतथातेपादभूषणं ॥ नासामुक्तंचजननिकुसुमंचार्पितंमया॥ पुष्पैःकुंकुमसिंदूरैस्तांबूलैःकंठसूत्रकैः ॥ वासोभिर्भूषणैःशक्त्याललितेपूजयाम्यहं ॥ कंठसूत्रं० हरिद्रारं० कुंकुमंकां० कालिकेकृ० कज्जलं०॥तस्मादश्वाअ० मनसःकाम०॥चंपकैःपारिजाताख्यैर्जातीमालतिकादिभिः ॥ मंदारशतपत्रैश्चपूजयामिसुरेश्वरि ॥ पुष्पाणि० ॥ अहिरिवभोगैः० परिमलद्रव्याणि०॥ अथांगपूजा ॥ दुर्गायै० पादौपूज० ॥ कपिलायै० गुल्फौ०॥ सावित्र्यै० जानुनी० ॥ सरस्वत्यै० जंघेपू० ॥ भद्रकाल्यै० कटिं० ॥ मंगलायै० नाभिं० ॥ शिवायै० उदरं० ॥ क्षांत्यै० हृदयं० विश्वरूपिण्यै० बाहू० ॥ धात्र्यै० ॥ हस्तौ० ॥ स्वधायै० कंठं० ॥ महिषमर्दिन्यै० मुखं ॥ नारायण्यै० नासिकां० ॥ रौद्रमुख्यै० श्रोत्रे० ॥कुमार्यै० ललाटं० ॥सिंहवाहिन्यै० नेत्रे० ॥ कालरात्र्यै० शिरःपूज० ॥ श्रीउपांगललितायै० सर्वांगपू० ॥ अथावरणपूजा० ॥ महाविद्यायै० जगन्मात्रे० महालक्ष्म्यै०शि

वप्रियायै० विष्णुप्रियायै० शुभायै० शांतायै० सिद्धायै० सिद्ध्यै० सरस्वत्यै० क्षमायै० कांत्यै० प्रभायै० ज्योत्स्नायै० पार्वत्यै० सर्वमंगलायै० ॥ अभीष्टसिद्धिंमेदेहिशरणागतवत्सले॥भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं ॥१॥ अनेन० ॥ हिंगुलायै० चंडिकायै० दांतायै० पद्मायै० लक्ष्म्यै० हरिप्रियायै० त्रिपुरमर्दिन्यै० नंदिन्यै० सुनंदायै० सुरवंदितायै० महामायायै० वेदमात्रे० सुधायै० धृत्यै०प्रीत्यै० प्रियायै० प्रसिद्धायै० मृडान्यै० ॥ अभीष्ट० द्वितीयाव० २ ॥ विंध्यवासिन्यै० हिमाचलवासिन्यै० पद्मायै० पृथिव्यै० नारदसेवितायै० पुरुहूतायै० प्रियायै० कांत्यै० कामिन्यै० पद्मलोचनायै० प्रह्लादिन्यै० महामात्रे० दुर्गायै० दुर्गतिनाशिन्यै०ज्वालामुख्यै० सुनेत्रायै० ॥ अभीष्टसिद्धिं० तृतीयाव० ३ ॥ कुमुदवासिन्यै० दुर्गमायै० दुर्लभायै० विद्यायै० स्वर्गवत्यै० त्रिपुरवासिन्यै० अपर्णायै० शांभव्यै० मायायै० मदिरायै० मृदुहासिन्यै० नारायण्यै० महानिद्रायै० योगनिद्रायै० प्रभाविन्यै०॥अभीष्टसि० चतुर्था० ४ ॥ कालरात्र्यै० महारात्र्यै० महाकाल्यै० कुलेश्वर्यै० प्रज्ञापरिमितायै० तारायै० मधुभंजिन्यै० मधुमत्यै० तोतुलायै० तुलजायै० ताम्रायै० मनोन्मन्यै० माहेश्वर्यै०क्षीरार्णवसुतायै० हारायै० ॥ अभीष्टसि० ५ ॥ वालिकायै० हंसवाहिन्यै० शार्ङ्गाकारायै० वसुधाकारायै० चेतनायै० कोपनायै० क्षित्याधारायै० अर्धबिंबधारिण्यै० धरायै० विश्वमात्रे० कुलवत्यै० सुवस्त्रायै० प्रद्युम्नायै० सुचेतनायै० जगद्धात्र्यै० राज्यलक्ष्म्यै० ॥ अभीष्ट० ६ ॥ गणेशाय० सप्तमातृभ्यो० दुर्गायै० क्षेत्राधिपतये० गौर्यै० शंभुपत्न्यै० भक्तवत्सलायै० भक्तप्रियायै० मधुकैटभनाशिन्यै० शुंभमर्दिन्यै० निशुंभनाशिन्यै० भगवत्यै० मुनित्राणदायिन्यै० देवाराधितायै० विष्णु

पूजितायै० महालक्ष्म्यै० ॥ अभीष्टसि० ७ ॥ महासरस्वत्यै० भुवनेश्वर्यै० दक्षकन्यायै० हिमाचलसुतायै० पार्वत्यै० भद्रकाल्यै० उमायै० चंडिकायै० कालिकायै० आर्यायै० दुर्गायै० भव्यायै० विश्वरूपायै० धात्र्यै० शाकंभर्यै० इंद्राण्यै० भूतदायिन्यै० सारायै० रक्तबीजहंत्र्यै० अंबिकायै० शंभुपत्न्यै० ॥ अभीष्ट० ८ ॥ रक्तदंतिकायै० स्थूलायै० सूक्ष्मायै० सौम्यायै० दुष्टदैत्यनाशिन्यै० विश्वनाथायै० विधिपूजितायै० विश्ववंदितायै० लिंगधारिण्यै० ललितायै० कामचारिण्यै० विश्वकायायै० मदोत्कटायै० रंभायै० मार्गदर्शिन्यै० बिल्वप्रियायै० भद्रेश्वर्यै० रुद्राण्यै० कालिकायै० मुकुटेश्वर्यै० श्रीउपांगललितायै० ॥ अभीष्टसिद्धिं० ९ ॥ अथपत्रीपूजा ॥ देव्यै० मल्लिकापत्रं ॥ महाशक्त्यै० जातीपत्रं० ॥ शिवायै० करवीरपत्रं० ॥ प्रकृत्यै० चूतपत्रं० ॥ भद्रायै० जंबीरपत्रं ॥ निद्रायै० चंपकपत्रं० ॥ नित्यायै० पनसपत्रं० ॥ गौर्यै० पुंनागपत्रं० ॥ धात्र्यै० शमीपत्रं० ॥ ज्योत्स्नायै० अर्कपत्रं० १० ॥ चंद्ररूपिण्यै० धत्तूरपत्रं० ॥ सरस्वत्यै० बिल्वपत्रं० ॥ कल्याण्यै० कपित्थप० ॥ प्राणदायै० विष्णुक्रांतपत्रं० ॥ वृद्ध्यै० दाडिमीपत्रं० ॥ सिद्ध्यै० बदरीपत्रं० ॥ कौमार्यै० नारंगप० ॥ नैर्ऋत्यै० मालतीप० ॥ लक्ष्म्यै० अपामार्गपत्रं० ॥ शर्वाण्यै० धात्रीपत्रं० २० ॥ दुर्गायै० कदंबपत्रं० ॥ सुगंधायै० श्रीपत्रं० ॥ शारदायै० बकुलपत्रं० ॥ पार्वत्यै० नागपत्रं० ॥ ख्यातरूपिण्यै० केतकीपत्रं० ॥ कृष्णायै० शतपत्रं० ॥ सौम्यै० अर्जुनपत्रं० ॥ रौद्रायै० वटपत्रं० ॥ नित्यायै० मंदारपत्र० ॥ चेतनायै० पाटलीपत्रं० ३० ॥ ऋद्ध्यै० शतावरीपत्रं ॥ भगवत्यै० पलाशपत्रं० ॥ जयायै० अगस्तिपत्रं ॥ छायारूपिण्यै० भृंगराजपत्रं ॥ शक्त्यै० शारदीपत्रं० ॥ तृष्णायै० कदलीपत्रं० ॥ बुद्ध्यै०

देवदारुपत्रं० ॥ कांतरूपिण्यै० अशोकपत्रं ॥ लज्जारूपिण्यै० तुलसीपत्रं ॥ शांतरूपिण्यै० चंदनपत्रं० ४० ॥ सुधारूपि
ण्यै० दूर्वापत्रं० ॥ कांतिरूपिण्यै० कंकतीपत्रं ॥ लक्ष्म्यै० कौमोदकीपत्रं० ॥ धृतिरूपिण्यै० कुमुदपत्रं० ॥ पार्वत्यै० गोकर्ण
पत्रं ॥ महादेव्यै० हरिद्रापत्रं० ॥ खड्गिन्यै० सुरंगपत्रं० ॥ लज्जितायै० मातुलुंगपत्रं० ४८ ॥ इतिपत्रपूजा ॥ अथाष्टोत्त
रशतनामपूजा ॥ गौर्यै० जगन्मात्रे० जनेंद्रायै० शारदायै० हंसवाहिन्यै० राजलक्ष्म्यै० वषट्कारायै० सुधारायै० राजा
र्चितायै० दंडिन्यै० १० ॥ क्रियावत्यै० सद्भूत्यै० तारिण्यै० श्रद्धायै० सद्गतये० शरण्यायै० सिद्ध्यै० मंदाकिन्यै० गंगा
यै० यमुनायै० २० ॥ सरस्वत्यै० गोदावर्यै० विपाशायै० कावेर्यै० शरयवे० चंद्रभागायै० कौशिकप्रियायै० गंडक्यै०
शिवायै० नर्मदायै० ३० ॥ कर्मनाशायै० चर्मण्वत्यै० वेदिकायै० वेत्रवत्यै० वितस्तायै० वरदायै० वरवाहनायै० सत्य
भूत्यै० साध्व्यै० चक्षुष्मत्यै० ४० ॥ कुंडभासिन्यै० एकचक्षुष्यै० सहस्राक्ष्यै० सुश्रोण्यै० भगमालिन्यै० सेनान्यै० श्रेष्ठायै०
पताकिन्यै० गुहायै युद्धकांक्ष्यै० ५० ॥ दयारंभायै० विपत्प्रणाशिन्यै० पंचमप्रियायै० परायै० कलायै० कांत्यै० स्त्रीशक्त्यै०
मोक्षदायिन्यै० ऐंद्र्यै० ६० ॥ माहेश्वर्यै० ब्राह्म्यै० कौमार्यै० शिखिवाहिन्यै० इलायै० भगवत्यै० इक्षुधन्विन्यै० अनेकाग्रायै०
कामधेनवे० कृपावत्यै० वज्रायुधायै० ६० ॥ चंडपराक्रमायै० सुपर्णायै० स्थित्यै० ईशकांतायै० संहारकायै० एकाग्रायै०
महेज्यायै० शतपत्रवाहिन्यै० महाभुजायै० ८० ॥ भुजंगभूषणायै० षट्चक्रक्रमवासिन्यै० षट्चक्रक्रमभेदिन्यै० शमायै०
कामस्थायै० कामभूषणायै० सुस्मितायै० सुमुखायै० क्षमायै० मूलप्रकृत्यै० ९० ॥ ऐश्वर्यै० अजायै० बहुवर्णायै० पुरुषा

थंप्रकृत्यै० रक्तायै० नीलायै० श्यामायै० कृष्णायै० पीतायै० सितायैनमः १०० ॥ कर्बुरायै० कालस्वरूपायै० महादेव्यै० दुष्टदैत्यनाशिन्यै० कदंववनवासिन्यै० शंभुपत्न्यै० पांचालिन्यै० श्रीउपांगललितायैनमः १०८ ॥ यत्पुरुषं० कर्दमेनप्रजा० ॥ देवद्रुमरसोद्भूतःकालागरुसमन्वितः ॥ आघ्रेयस्तेमयादत्तोधूपोयंप्रतिगृह्यता ॥ धूपंस० ॥ ब्राह्मणोस्य० आपःस्रजंतु० ॥ चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि ॥ दीपं ॥ चंद्रमामनसो० आर्द्रांयःकारिणीं० ॥ मोदकापूपलड्डुकवटकोडुंवरादिभिः ॥ सघृतंपायसान्नंचनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं० ॥ मध्येपानीयं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनार्थेचंदनं० ॥ इदंफलं० उपांगल० फलं० ॥ नागपर्णैश्चसंयुक्तंकर्पूरैलालवंगकं ॥ पूगीफलसमायुक्तंतांवूलंप्रतिगृह्यतां ॥ तांवूलं० ॥ हिरण्यगर्भ० दक्षिणां० ॥ अथदूर्वापूजा ॥ प्रार्थनामंत्रास्तुप्रागेवलिखितास्तैः संप्रार्थनपूर्वकमर्पयेत् ॥ दूर्वांकुरान्त्समग्रांश्चत्वारिंशत्तथाष्टभिः ॥ अधिकान्हस्तआदायअर्पयेद्भक्तितःसुधीः ॥ अंकुरेपुगंधपुष्पाक्षतान्निक्षिप्य ॥ मंत्रस्तु ॥ वहुप्ररोहासततममृताहरितालता ॥ यथेयंललितेमातस्तथामेस्तुमनोरथाः ॥ अथाष्टचत्वारिंशन्नामभिःपूजयेत् ॥ शंभुपत्न्यैनमः दूर्वांकुरान्समर्पयामीत्येवंसर्वत्र भक्तप्रियायै० भक्ताभिलषितदायिन्यै० मधुकैटभनाशिन्यै० महिषासुरमर्दिन्यै० शुंभभंजिन्यै० निशुंभनाशिन्यै० भगवत्यै० मुनित्राणदायिन्यै० देवाराधितायै० १० विष्णुपूजितायै० महाकाल्यै० महासरस्वत्यै० दक्षयज्ञविध्वंसिन्यै० अंबिकायै० हिमाचलसुतायै० पार्वत्यै० भद्रकाल्यै० उमायै० चंडिकायै० २० कमलवासिन्यै० आर्यायै० विश्वरूपायै० धात्र्यै० शाकंभर्यै० इंद्रायै० भूतिदायै० सारायै० रक्तवीजहंत्र्यै० सरस्व

त्यै० ३० शंभुशक्त्यै० सर्वेश्वर्यै० रक्तदंतिकायै० स्थूलायै० सूक्ष्मायै० सत्यसंधायै० दुष्टदैत्यनाशिन्यै० चंचलायै०विश्व
जायै० भक्ताभिलषितदायै० ४० विधिपूजितायै० विश्ववंदितायै० युद्धकांक्षिण्यै० दयारंभायै० पंचमप्रियायै० परायै०
अपरायै० मोक्षदायिन्यै०४८इतिदूर्वापूजनं ॥ श्रियेजात० ॥ कौशेयवर्तिसंयुक्तंगोघृतेनसमन्वितं ॥ नीराजनंमयादत्तंगृहाण
परमेश्वरि ॥ इतिनीराजनं ॥ नाभ्याआसी० आर्द्रांपुष्करिणीं० ॥ दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायिके ॥ नमस्तेस्तुमहाल
क्ष्मित्राहिमांपरमेश्वरि ॥ नमोदेव्यै०नमस्कारान्० ॥सप्तास्या०तांमआवह० ॥ शिवेसदानंदमयेत्र्यधीश्वरिश्रीपार्वतिज्ञानघनेत्रि
केशिवे ॥ मातर्विशालाक्षिभवानिसुंदरित्वामन्नपूर्णांशरणंप्रपद्ये ॥ प्रदक्षिणाः ॥ यज्ञेनयज्ञ० यःशुचिःप्रय०यद्वाग्वदं० देवीं
वाचं० प्रणोदेवी० राजाधिराजाय० तदप्येषु० ॥ श्रीउपांगललितायै० मंत्रपुष्पं ॥ गीतंवाद्यंनृत्यंछत्रंचामरंदर्पणंसर्वराजोप
चारार्थेअक्षतान् ॥ अथप्रार्थना ॥ नमस्तुभ्यंजगद्धात्रि० ॥ सापराधोस्मिशरणंप्राप्तस्त्वांजगदंबिके ॥ इदानीमनुकंप्योहंयद्वां
छसिकुरुष्वतत् ॥ पुत्रान्देहियशोदेहिदेहिसौभाग्यसंपदौ ॥ विद्यांधनंचमेदेहिसर्वान्कामांश्चदेहिमे ॥ इतिप्रार्थना ॥ अथार्घ्य
दानं ॥ अर्घ्यपात्रेशुद्धोदकंगंधपुष्पाक्षतान्दूर्वाहिरण्यंचनिक्षिप्य ॥ अर्घ्यमंत्रः ॥ नमस्तेललितेमातर्भक्तकामप्रपूरके ॥ गृहा
णार्घ्यंमयादत्तंव्रतस्यपरिपूर्तये ॥ श्रीउपांगललितायै० इदमर्घ्यं० निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि ॥ तथापिभक्त्या
राध्येत्वांगृहाणार्घ्यंनमोस्तुते ॥ श्रीउपांगल० इदमर्घ्यं० ॥ आवाहनंनजानामि०यस्यस्मृत्या० मंत्रहीनं० ॥ अनेनयथाशक्ति
षोडशोपचारैःकृतपूजनेनभगवत्युपांगललितादेवताप्रीयतां ॥ कर्मणःसांगतासिद्ध्यर्थंब्राह्मणपूजांकरिष्ये ॥ वायनप्रदानंकरि

ष्ये ॥ ततोवायनमादायविंशतिवटकादिभिः ॥ भक्त्याह्येतेनमंत्रेणब्राह्मणायनिवेदयेत् ॥ उपांगललितादेव्याव्रतसंपूर्तिहेत वे ॥ वायनंद्विजवर्यायसहिरण्यंददाम्यहं ॥ विप्रायवेदविदुषे० ॥ ततोयथाशक्तिब्राह्मणसुवासिनीदंपतीसमाराधनंकरिष्ये ॥ ततःकथांसमाकर्ण्यवाणकापूपसंख्यया ॥ स्वयमेवतदेवान्नंवाग्यतःसहबांधवैः ॥ रात्रौजागरणंकुर्यान्नृत्यगीतादिमंगलैः ॥ प्रभा तेपूजयेद्देवींततःकुर्याद्विसर्जनं ॥ सवाहनाशक्तियुतावरदापूजितामया ॥ मातर्मामनुगृह्याथगम्यतांनिजमंदिरं ॥ पीठदेवता नांयांतुदेवगणाःसर्वेपूजामादायेतिविसर्जनम् ॥ इत्युपांगललितापूजा ॥ ॥ छ ॥ ॥ छ ॥

॥ ५१ ॥ रविवारपूजा ॥ प्रातरुत्थायमौनेनस्नात्वा नित्यकर्मांते नागवल्लीदलैरक्तचंदनेनद्वादशपरिधिकमर्कवद्वर्तुलंमंडलं विरच्य तत्रसंज्ञायुतंसूर्यंपूजयेत् ॥ देशका० ममसंज्ञायुतश्रीसूर्यप्रीतिद्वारासकलदौर्भाग्यदुरितदोषनिरासपूर्वकंअक्षय्यसौभा ग्यकुलाभ्युदयधनधान्यसमृद्ध्यायुरारोग्यसुखाभिवृद्ध्याद्यभीष्टसिद्ध्यर्थं श्रावण(आश्विन)रविवारप्रयुक्तंसंज्ञायुतश्रीसूर्यपूजनं करिष्ये ॥ संभारप्रोक्षणांते ध्येयःसदा० इतिध्यात्वा नाम्नापौराणमंत्रैर्वा रक्तगंधाक्षतजपापुष्पखंडशर्करायुतनारिकेलबीजनै वेद्याद्युपचारैःसंपूज्य नीराजनांते द्वादशप्रदक्षिणानमस्कारान्कृत्वापुष्पांजलिंदत्वा पट्टतंतुनिर्मितंपड्ग्रंथियुतंरक्तसूत्रंदेवाय समर्प्यस्वकंठेबद्ध्वाभूमौजानुनीनिपात्य रक्तगंधादियुतजलेन मित्रादिनामभिर्वक्ष्यमाणमंत्रेणवाद्वादशार्घ्यान्दद्यात् ॥ नमःसह स्रकिरणसर्वव्याधिविनाशन ॥ गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे ॥ ततोवायनंदत्वापरमान्नेनदंपतीसंभोजयेत् ॥ ॥

॥ ५२ ॥ सरस्वतीपूजा ॥ कर्तामंगलस्नानंकृत्वाक्षौमंवासःपरिधाय स्रग्वितानादिशोभितेमंडपेभद्रपीठेसर्वाणिपुस्तका

निसंस्थाप्य नित्यकर्मांतेगृहीतोपकरणआचम्यप्राणानायम्य देवादीनभिवाद्य देशकालौस्मृत्वा ममश्रीसरस्वतीप्रीतिद्वारासर्व शास्त्रार्थविज्ञानविमलकीर्तिपुत्रपौत्राभिवृद्धिधनधान्यसंपदाद्यभीष्टसिद्ध्यर्थं मूलनक्षत्रविहितंसरस्वत्यावाहनं तदंगभूतंपूजनं चक० गणेशपूजादिकृत्वा ॐ प्रणोदेवी० ॥ अत्रागच्छजगद्वंद्येसर्वलोकैकपूजिते ॥ मयाकृतामिमांपूजांगृहाणत्वंसरस्वति ॥ सरस्वत्यैनमःसरस्वतीमावाहयामीत्यावाह्य वैदिकपौराणनाममंत्रैरेतदन्यतमेनवादेवींसंपूज्य पूर्वाषाढासुपूजनंकरिष्ये ॥ इति संकल्प्यावाहनवर्जंविविधपुष्पफलनैवेद्यादियुतंपूजनंकार्यं ॥ तत्र ध्यानमंत्रस्त्रिपुरासिद्धांते ॥ सुरासुरैःसेवितपादपंकजाकरे विराजत्कमनीयपुस्तका ॥ विरिंचिपत्नीकमलासनस्थितासरस्वतीनृत्यतुवाचिमेसदा ॥ सहस्र० ॥ अत्रागत्यजगद्वंद्येसर्वलोकैक पूजिते ॥ मयाकृतामिमांपूजांगृहाणजगदीश्वरि॥ॐ सरस्वत्यैआवाहनाभावात्पुष्पंसमर्प्य ॥ पुरुष० ॥ अनेकरत्नसंयुक्तंसुवर्णेन विराजितं ॥ मुक्तामण्यंकितंचारुआसनंतेददाम्यहं ॥ आसनं ॥ एतावा० ॥ गंधपुष्पाक्षतैर्युक्तंशुद्धतोयेनसंयुतं ॥ शुद्धस्फटि कतुल्यांगिपाद्यंतेप्रतिगृह्यतां ॥ पाद्यं० ॥ त्रिपादू० ॥ भक्ताभीष्टप्रदेदेविदेवदेवादिवंदिते ॥ आधारादिजगद्धात्रिददाम्यर्घ्यंगृ हाणमे ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥पूर्णचंद्रसमानास्येकोटिसूर्यसमप्रभे॥भक्त्यासमर्पितंतुभ्यंगृहाणाचमनीयकं॥आचमनीयं०॥

१ ध्यानांतरं॥प्रणवासनमारूढांतदर्थत्वेननिश्चितां॥अंकुशंचाक्षसूत्रंचपाशपुस्तकधारिणीं ॥ मुक्ताहारसमायुक्तांमोदरूपांमनोहरां ॥ सितेनदर्पणाभेन वस्त्रेणपरिशोभितां॥सुस्तनींवेदमध्यांतांचंद्राधकृतशेखरां॥जटाकलापसंयुक्तांपूर्णचंद्रनिभाननां ॥ त्रिलोचनांमहादेवींस्वर्णनूपुरधारिणीं ॥ कटकैःस्वर्ण रत्नाढ्यैर्महावलयशोभितां॥कंबुकंठींसुताम्रोष्ठींसर्वाभरणभूषितां ॥ केयूरैर्मेखलाद्यैश्चद्योतयंतींजगत्त्रयं॥शब्दब्रह्मात्मिकांध्यायेध्यानकामःसमाहितः ॥

यत्पुरुषेण० ॥ सुवर्णकलशानीतैर्नानागंधसुवासितैः॥शुद्धोदकैःस्नानमिदंस्वीकुरुष्वसुरेश्वरि ॥ स्नानं०॥ कमलभवनजायेकोटि सूर्यप्रकाशेशिवदशुचिविलासेकोमलाहारयुक्ते॥ दधिमधुघृतयुक्तःस्वर्णपात्रस्थितोयःशुचिरयिमधुपर्कोगृह्यतांवेदवंद्ये ॥ मधुपर्कं० ॥ दधिक्षीरघृतोपेतंशर्करामधुसंयुतं ॥ पंचामृतस्नानमिदंस्वीकुरुष्वसुरेश्वरि ॥ पंचामृतस्नानं० ॥ महाभिषेकः॥तंयज्ञं०॥ शुक्लवस्त्रद्वयंदेविविमलंकुटिलालके ॥ भक्त्यासमर्पितंवाणिब्रह्माणिप्रतिगृह्यतां ॥ वस्त्रं० ॥ तस्माद्यज्ञा० ॥ शब्दब्रह्मारणे देविशब्दशास्त्रकृतालये ॥ ब्रह्मसूत्रंगृहाणत्वंब्रह्मशक्रादिपूजिते ॥ कंठसूत्रं० ॥ कटकमुकुटहारैर्नूपुरैरंगदाद्यैर्विविधमणिसुयुक्तैर्मेखलामुक्तहारैः ॥ कमलवनविलासेकामदेत्वंगृहाणप्रकटितकरुणार्द्रेभूरिशोभूषणानि ॥ आभरणानि० ॥ तस्माद्य० श्रीखंडचंदनं० गंधं० ॥ अक्षताश्च० अक्षतान्० ॥ हरिद्रां० कुंकुमं० अहिरिव० नानापरिमलद्रव्यं ॥ तस्मादश्वा० ॥ माल्यादीनि० पुष्पाणि० ॥ अथांगपूजा ॥ ब्रह्माण्यै० पादौपूजयामि ॥ ब्रह्मण्यमूर्तये० गुल्फौ० ॥ जगत्स्वरूपायै० जंघे० ॥ जगदादये० जानुनी० ॥ चारुविलासिन्यै० ऊरू० ॥ कमलभूतये० कटिं ॥ जन्महीनायै० जघनं ॥ गंभीरनाभये० नाभिं० ॥ वारिपूज्यायै० उदरं ॥ लोकमात्रे० स्तनौ० ॥ विशालवक्षसे० वक्षःपू० ॥ सुविपश्चितायै० कंठं० ॥ स्कंदपूज्यायै० स्कंधौ० ॥ दीर्घसुवाहवे० वाहून्० ॥ पुस्तकधारिण्यै० हनुं० ॥ श्रोत्रियसंभवायै० श्रोत्रे० ॥ वेदस्वरूपायै० वक्रं० ॥ सुनासायै० नासिकां० ॥ विंवसमानोष्ठ्यै० ओष्ठौ० ॥ कमलचक्षुषे० नेत्रे० ॥ तिलकधारिण्यै० भालं० ॥ चंद्रमूर्तये० केशान्० ॥ सरस्वत्यै० शिरःपू० ॥ ब्रह्मरूपिण्यै० सर्वांगं० ॥ पुनरेतैर्नामभिःपुष्पाणिसमर्पयेत् ॥ यत्पुरुषं ॥ वनस्पतिरसोद्भू०

धूपं० ॥ ब्राह्मणोस्य० आज्यंचवर्तिंसं० दीपं० ॥ चंद्रमा० ॥ अपूपान्विविधान्स्वादून्शालिपिष्टोपपाचितान् ॥मृदुलान्गुड संमिश्रान्सजीरकमरीचिकान् ॥ कदलीपनसाम्राणांसुपक्वानिफलानिच ॥ कंदमूलव्यंजनादिसोपस्करंमनोहरं ॥ अन्नंचतुर्विधोपेतंक्षीरान्नंसघृतंदधि ॥ नैवेद्यं० ॥ शीतोदकंचसुस्वादुकर्पूरैलादिवासितं ॥ मध्येमध्येगृहाणेदंकामधेनुशताधिके ॥ पानीयं० ॥ इदंफलमितिफलं० ॥ तांबूलंचसकर्पूरंपूगनागदलैर्युतं ॥ गृहाणदेविदेवेशितत्वरूपेनमोस्तुते ॥ तांबूलं ॥ हिरण्यगर्भगर्भस्थं० दक्षिणां० ॥ श्रियेजातः०॥नीराजनंगृहाणत्वंजगदानंददायिनि ॥ जगत्तिमिरमार्तंडमंडलेतेनमोनमः ॥ महानीराजनदीपंकर्पूरदीपंच ॥ ततःशिष्यादिसंयुक्तः नाभ्याआसी० ॥ पाहिपाहिजगद्वंद्येनमस्तेभक्तवत्सले ॥ नमस्तुभ्यंनमस्तुभ्यंनमस्तुभ्यंनमोनमः ॥ इतिनमस्कुर्यात्॥सप्तास्या० यानिकानिच०प्रदक्षिणाः॥यज्ञेन० ॥ शारदेलोकमातस्त्वमाश्रिताभीष्टदायिनि ॥ पुष्पांजलिंगृहाणेमंमयाभक्त्यासमर्पितं ॥ पुष्पांजलिं० ॥ पूजांतेप्रार्थयेत् ॥ पाशांकुशधरावाणीवीणापुस्तकधारिणी ॥ ममवक्त्रेवसेन्नित्यंदुग्धकुंदेंदुनिर्मला ॥ यथानदेविभगवान्ब्रह्मालोकपितामहः ॥ त्वांपरित्यज्यसंतिष्ठेत्तथाभववरप्रदा ॥ वेदाःशास्त्राणिसर्वाणिनृत्यगीतादिकंचयत् ॥ नविहीनंत्वयामातस्तथामेसंतुसिद्धयः ॥ लक्ष्मीर्मेधाधरापुष्टिर्धृतिस्तुष्टिःप्रभामतिः ॥ एताभिःपाहितनुभिरष्टाभिर्मांसरस्वति ॥ ततोब्राह्मणंसंपूज्य तस्मैचतुर्दशलड्डुकवायनंसघृतंसदक्षिणंमंत्रेणदद्यात् ॥ सरस्वतिनमस्तुभ्यंवरदेभक्तवत्सले ॥ उपायनंप्रदास्यामिविद्यावृद्धिंकुरुष्वमे ॥ भारतीप्रतिगृह्णातिभारतीवैददातिच ॥ भारतीतारिकोभाभ्यांभारत्यैतेनमोनमः ॥ ततःकथांश्रुत्वाविप्रान्संभोज्य स्वजनयुतस्तैलवर्जंस्वयंचभुक्त्वा रात्रिंनृत्यगीताद्युत्सवेननये

त् ॥ एवं प्रत्यहंयथाशक्तिकार्यं ॥ अथोत्तराषाढासुबलिदानं तदंगभूतंपूजनंचसंकल्प्य पूजांतेपायसादिबलिंदत्वा श्रवणेविसर्जनंकर्तुंतदंगभूतंपूजनंक० ॥ पूर्ववत्संपूज्य ॥ उत्तिष्ठदेविकल्याणिगृहीत्वापूजनंमम ॥ स्वस्थानंगच्छसुभगेकामान्देहिसरस्वति ॥ इतिविसर्जयेत् ॥ इतिसरस्वतीपूजा ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ५२ ॥ महालक्ष्मीपूजा ॥ नित्यकर्मांते ॥ करिष्यामिव्रतंदेवित्वद्भक्त्यात्वत्परायणा ॥ तदविघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः॥इतिप्रार्थ्याचम्यदेशकालौसंकीर्त्यममश्रीमहालक्ष्मीप्राप्तिद्वाराअलक्ष्मीपरिहारपूर्वकंस्थिरसौभाग्यपुत्रपौत्रधनधान्यसमृद्धिसकलैश्वर्यदीर्घायुःक्षेमादिकल्पोक्तफलसिद्ध्यर्थंमहालक्ष्मीव्रतांगत्वेनपूजांकरिष्ये॥गणेशपूजादिसंभारप्रोक्षणांतेकदलीस्तंभादिमंडितेपीठेवेद्यांवाष्टदलोपरिलक्ष्मींसंस्थाप्यपूजयेत् ॥ ध्यायामितांमहालक्ष्मींकर्पूरक्षोदपांडुरां ॥ शुभ्रवस्त्रपरीधानांमुक्ताभरणभूषितां ॥ पंकजासनसंस्थानांस्मेराननसरोरुहां ॥ शारदेंदुकलाकांतिंस्निग्धनेत्रांचतुर्भुजां ॥ पद्मयुग्माभयवरव्यग्रचारुकरांबुजां ॥ अभितोगजयुग्मेनसिच्यमानांकरांबुना ॥इतिध्यात्वाषोडशोपचारैःसंपूज्यपुष्पांजल्यंतेपात्रनिहितदोरकोपरिषोडशार्घ्यान्दत्वानमस्कुर्यात् ॥ महालक्ष्मिजगन्मातःसुखसौभाग्यदायिनि ॥ देहिमेसकलान्कामान्गृहाणार्घ्यंनमोस्तुते ॥ ततोदोरकबंधनं॥ रात्रौवाचारात् ॥ तत्र लक्ष्म्यैनमइति दोरकंप्रतिग्रंथ्यभिमंत्र्य॥धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियं ॥ तुरगान्दंतिनःपुत्रान्महालक्ष्मिप्रयच्छमे॥इतिवामकरेबद्ध्वाप्रार्थयेत् ॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे ॥ लक्ष्मीदेवियथासित्वंमयिनित्यात

१ महाष्टम्यामिदंपंचवर्षात्मकंघटाध्मानरूपंव्रतंप्रायश्चित्तपावनकुलेप्रसिद्धमितिव्रतराजे ॥ विशेषपूजाप्रकारस्त्वग्रेयोजितलक्ष्मीपूजावज्ज्ञेयः ॥

थाभव॥क्षीरोदार्णवसंभूतेकमलेकमलालये॥प्रयच्छसर्वकामान्मेविष्णुवक्षःस्थलालये॥पुत्रान्देहियशोदेहिदेहिसौभाग्यमव्ययं॥ कुरुश्रियंमहालक्ष्मिअश्रियंचाशुनाशय॥ ततो गोधूमपिष्टनिर्मितान्षोडशलड्डुकादिभक्ष्यविशेषान्दीपांश्चसौभाग्यद्रव्यसहिता न्वंशपात्रेनिधायविप्रायदद्यात्॥ तत्रमंत्रः॥क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरी॥ व्रतेनानेनमेदेवीप्रीयतांविष्णुवल्लभा॥ इंदि राप्रतिगृह्णातिइंदिरावैददातिच॥ इंदिरातारकोभाभ्यामिंदिरायैनमोनमः॥ ततःसुवासिनीभ्योहरिद्राकुंकुमवस्त्रादिदत्वाश क्त्याविप्रान्संभोज्यकथांश्रुत्वास्वयंचदीपपिंडिकासहितंभुक्त्वारात्रौजागरोत्सवंकृत्वाप्रातर्देवींसंपूज्यलक्ष्मीर्देविगृहाणत्वंदोर कंयन्मयाधृतं॥ व्रतंसंपूर्णतांयातुकृपांकुरुसदामयि॥ इतिदोरकमुत्तार्यदेव्यग्रेनिधायदेवींविसर्जयेत्॥ पंकजंदेविसंत्यज्यमम वेश्मनिसंविश॥ यथासपुत्रभृत्याहंस्वस्थास्यांत्वत्प्रसादतः॥ इतिसंप्रार्थ्यनमेत्॥ इतिमहाष्टम्यांविहितामहालक्ष्मीपूजा॥ ॥

॥ ५४ ॥ अथापराजितापूजा ॥ अपराह्णेग्रामादैशान्यामाचमनादिकृत्वा ममसपरिवारस्यक्षेमायुःपुष्टिमहैश्वर्यविजयसं पदाद्यभीष्टसिद्धिद्वाराश्रीपरमे० अपराजितापूजनंक० ( राजातु दुरितनाशसकलशत्रुपराभवपूर्वकंविजययशःश्रेयोर्थबलसंप दभिवृद्धिधनधान्यसमृद्ध्याद्यभीष्टसिद्ध्य इत्यादिवदेत् )॥ गणेशपूजांते उपलिप्तभूमौचंदनादिनालिखिताष्टदलपद्मेमध्येमृ न्मयींलतारूपांवा अपराजितायैनमइत्यपराजितां तद्दक्षिणेक्रियाशक्त्यैनमइतिजयां वामेउमायैनमइतिविजयांचावाह्य षोड शोपचारैःसंपूज्यनत्वा॥ इमांपूजांमयादेवियथाशक्तिनिवेदितां॥ रक्षणार्थंसमादायव्रजस्वस्थानमुत्तममितिविसृजेत्॥ राजा तुप्रणामांते॥चारुणामुखपद्मेनविचित्रकनकोज्ज्वला॥ जयादेवीशिवेभक्तासर्वकामान्ददातुमे॥ कांचनेनविचित्रेणकेयूरेणवि

राजिता ॥ विजयातुमहाभागाकरोतुविजयंमम ॥ हारेणसुविचित्रेणभास्वत्कनमेखला ॥ अपराजितारुद्रभक्ताकरोतुविजयं ममेतिप्रार्थ्य हरिद्रारंजितवस्त्रेदूर्वायुतसिद्धार्थान्प्रदक्षिणंवलयाकारेणाबध्य ॥ सदापराजितेयस्मात्त्वंलतासूत्तमामता॥सर्वकामार्थसिद्ध्यैत्वांतस्मात्पूजितवानहं ॥ भवापराजितेदेविममसर्वसमृद्धये॥पूजितायांत्वयिश्रेयोममास्तुदुरितंहतमिति तद्वलयमभिमंत्र्य ॥ जयदेवरदेदेविदशम्यामपराजिते ॥ धारयामिभुजेदक्षेजयलाभाभिवृद्धये ॥ न्नलमाधेहिवलयंमयिशत्रौपराभवं॥ त्वद्धारणाद्भवेयुर्मेधनधान्यसमृद्धयः ॥ इतिदक्षिणभुजेधृत्वाप्राग्वद्विसृजेत् ॥ ॥ छ ॥ ॥ छ ॥

॥ ५५ ॥ शमीपूजाअश्मंतकपूजाच ॥ ततः सर्वेजनाग्रामाद्बहिरैशानदिक्स्थांशमीमभावेश्मंतकंवापूजयेयुः ॥ सीमोल्लंघनंत्वस्मात्पश्चाद्वाकार्यं ॥ राजात्वश्वमारुह्यसामात्यपुरोहितःशमीमूलंगत्वावतीर्यदेशकालौस्मृत्वा ममसपरिवारस्यनिखिलदुरितामंगलाधिव्याधिदुःखनिरासपूर्वकं यात्रायांविजयक्षेमैश्वर्यायुरारोग्यसौमंगल्याद्यभीष्टसिद्धिद्वाराश्रीपरमे०शमीपूजनंक० (शम्यलाभेऽश्मंतकपूजनं०) गणेशपूजास्वतिवाचनांते शमीमूलेदिक्पालान्वास्तुदेवताचसंपूज्य ॥ अमंगलानाशमनींशमनींदुष्कृतस्यच ॥ दुःखप्रणाशिनींधन्यांप्रपद्येहंशमींशुभां ॥ इतिशमींध्यानादिभिःसंपूज्य प्रार्थयेत् ॥ शमीशमयतेपापंशमीलोहितकंटका ॥ धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी ॥ करिष्यमाणयात्रायांयथाकालंसुखंमया॥तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते ॥ अश्मंतकपूजनेतु ॥ अश्मंतकमहावृक्षमहादोपनिवारण ॥ इष्टानांदर्शनंदेहिकुरुशत्रुविनाशनं ॥ इतिप्रार्थ्यराजाशत्रोर्मूर्तिंकृत्वाशस्त्रेणविध्येत्॥ततःशमीमूलगतामार्द्रांसाक्षतांमृदमादायमंगलगीततूर्यघोषैःसहगृहमेत्यवस्त्राभरणा

दिस्वजनैःसहधूत्वास्त्रीभिर्नीराजितोविप्रेभ्योदक्षिणांतांबूलंचदत्वाशिषोगृहीत्वासर्वान्गृहंप्रतिविसृजेत् ॥ ॥ ७ ॥

॥ ५६ ॥ छत्रशस्त्रादिपूजनं ॥ आचम्यदेशकालावुच्चार्यममसपरिवारस्यकीर्त्यायुर्यशोबलविजयादिलौहाभिसारिककर्म कल्पोक्तफलावाप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंछत्रचामरगजाश्वादिराजचिह्नपूजांकरिष्येइतिसंकल्प्यछत्रचामरादिदेवताभ्योन मइतिमंत्रेणपूजयित्वाप्रार्थयेत् ॥ तत्रपृथक्पृथक्मंत्राः ॥ यथांबुदश्छादयतिशिवायेमांवसुंधरां ॥ तथाछादयराजानंविजयारो ग्यवृद्धये ॥ इतिछत्रस्य १ ॥ शशांककरसंकाशक्षीरडिंडीरपांडुर ॥ प्रोत्सारयाशुदुरितंचामरामरदुर्लभ ॥ इतिचामरस्य २ ॥ शक्रकेतोमहावीर्यश्यामवर्णार्चयाम्यहं ॥ पत्रिराजनमस्तेस्तुयथानारायणध्वज ॥ काश्यपेयारुणभ्रातर्नागारेविष्णुवाहन ॥ अप्रमेयदुराधर्षरणेदेवारिसूदन ॥ गरुत्मान्मारुतगतिस्त्वयिसन्निहितोयतः ॥ साश्ववर्मायुधान्योधान्रक्षत्वंचरिपून्दह ॥ इति ध्वजस्य ३ ॥ हुतभुग्वसवोरुद्रावायुःसोमोमहर्षयः ॥ नागकिन्नरगंधर्वयक्षभूतगणग्रहाः ॥ प्रमथस्तुसहादित्यैर्भूतेशोमातृभिः सह ॥ शक्रःसेनापतिःस्कंदोवरुणश्चाश्रितस्त्वयि ॥ प्रदहंतुरिपून्सर्वान्राजाविजयमृच्छतु ॥ यानिप्रयुक्तान्यरिभिरायुधानिसमं ततः ॥ पतंतूपरिशत्रूणांहतानितवतेजसा ॥ हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा ॥ कालनेमिवधेयद्वद्यद्वत्त्रिपुरघातने ॥ शोभि तासितथैवाद्यशोभयास्मांश्चसंचर ॥ नीलचेलामिमांदृष्ट्वानश्यंत्वाशुनृपारयः ॥ व्याधिभिर्विविधैर्घोरैःशस्त्रैश्चयुधिनिर्जिताः ॥ पूतनारेवतीनाम्नीकालरात्रिश्चयास्मृता ॥ दहचाशुरिपून्सर्वान्पताकेत्वंमयार्चिता ॥ इतिपताकायाः ४ ॥ असिर्विशसनःखड्ग स्तीक्ष्णधारोदुरासदः ॥ श्रीगर्भोविजयश्चैवधर्माधारस्तथैवच ॥ एतानितवनामानिस्वयमुक्तानिवेधसा ॥ नक्षत्रंकृत्तिकातेतु

गुरुर्देवोमहेश्वरः ॥ रोहिण्यश्चशरीरंतेदैवतंचजनार्दनः ॥ पितापितामहोदेवस्त्वंमांपालयसर्वदा ॥ नीलजीमूतसंकाशस्तीक्ष्ण
दंष्ट्रःकृशोदरः ॥ भावशुद्धोमर्षणश्चअतितेजास्तथैवच ॥ इयंयेनधृताक्षोणीहतश्चमहिषासुरः ॥ तीक्ष्णधारायशुद्धायतस्मैखड्गा
यतेनमः ॥ इतिखड्गस्य ५ ॥ सर्वायुधानांप्रथमंनिर्मितासिपिनाकिना ॥ शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभं ॥ चंडिका
याःप्रदत्तासिसर्वदुष्टनिवर्हिणी ॥ तथाविस्तारिताचासिदेवानांप्रतिपादिता ॥ सर्वसत्वांगभूतासिसर्वाशुभनिवर्हिणी ॥ छुरिके
रक्षमांनित्यंशांतिंयच्छनमोस्तुते ॥ इतिछुरिकायाः ६ ॥ रक्षांगानिगजान्रक्षरक्षवाजिधनानिच ॥ ममदेहंसदारक्षकट्टारकन
मोस्तुते ॥ इतिकट्टारकस्य ७ ॥ सर्वायुधमहागात्रसर्वदेवारिषूदन ॥ चापमांसमरेरक्षसाकंशरवरैरिह ॥ धृतःकृष्णेनरक्षार्थसं
हारायहरेणच ॥ त्रयीमूर्तिगतंदेवंधनुरस्त्रंनमाम्यहं ॥ इतिधनुषः ८ ॥ प्रासपातयशत्रूंस्त्वमनयाकाममायया ॥ गृहाणजीवि
तंतेषांममसैन्यंचरक्षतां ॥ इतिकुंतस्य ९ ॥ शर्मप्रदस्त्वंसमरेचर्मसैन्येयशोद्यमे ॥ रक्षमांरक्षणीयोहंतापंनयनमोस्तुते ॥ इति
चर्मणः १० ॥ प्रोत्सारणायदुष्टानांसाधूनांरक्षणायच ॥ ब्रह्मणानिर्मितश्चासिव्यवहारप्रसिद्धये ॥ यशोदेहिसुखंदेहिजयदोभ
वभूपतेः॥ ताडयस्वरिपून्सर्वान्हेमदंडनमोस्तुते ॥ इतिकनकदंडस्य ११ ॥ दुंदुभेत्वंसपत्नानांघोरोहृदयकंपनः ॥ भवभूमि
पसैन्यानांतथाविजयवर्धनः॥यथाजीमूतघोषेणप्रहृष्यंतिचबर्हिणः॥तथास्तुतवशब्देनत्रस्यंत्वस्मद्विषोरणे॥इतिदुंदुभेः १२ ॥
पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलं ॥ विष्णुनाविधृतोनित्यमतःशांतिप्रदोभव ॥ इतिशंखस्य १३॥ विजयोजयदोजेता
रिपुघातीशुभंकरः॥दुःखहाधर्मदःशांतःसर्वारिष्टविनाशनः ॥ एतेवैसन्निधौयस्मात्तवसिंहामहाबलाः ॥ तेनसिंहासनेनत्वंवेदै

मंत्रैश्चगीयसे ॥ त्वयिस्थितःशिवःशांतस्त्वयिशक्रःसुरेश्वरः ॥ नमस्तेसर्वतोभद्रभद्रदोभवभूपते ॥ त्रैलोक्यंजयसर्वस्वसिंहास
ननमोस्तुते ॥ इतिसिंहासनस्य १४ ॥ महेंद्रनिर्मितेदिव्येदेवराजादिसेविते ॥ शिविकेपाहिमांनित्यंसदात्वंसन्निधाभव ॥ इति
शिविकायाः १५ ॥ गंधर्वकुलजातस्त्वंमाभूयाःकुलदूषकः ॥ ब्राह्मणःसत्यवाक्येनसोमस्यवरुणस्यच ॥ प्रभावाच्चहुताशस्यवर्ध
यत्वंतुरंगमान् ॥ तेजसाचैवसूर्यस्यमुनीनांतपसातथा ॥ रुद्रस्यब्रह्मचर्येणपवनस्यबलेनच ॥ स्मरत्वंराजपुत्रत्वंकौस्तुभंचमणिं
स्मर ॥ यांगतिंब्रह्महागच्छेन्मातृहापितृहातथा ॥ भूमिहानृतवादीचक्षयित्रश्चपराङ्मुखः ॥ सूर्याचंद्रमसौवायुर्यावत्पश्यंतिदुष्कृ
तं ॥ व्रजाश्वतांगतिंक्षिप्रंतच्चपापंभवेत्तव ॥ विकृतंयदिगच्छेथायुद्धाध्वनितुरंगम ॥ रिपून्विजित्यसमरेसहभर्त्रासुखीभव ॥
इतिअश्वस्य १६ ॥ कुमुदैरावणौपद्मःपुष्पदंतोथवामनः ॥ सुप्रतीकोंजनोनीलएतेष्टौदेवयोनयः ॥ तेषांपुत्राश्चपौत्राश्चवनान्य
ष्टौसमाश्रिताः ॥ मंद्रोभद्रोमृगश्चैवगजःसंकीर्णएवच ॥ वनेवनेप्रसूतास्तेस्मरयोनिंमहागज ॥ यांतुत्वावसवोरुद्राआदित्याःस
मरुद्गणाः ॥ भर्तारंरक्षनागेंद्रस्वामिवत्प्रतिपाल्यतां ॥ अवाप्नुहिजयंयुद्धेगमनेस्वस्तिनोव्रज ॥ श्रीस्तेसोमाद्बलंविष्णोस्तेजःसूर्या
ज्जवोऽनिलात् ॥ स्थैर्यंमेरोर्जयंरुद्राद्यशोदेवात्पुरंदरात् ॥ युद्धेरक्षंतुनागास्त्वांदिशश्चसहदैवतैः ॥ अश्विनौसहगंधर्वैःपांतुत्वां
सर्वतःसदा ॥ इतिगजस्य १७ ॥ छत्रादिष्वन्यतमद्येषांसद्मसुयत्सुलभंतत्संपूज्यतत्तन्मंत्रैःप्रार्थयेत् ॥ ॥ ७ ॥

॥ ५७ ॥ कोजागरीपूजा ॥ देशकालोत्कीर्तनांतेममलक्ष्मींद्रप्रीतिद्वारासकलदुःखदारिद्र्यनिरासपूर्वकंदीर्घायुरारोग्यपु
त्रपौत्रमहैश्वर्यसुखसंपदभिवृद्धिकुलाभ्युदयाद्यभीष्टसिद्ध्यर्थंकोजागरव्रतांगभूतंलक्ष्मींद्रपूजनंकरिष्ये ॥ आसनविधिंन्यासान्क

लशाद्यर्चनंनिर्विघ्नतायैगणपतिपूजाचक० ॥ पृथ्वीत्यादिपुरुषसूक्तन्यासांते ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदक
र्दमचिक्लीतेंदिरासुताऋषयःश्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः
अंत्याबृहती व्यंजनानिवीजानि स्वराःशक्तयः विंदवःकीलकं ममअलक्ष्मीपरिहारपूर्वकलक्ष्मीप्राप्त्यर्थेश्रीसूक्तन्यासेपूजायांच
विनियोगः ॥ ॐ हिरण्यवर्णां० मूर्ध्नि ॥ तांमआवह० नेत्रयोः ॥ अश्वपूर्वां० कर्णयोः ॥ कांसोस्मितांहिरण्य० नासि
कायां ॥ चंद्रांप्रभासां० मुखे० ॥ आदित्यवर्णे० कंठे ॥ उपैतुमां० बाह्वोः ॥ क्षुत्पिपासा० हृदये ॥ गंधद्वारां० नाभौ ॥
मनसःकाम० गुह्ये ॥ कर्दमेन० अपाने ॥ आपःस्रजंतु० ऊर्वोः ॥ आर्द्रांयःकरिणीं० जान्वोः ॥ आर्द्रांपुष्करिणीं०जंघयोः ॥
तांमआवह० पादयोः ॥ यःशुचिःप्र० सर्वांगे ॥ अथांगुलिन्यासः ॥ हिरण्यवर्णायैनमः अंगुष्ठाभ्यांनमः ॥ सुवर्णायैनमः त
र्जनीभ्यां० ॥ रजतस्रजायै० मध्यमाभ्यां० ॥ चंद्रायैनमः अनामिकाभ्यां० ॥ हिरण्मय्यैनमः कनिष्ठिकाभ्यां० ॥ लक्ष्म्यैन
मः करतलकरपृष्ठाभ्यां० ॥ एवंहृदयादि ॥ ततःकलशार्चनादिसंभारप्रोक्षणांतेपीठपूजा ॥ गुंगुरुभ्यो० पंपरमगुरुभ्यो० पंप
रात्परगुरुभ्यो० पंपरमेष्ठीगुरुभ्यो० ॥ वामभागे गंगणपतयेनमः दुंदुर्गायै० क्षंक्षेत्रपालाय० मध्येआधारशक्त्यै० मूलप्रकृ
त्यै० कालाग्निरुद्राय० मंमंडूकाय० कूर्माय० वराहाय० अनंताय० भूम्यै० अमृतार्णवाय० रत्नद्वीपाय० हेमगिरये० नंद
नोद्यानाय० मणिभूम्यै० रत्नमंडपाय० कल्पतरवे० रत्नसिंहासनाय० इतिसंपूज्य ॥ आग्नेयादिषु धर्माय० ज्ञानाय० वैरा
ग्याय० ऐश्वर्याय० ॥ पूर्वादिषु अधर्माय अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ऊर्ध्वंब्रह्मणेनमः अधःअनंताय० मध्ये

वास्तुपुरुषाय० इत्यावाह्य ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय इत्यष्टौलोकपाला नावाह्य॥गणपतिचतुष्टयं गणपतये० दुर्गायै० क्षेत्रपालाय०वास्तोष्पतये० चतुर्दिक्ष्वावाह्यसंपूज्य॥ ततऐरावतारूढौलक्ष्मींद्रौ तत्रसक्तुमिवतितेतिलक्ष्मीं इंद्रत्वावृषभमितींद्रंचआवाहयेत्॥ अथध्यानं ॥ यासापद्मासनस्थाविपुलकटितटीपद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिताशुभ्रवस्त्रोत्तरीया॥लक्ष्मीर्दिव्यैर्गजेंद्रैर्मणिगणखचितैः स्नापिताहेमकुंभैर्नित्यंसापद्महस्तामम च सतुगृहेसर्वमांगल्ययुक्ता ॥ चतुर्दंतगजारूढोवज्रपाणिःपुरंदरः ॥ शचीपतिश्चध्यातव्योनानाभूषणभूषितः ॥ श्रीलक्ष्मींद्रदेवते ध्यायामीतिध्यात्वा॥ॐ हिरण्यवर्णां० सहस्रशीर्षा० ॥ आगच्छेहमहालक्ष्मिसर्वसंपत्प्रदायिनि ॥ यावद्व्रतंसमाप्येतताव त्त्वंस न्निधाभव॥आवाहयामि ॥ तांमआवह० पुरुषएवेदं० ॥ अनेकरत्नसंयुक्तंनानामणिगणाचितं ॥ कार्तस्वरमयंदिव्यमासनंप्रति गृह्यतां ॥ आसनं० ॥ अश्वपूर्वां० एतावानस्य० ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं ॥ तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्य तां ॥ पाद्यं० ॥ कांसोस्मितां० त्रिपादूर्ध्व०॥निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि ॥ ऐरावतस्थितेदेविगृहाणार्घ्यंनमोस्तुते ॥ अर्घ्यं० ॥चंद्रांप्रभासां० तस्माद्विराळ० ॥ कर्पूरेणसुगंधेनसुरभिस्वादुशीतलं ॥ तोयमाचमनीयार्थंलक्ष्मित्वंप्रतिगृह्यतां ॥ आ चमनीयं०॥ आदित्यवर्णे० यत्पुरुषेण० ॥ मंदाकिन्याःसमानीतैर्हेमांभोरुहवासितैः॥ स्नानंकुरुष्वदेवेशिसलिलैश्चसुगंधिभिः ॥ स्नानं० ॥ दधिमधुसमायुक्तंपात्रयुग्मसमन्वितं ॥ मधुपर्कंगृहाणत्वंशुभदाभवशोभने ॥ मधुपर्कस० ॥ कनिक्रददिति सुगंध तैलेनमंगलस्नानं० आप्यायस्वेतिपंचामृतस्नानं० आपोहिष्ठेतिशुद्धोदकस्नानं० पूर्वपूजांसमाप्य श्रीसूक्तादिभिर्महाभिषेकः ॥

तदस्तुमित्रा०गृहावैप्रतिष्ठा०॥मध्येऐरावतस्थितलक्ष्मींद्रमूर्तीस्थापयामि ॥ उपैतु०तंयज्ञं० ॥ पट्टकूलयुगंदेविकंचुकेनसमन्वि तं॥परिधेहिकृपाकृत्वादुर्गेदुर्गार्तिनाशिनि ॥ वस्त्रं ॥ क्षुत्पिपासा० तस्माद्यज्ञात्सर्वहुतः ॥ स्वर्णसूत्रमयंदिव्यंब्रह्मणानिर्मितंपु रा ॥उपवीतंमयादत्तंगृहाणपरमेश्वरि ॥ उपवीतं० ॥ गंधद्वारां० तस्माद्यज्ञात्सर्वहुतऋचः० ॥ श्रीखंडंचंदनं० चंदनं ॥ सौभा ग्यसूत्रंवरदेसुवर्णमणिसंयुते ॥ कंठेबध्नामिदेवेशिसौभाग्यंदेहिमेसदा ॥ कंठसूत्रंस० ॥ ताडपत्रंमयादेविहेमनिर्मितमुत्तमं ॥ कर्णाभ्यांभूषणंदेविगृहाणजगदंबिके ॥ ताडपत्रं० ॥ हारकंकणकेयूरमेखलाकुंडलादिभिः ॥ रत्नाढ्यंकुंडलोपेतंभूषणंप्रतिगृह्य तां ॥ अलंकारान्० ॥ हरिद्रारंजितेदेविसुखसौभाग्यदायिनि ॥ तस्मात्त्वांपूजयाम्यत्रदुःखशांतिंप्रयच्छमे॥हरिद्रां० ॥ कुंकुमं कांतिदंदिव्यंकामिनीकामसंभवं ॥ कुंकुमेनार्चितेदेविप्रसीदपरमेश्वरि ॥ कुंकुमं० ६॥ सिंदूरमरुणाभासंजपाकुसुमसंनिभं ॥ पूजितासिमयादेविप्रसीदपरमेश्वरि ॥ सिंदूरं० ॥ चक्षुर्भ्यांकज्जलंरम्यंसुभगेशांतिकारके ॥ कर्पूरज्योतिरुत्पन्नंगृहाणपरमे श्वरि ॥ कज्जलं० ॥ अक्षताश्चसु० अक्षतान्० ॥ चंदनागरुकर्पूरकुंकुमंरोचनंतथा ॥ कस्तूर्यादिसुगंधांश्चसर्वांगेषुविलेपये ॥ अहिरिवेतिपरिमलद्रव्यं० ॥ मनसःकाममा० तस्मादश्वा० माल्यादीनि० पुष्पंस० ॥ मुक्ताफलयुतांमालांरत्नवैडूर्यसुप्रभां॥ माणिक्यस्वर्णग्रथितांगृह्यतांवरदेनमः ॥ रत्नमालां० ॥ पुष्पैर्नानाविधैर्दिव्यैःकुमुदैरथचंपकैः ॥ पूजार्थंग्रथितातुभ्यंमालेयंप्र तिगृह्यतां ॥ पुष्पमालांसमर्प० ॥ अथांगपूजा ॥ लक्ष्म्यैनमः पादौपूजयामि जयंत्यै० गुल्फौ० कात्यायन्यै० जंघे० शांत्यै० गुह्यं० वरदायै० नाभिं० देव्यै० स्तनौ० महाबलायै० बाहू० दैत्यनाशिन्यै० हस्तौ० ऐरावतस्थितायै० कंठं० सरस्वत्यै०

मुखं० वंशरूपिण्यै० नेत्रे० भक्तिप्रियायै० ललाटं० जगदात्मिकायै० शिरःपू० लक्ष्मींद्रसहितायै० सर्वांगंपू० ॥ अथप त्रीपूजा ॥ लक्ष्म्यैनमः चंपकपत्रंसमर्पयामि गौर्यै० करवीरपत्रं० नित्यायै० विष्णुक्रांतप० प्रकृत्यै० जातीपत्रं० सुरवंदि तायै० बिल्वप० शाकंभर्यै० पारिजातप० कल्याण्यै० दाडिमीप० सिद्ध्यै० सेवंतिकाप० कौमार्यै० धत्तूरप० दुर्गायै०वकु लप० शांतिरूपिण्यै० तुलसीप० पार्वत्यै० शमीप० जगन्मात्रे० अपामार्गप० लोकवंदितायै० गोकर्णप० शांत्यै०अगस्ति प० इतिपत्रीपूजा ॥ अथपुष्पपूजा ॥ लक्ष्म्यै० सुवर्णपुष्पं० ऐरावतस्थितायै० पद्मपु० लोकवंदितायै० सेवंतिकापुष्पं० वै ष्णव्यै० गोकर्णपुष्पं विद्युल्लतायै० मुनिपुष्पं० सिद्धिदायै० जपापुष्पं० वेदमात्रे० केतकीपु० जयायै० जातीपु० इंदिरा यै० तगरपु० प्रकृत्यै० करवीरपु० शांत्यै० धत्तूरपु० ऋद्ध्यै० पारिजातपु० सिद्ध्यै० वकुलपु० तुष्ट्यै० विष्णुक्रांतपु० कर वीरक्षेत्राधिपत्यायै० चंपकपु० इतिपुष्पपूजा॥अथावरणपूजा० ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० लक्ष्म्यै० सिद्धिदायै० अभीष्टसिद्धिं० १ ॥ गजाननायै० सिंहमुखायै० गृध्रास्यायै० कालतुंडिकायै०उष्ट्रग्रीवा यै० हयग्रीवायै० वाराह्यै० अभीष्टं० २ ॥ दुर्गायै० सिंहवाहिन्यै० महादेव्यै० कालरात्र्यै० धर्मचारिण्यै० कालिकायै० महालक्ष्म्यै० सरस्वत्यै० अभीष्ट० ३ ॥ इंद्राद्यष्टौलोकपालान्० अभीष्ट० ४ ॥ दीप्तायै० सूक्ष्मायै० जयायै० विजयायै० भद्रायै० विभूत्यै० विमलायै० आधारायै० विद्युल्लतायै० विश्वतोमुख्यै० अभीष्टसिद्धिं० ५ ॥ असितांगभैरवाय० रुरु० चंड० क्रोध० उन्मत्त० कपाल० भीषण० संहार० अभीष्ट० ६ ॥ आदित्यादिनवग्रहान् अभीष्ट० ७ ॥ इत्यावरणपूजा ॥

अथलक्ष्म्यष्टोत्तरशतनामभिः अक्षतपुष्पैःपूजाकार्या ॥ कर्दमेनप्र० यत्पुरुषं० ॥ दशागंगुग्गुलंधूपंकृष्णागरुसमन्वितं॥धूपंदे
विप्रदास्यामिलक्ष्मित्वंप्रतिगृह्यतां ॥ धूपं० ॥ आपःस्रजंतु० ब्राह्मणोस्य० आज्यंचवर्ति० दीपं० ॥ आर्द्रांपु० चंद्रमाम०॥ मो
दकापूपलड्डूकवटकोदुंबरादिभिः ॥ संयुतंपायसेनान्नंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं० ॥ आचम्यतांत्वयादेविभक्तिंमेह्यचलांकु
रु ॥ ईप्सितंमेवरंदेहिपरत्रचपरांगतिं ॥ आचमनं० ॥ करोद्वर्तनकंदेविसुगंधैःपरिवासितैः ॥ ईप्सितंमेवरंदेहि० ॥ करोद्वर्त
नं० ॥ पूगीफलमितितांबूलं० हिरण्यगर्भेतिदक्षिणां० इदंफलमितिफलं० ॥ श्रियेजात०॥चक्षुर्दंसर्वलोकानांतिमिरस्यनिवा
रणं ॥ आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि ॥ इतिनीराजनं० ॥ आर्द्रांयःक० नाभ्याआसीत्० अन्यथाशरणं० नमस्का
रः ॥ तांमआवह० सुप्तास्यां० यानिकानिच० प्रदक्षिणाः॥यःशुचिः०यज्ञेनयज्ञ० नमोमहद्भ्योनमो०॥ नमस्तेसर्वदेवानांवरदा
सिहरिप्रिये ॥ यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् ॥ विचित्रैरावतस्थायभास्वत्कुलिशपाणये॥पौलोम्यालिंगितांगायस
हस्राक्षायतेनमः ॥ इतिमंत्रपुष्पं ॥ गीतंवाद्यंनृत्यमि० ॥ प्रार्थना ॥ नमोदेव्यै० ॥ समस्तसंपत्सुखदांमहाश्रियंसमस्तकल्याण
करींमहाश्रियं ॥ समस्तसौभाग्यकरींमहाश्रियंभजाम्यहंज्ञानकरींमहाश्रियं ॥ समस्तभूतांतरसंस्थितात्वंसमस्तभोक्त्रीश्वरिवि
श्वरूपे ॥ तन्नास्तियत्त्वद्व्यतिरिक्तवस्तुत्वत्पादपद्मंप्रणमाम्यहंश्रीः ॥ शांत्यैनमोस्तुशरणागतरक्षणायैकांत्यैनमोस्तुदुरितक्षयका
रणायै ॥ क्षांत्यैनमोस्तुकमनीयगुणाश्रयायैधात्र्यैनमोस्तुधनधान्यसमृद्धिदायै ॥ सर्वमंगलसंपूर्णासर्वैश्वर्यसमन्विता ॥ आयां
हिश्रीमहालक्ष्मीस्त्वत्कलामयितिष्ठतु ॥ इतिप्रार्थना ॥ पूजायायत्कृतंकर्मज्ञानतोज्ञानतोपिवा ॥ तत्सर्वंक्षम्यतांदेविप्रसीदपरमे

श्वरि ॥ इतिपूजासमर्पणं ॥ निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि ॥ तथापिभक्त्यालक्ष्मित्वंगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यं दत्वा यस्यस्मृत्येतिनत्वा कर्मणःसांगतासिद्ध्यर्थंब्राह्मणपूजांकरिष्ये॥ अनेनकोजागरव्रतपूजनेनभगवत्यौलक्ष्मींद्रदेवतेप्रीयेतां व्रतसांगतार्थंव्रतकथाश्रवणंअक्षक्रीडांचकरिष्ये ॥ नारिकेलोदकंपीत्वाअक्षक्रीडांसमारभेत् ॥ नारिकेलान्पृथुकांश्चदेवपितृभ्यः ब्राह्मणेभ्यश्चोपहारंसमर्प्यबंधुभिःस्वयंभक्षयेत् ॥ विप्रेभ्योभूयसींदत्वाशिषोग्राह्याः ॥ इतिकोजागरीपूजासंपूर्णा ॥ ॥ छ ॥

॥५८॥ कार्तिकस्नानं ॥ मुहूर्तावशिष्टरात्रौतीर्थादौगत्वाविष्णुंस्मृत्वा देशकालौ० ममानेकजन्मार्जितमहापातकादिसमस्तपापक्षयद्वाराश्रीराधादामोदरप्रीत्यर्थंकार्तिकस्नानमहंकरिष्ये इतिसंकल्प्य ॥ नमःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेस्तुहृषीकेशगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदत्वा ॥ कार्तिकेऽहंकरिष्यामिप्रातःस्नानंजनार्दन ॥ प्रीत्यर्थंतवदेवेशदामोदरमया सह ॥ ध्यात्वाऽहंत्वांचदेवेशजलेस्मिन्स्नातुमुद्यतः ॥ तवप्रसादात्पापंमेदामोदरविनश्यतु ॥ इतिमंत्राभ्यांस्नात्वा पुनरर्घ्यंदद्यात् ॥ तत्रमंत्रौ ॥ व्रतिनःकार्तिकेमासिस्नातस्यविधिवन्मम ॥ गृहाणार्घ्यंमयादत्तंदनुजेंद्रनिषूदन ॥ नित्येनैमित्तिकेकृष्णकार्तिकेपापनाशिनि ॥ गृहाणार्घ्यंमयादत्तंराधयासहितोहरे ॥ अर्घ्यं ॥ अयंविधिःप्रतिदिनंसमानःआदावनुदितहोमवत् ॥ मलापकर्षणनित्यस्नानंसंध्यावंदनंचकृत्वातदनंतरंकार्तिकस्नानंकुर्यादितिकमलाकरः॥ अशक्तस्यतुकार्तिकस्नानेननित्यस्नानस्यप्रसंगसिद्धिः। यथाकन्याग्निहोत्रेणनित्याग्निहोत्रस्य॥ अपिवातंत्रं तंत्रपक्षेनित्यस्नानंकार्तिकस्नानंचतंत्रेणकरिष्यइतिसंकल्प्य नमःकमलनाभाय० इत्यर्घ्यंदत्वानित्यस्नानमंत्रान्पठित्वास्नायात्॥ नित्यस्नानार्घ्यंतेव्रतिनःकार्तिकेमासीतिमंत्राभ्यामर्घ्यंदद्यात्॥

॥ ५९ ॥ आकाशदीपः ॥ ममश्रीराधादामोदरप्रीतिद्वारादिव्यतेजोरूपैश्वर्यसंपदभिवृद्धिपूर्वकं समस्तपितृउद्धारविष्णुभ
वनप्राप्त्यादिफलसिद्ध्यर्थं अद्यारभ्यमासपर्यंतंप्रत्यहमाकाशदीपदानंकरिष्ये ॥ ततोगृहादनतिदूरेगोमयोपलिप्तेसचंदनजलो
क्षितेदेशेऽष्टदलालंकृते यथोक्तप्रमाणनिखातस्तंभोपरिघंटाष्टकस्रग्वस्त्रपताकाकलशादिशोभितंपरितोदलस्थिताष्टदीपंमध्येऽ
भ्रकादिकरंडस्थितंमहाप्रकाशंदीपंप्रज्वाल्यगंधादिनासंपूज्यप्रदक्षिणांते ॥ दामोदरायनभसितुलायांदोलयासह॥ प्रदीपंतेप्रय
च्छामिनमोनंतायवेधसे ॥ इतिसमर्प्यनमस्कुर्यात् ॥ अयंदीपःपूर्वजैःसहस्वोद्धारायप्रत्यब्दंप्रतिसद्मदेयः ॥ ॥ छ ॥
॥ ६० ॥ धात्रीपूजनविधिः ॥ आचम्यदेशकालोत्कीर्तनांतेममसमस्तपापक्षयपूर्वकपुत्रपौत्रादिसंततियशोबलप्रज्ञामेधा
भाग्यारोग्यविष्णुभक्तिप्राप्त्यर्थंधात्रीपूजांकरिष्ये ॥ संभारप्रोक्षणांते ॐ धात्र्यैनमइतिनाममंत्रेणधात्रींहरिद्राकुंकुमादिसौ
भाग्यद्रव्यसमर्पणपूर्वकंषोडशोपचारैःसंपूज्यनाममंत्रैःपुष्पाणिसमर्पयेत् ॥ ॐधात्र्यै० शांत्यै० कांत्यै० मेधायै० प्रकृत्यै० विष्णु
पत्न्यै० महालक्ष्म्यै० रमायै० कमलायै० इंद्राण्यै० लोकमात्रे० कल्याण्यै० कमनीयायै० सावित्र्यै० जगद्धात्र्यै० गायत्र्यै०
अव्यक्तायै० विश्वरूपायै० सुरूपायै० अब्धिभवायै० २१इति॥ततोधात्रीमूलेसव्येनैवमंत्राभ्यांतर्पणंकार्यं॥ पितापि
न्येअपुत्रायेचगोत्रिणः॥वृक्षयोनिगतायेचयेचकीटत्वमागताः॥ रौरवेनरकेयेचमहारौरवसंज्ञके ॥ तिर्यग्योनिगताये
ंडमध्यगाः॥ पिशाचत्वंगतायेचयेचप्रेतत्वमागताः॥तेपिबंतुमयादत्तंधात्रीमूलेऽक्षयंपयः ॥ आब्रह्मस्तंबपर्यंतंदेवर्षि
वाः॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः॥ ततोधात्रींसूत्रेणवेष्टयेत् ॥ दामोदरनिवासायैधात्र्यैदेव्यैनमोनमः॥सूत्रे

णानेनत्वन्नामिसर्वदेवनिवासिनीं॥ततोधात्र्यैनमः इतिचतुर्दिक्ष्वन्नवलीन्दत्वाऽष्टदिक्ष्वष्टौदीपान्प्रज्वाल्यसमर्पयेत्॥ इमेदीपाम
यादत्ताःप्रदीप्ताघृतपूरिताः ॥ धात्रिदेविनमस्तुभ्यमतःशांतिंप्रयच्छमे ॥ ततोधात्रीमष्टकृत्वःप्रदक्षिणीकृत्यनमेत् ॥ धात्रिदे
विनमस्तुभ्यंसर्वपापक्षयंकरि ॥ पुत्रान्देहिमहाप्राज्ञेयशोदेहिबलंचमे ॥ प्रज्ञांमेधांचसौभाग्यंविष्णुभक्तिंचशाश्वतीं॥ नीरोगंकु
रुमांनित्यंनिष्पापंकुरुसर्वदा ॥ सर्वस्वंकुरुमांदेविधनवंतंतथाकुरु ॥ संवत्सरकृतंपापंदूरीकुरुममाक्षये ॥ ततोघृतपूर्णंसहेमकां
स्यपात्रंब्राह्मणायदद्यात्॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतं ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिताः ॥ इति ॥ ॥

॥ ६१ ॥ गोवत्सद्वादशीपूजा ॥ आचम्यदेशकालौनिर्दिश्यममेहजन्म निजन्मांतरेचअखिलकामनासिद्धिद्वारागोरोम
कोटिवर्षपर्यंतस्वर्वासकामागोवत्सद्वादशीव्रतकल्पोक्तफलावाप्तयेसवत्सगोःपूजांकरिष्ये॥ कलशाद्यर्चनसंभारप्रोक्षणांते॥नमो
गोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच॥नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ ध्यानं ॥ आगच्छदेविकल्याणिशुभांपूजां
गृहाणच ॥ वत्सेनसहितांत्वाहंदेवीमावाहयाम्यहं ॥ आवाहनं ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितं ॥ आसनंतेमयादत्तं
गृहाणजगदंबिके॥ श्रीरुद्ररूपिण्यैगवेनमःआसनं ॥ सौरभेयिसर्वहितेपवित्रेपापनाशिनि ॥ गृह्णीष्वैतन्मयादत्तंपाद्यंत्रैलोक्य
वंदिते ॥ पाद्यं॥ सर्वदेवमयेदेविसर्वतीर्थमयेशुभे ॥ गृहाणार्घ्यंमयादत्तंसौरभेयिनमोस्तुते ॥ अर्घ्यं ॥ देहस्थितासिरुद्राणीशं
करस्यसदाप्रिया ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ आचमनीयं॥ यालक्ष्मीःसर्वलोकेषुयाचदेवेष्ववस्थिता ॥ धेनुरूपेण
सादेवीममपापंव्यपोहतु ॥ स्नानं ॥ संभवेपंचामृतादिदत्वामहाभिषेकः ॥ आच्छादनंगवेदद्यांसम्यक्शुद्धंसुशोभनं ॥ सुरभिर्व

स्त्रदानेनप्रीयतांपरमेश्वरी ॥ वस्त्रं ॥ सर्वदेवमयेदेविचंदनंचंद्रसन्निभं ॥ कस्तूरीकुंकुमाढ्यंचसुगंधिप्रतिगृह्यता ॥ चंदनं ॥
अक्षताश्च० अलंकारान्सौभाग्यद्रव्याणिपरिमलद्रव्याणिच ॥ माल्यादीनिसुगंधीनि० ॥ पुष्पाणि पुष्पमालाच ॥ न्यासः ॥
शृंगमूलयोर्ब्रह्मविष्णून्यसामि शृंगाग्रयोःसर्वतीर्थानि० ललाटेमहादेवं० ललाटाग्रेमहादेवीं० नासावंशेषण्मुखं०कर्णयोरश्वि
नौ० चक्षुषोःशशिभास्करौ० दंतेषुवायुं० जिह्वायांवरुणं० हुंकारेसरस्वतीं० गंडयोःयमधर्मौ०ओष्ठयोः संध्याद्वयं० ग्रीवा
यांइंद्रं० कुक्षिदेशेरक्षांसि० उरसिसाध्यान्० चतुष्पादेषुधर्मं० खुरमध्येगंधर्वान्० खुराग्रेपन्नगान्० खुरपार्श्वेष्वप्सरसः० पृष्ठे
एकादशरुद्रान्० सर्वसंधिषुवसून्० श्रोणीतटेपितॄन्० लांगूलेसोमं० वालेषुआदित्यरश्मीन्० गोमूत्रेगंगां० क्षीरेसरस्वतीं०
दध्निनर्मदां० सर्पिषिहुताशनं० रोमसुत्रयस्त्रिंशत्कोटिदेवान्० उदरेपृथिवीं० पयोधरेषुसागरान्न्यसामि ॥ देवद्रुमरसोद्भूतोगो
घृतेनसमन्वितः ॥ प्रयच्छामिमहाभागेधूपोयंप्रतिगृह्यतां ॥ धूपं० ॥ आनंदकृत्सर्वलोकेदेवानांचसदाप्रियः ॥ गौस्त्वमादिज
गन्नाथोदीपोयंप्रतिगृह्यतां ॥ दीपं० ॥ सुरभिस्त्वंजगन्मातर्देविविष्णुपदेस्थिता ॥ सर्वदेवमयेग्रासंमयादत्तमिमंग्रस ॥ गोग्रास
नैवेद्यं ॥ करोद्वर्तनार्थेचंदनं तांबूलंफलंदक्षिणांचसमर्प्य ॥ नीराज्यकर्पूरदीपंचसमर्प्य ॥ पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥
तासांमध्येतुयानंदातस्यैदेव्यैनमोनमः ॥ नमस्कारः ॥ यानिकानिचपापानि० इतिप्रदक्षिणाः ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभे
यीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ पुष्पांजलिः ॥ गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेनि
त्यंगवांमध्येवसाम्यहं ॥ सुरभिस्त्वंजगन्मातर्नित्यंविष्णुपदेस्थिते ॥ सर्वदेवमयेदेविसर्वदेवैरलंकृते ॥ मातर्ममाभिलाषितंसफलं

कुरुनंदिनि ॥ इत्यादिसंप्रार्थयेत् ॥ पुष्पांजल्यंतेताम्रपात्रेगंधपुष्पाक्षतयुतंजलंगृहीत्वा ॐमातारुद्राणांदुहितावसूनां० इदं मर्घ्यमितिगोःपादमूलेविप्रोर्घ्यंदद्यात्॥ स्त्रीशूद्रादिस्तु ॥ क्षीरोदार्णवसंभूतेसुरासुरनमस्कृते ॥ सर्वदेवमयेमातर्गृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदद्यात् ॥ अर्घ्यदानांतेतज्जलंसाक्षतंस्वमूर्ध्निनिक्षिप्यमापादिसिद्धान्वटकान्गोग्रासार्थंदद्यात् ॥ ॥ छ ॥

॥६२॥ गुरुद्वादशीपूजा ॥ आचमनादिदेशकालकीर्तनांतेसपरिवारस्यममधर्मार्थकाममोक्षचतुर्विधपुरुपार्थसिद्ध्यर्थंश्रीपादश्रीवल्लभश्रीगुरुदत्तात्रेयरूपीश्रीसद्गुरुप्रीत्यर्थंषोडशोपचारैः पूजांकरिष्ये॥यथाधिकारमासनवविधिन्यासकलशाद्यर्चनसंभारप्रोक्षणांते ध्यायेत् ॥ ब्रह्मानंदंपरमसुखदंकेवलंज्ञानमूर्तिंद्वंद्वातीतंगगनसदृशंतत्त्वमस्यादिलक्ष्यं ॥ एकंनित्यंविमलमचलंसर्वधीसाक्षिभूतंभावातीतंत्रिगुणरहितंसद्गुरुंतंनमामि ॥ काषायवस्त्रंकरदंडधारिणंकमंडलुंपद्मकरेणशंखं॥ चक्रंगदाभूषितभूषणाढ्यंश्रीपादराजंशरणंप्रपद्ये॥इत्यादिध्यात्वापुरुषसूक्तेनषोडशोपचारैर्यथाविभवंपूजयेत् ॥ सांगतासिद्ध्यैब्राह्मणभोजनंसंकल्प्य कृत्वापुराणश्रवणादिनारात्रिंनयेत्॥ पूजायांविशेषोग्रेदत्तजयंतीप्रसंगेउक्तःसएवात्रापिग्राह्यः ॥ ॥ छ ॥ ॥ छ ॥

॥ ६३ ॥ यमदीपदानं ॥ त्रयोदश्यांसायंसंध्यावंदनोत्तरंदेशकालौसंकीर्त्य ममापमृत्युविनाशार्थंयमदीपदानंकरिष्येइति संकल्प्य तिलतैलसहितंदीपंगंधाक्षतपुष्पैरलंकृतंगृहाद्बहिर्दक्षिणस्यांदिशिनिधायमंत्रंपठेत् ॥ मृत्युनापाशदंडाभ्यांकालेनश्यामयासह ॥ त्रयोदश्यांदीपदानात्सूर्यजःप्रीयतांमम ॥ अनेनदीपदानेनश्रीयमःप्रीयतां ॥ इतियमदीपः ॥ ॥ छ ॥

॥ ६४ ॥ नरकचतुर्दशी ॥ लांगलोद्धृतंसमूलमपामार्गवृक्षंकंटकमंजरीपत्रसहितमार्द्रं तथातुंबीवृक्षंचक्रमर्दवृक्षंचानीय

उक्तकाले देशकालौसंकीर्त्यममनरकभयपरिहारार्थं सुगंधितैलाभ्यंगपूर्वकंमंगलस्नानंकरिष्ये ॥ स्नानसमये अपामार्गादिवृक्ष
त्रयंशिरःप्रभृत्यंगेषुप्रादक्षिण्येनपरितोभ्रामयेत् ॥ तत्रमंत्रः ॥ सीतालोष्टसमायुक्तसकंटकदलान्वित ॥ हरपापमपामार्गभ्राम्य
माणःपुनःपुनः ॥ एवंत्रिवारंततोधिकंवाकार्यं प्रतिभ्रमणंमंत्रावृत्तिः ॥ चक्रमर्दस्तरोटाइतित्र्यंबकक्षेत्रादिषुप्रसिद्धः ॥ कचित्
टाकळाइतिप्रसिद्धः ॥ उक्तवृक्षाणामलाभेकेवलेनापामार्गवृक्षेणैवभ्रामणंकार्यं ॥ अभ्यंगस्नानोत्तरंयमतर्पणं तच्चयज्ञोपवीति
नाप्राचीनावीतिनावाकार्यं॥यज्ञोपवीतित्वेदेवतीर्थेनसाक्षताभिरद्भिःप्राङ्मुखेनत्रिस्त्रिःकार्यं जीवत्पितृकेणतुयज्ञोपवीतिनैवदे
वतर्पणधर्मेणकार्यं ॥ ममनरकभयनिरासार्थंयमप्रसादसिद्ध्यर्थंचनरकचतुर्दश्यांयमतर्पणंकरिष्ये ॥ यमंतर्पयामि धर्मराजं०
मृत्युं० अंतकं० वैवस्वतं० कालं० सर्वभूतक्षयं० औदुंबरं० दध्नं० नीलं० परमेष्ठिनं० वृकोदरं० चित्रं० चित्रगुप्तं० १४इति॥
ततः ॥ यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः ॥ भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति ॥ इमंश्लोकं
दशवारंजपेत् ॥ अनेनतर्पणेनयमःप्रीयतां ततोधृतमंगलतिलकवस्त्राभरणःसुहृद्भिःसहकृतोपहारोगीतादिनादिनंनयेत् ॥ ॥ ६५ ॥

लक्ष्मीपूजनम् ॥ आचमनादिदेशकालोत्कीर्तनांतेऽस्माकमित्यादि ममश्रीमहालक्ष्मीप्रीतिद्वाराअलक्ष्मीपरिहा
रपूर्वकंविपुलश्रीप्राप्तिसन्मंगलमहैश्वर्यकुलाभ्युदयसुखसमृद्ध्यादिकल्पोक्तफलसिद्ध्यर्थंलक्ष्मीपूजनंकुबेरपूजनंचकरिष्ये॥ आस
नविधिंन्यासान्कलशाद्यर्चनंनिर्विघ्नतासिद्ध्येगणपतिपूजनंचकरिष्ये ॥ पुरुषसूक्तंन्यस्य॥ श्रीसूक्तन्यासंविभवेसतिद्वारपूजापी
ठपूजादिपूर्वोक्तकोजागरपूजोक्तवत्कृत्वा सक्तुमिवतितेतिमंत्रेणश्रीसूक्तमंत्रैर्वालक्ष्मीं कुबेरायनमःइतिकुबेरंचावाह्यध्यायेत ॥

(केचिदत्रलेखनीमपीपात्राद्युपकरणसहितेआयव्ययलेखपुस्तकेसरस्वतीमपितंत्रेणपूजयंतितदासरस्वत्याअप्यावाहनं) ॥ ध्या
यामितांमहालक्ष्मींकर्पूरक्षोदपांडुरां ॥ शुभ्रवस्त्रपरीधानांमुक्ताभरणभूषितां ॥ पंकजासनसंस्थानांस्मेराननसरोरुहां ॥ शारदें
दुकलाकांतिंस्निग्धनेत्रांचतुर्भुजां ॥ पद्मयुग्माभयवरव्यग्रचारुकरांबुजां ॥ अभितोगजयुग्मेनसिच्यमानांकरांबुना ॥ ध्यानं ॥
हिरण्यवर्णां० सहस्र० ॥ महालक्ष्मिसमागच्छपद्मनाभपदादिह ॥ पूजामिमांगृहाणत्वंत्वदर्थंदेविसंभृतां ॥ आवाहनं ॥ तांमआ०
पुरुष० ॥ आलयस्तेहिकथितःकमलंकमलालये ॥ कमलेकमलेह्यस्मिन्स्थितिंमत्कृपयाकुरु ॥ आसनं ॥ अश्वपूर्वां० एतावां० ॥
गंगादिसलिलाधारंतीर्थंमंत्राभिमंत्रितं ॥ दूरयात्राश्रमहरंपाद्यंमेप्रतिगृह्यतां ॥ पाद्यं ॥ कांसोस्मितां० त्रिपादूर्ध्व० ॥ तीर्थोदकै-
र्महापुण्यैःकल्पितंपापहारकैः ॥ गृहाणार्घ्यंमहालक्ष्मिभक्तानामुपकारिणि ॥ अर्घ्यं ॥ चंद्रांप्र० तस्माद्वि० ॥ कर्पूरागुरुसंमि
श्रंशीतलंजलमुत्तमं ॥ लोकमातर्गृहाणेदंदत्तमाचमनंमया ॥ आचमनं० आदित्यवर्णे० यत्पुरुषेण० ॥ स्नानायतेमहालक्ष्मि
कर्पूरागुरुवासितं ॥ आहृतंसर्वतीर्थेभ्यःसलिलंप्रतिगृह्यतां ॥ स्नानं ॥ आप्यायस्वेत्यादिभिःपंचामृतं ॥ पयोदधिघृतंदेविमधु
शर्करयायुतं ॥ पंचामृतंमयादत्तंस्नानार्थंप्रतिगृ० ॥ कनिक्रद० अभ्यंगस्नानं ॥ गंधद्वारां० गंधोदकं ॥ शुद्धोदकं ॥ गंधा
दिपूर्वपूजांतेमहाभिषेकः ॥ उपैतुमां० तंयज्ञं० ॥ तंतुसंतानसंयुक्तंकलाकौशलकल्पितं ॥ सर्वांगाभरणंश्रेष्ठंवसनंपरिधीयतां ॥
वस्त्रं ॥ क्षुत्पिपासा० तस्माद्यज्ञा० ॥ कंचुकं उपवस्त्रंच ॥ गंधद्वारां० तस्माद्यज्ञा० ॥ मलयाचलसंपन्नंनानापन्नगरक्षितं ॥ शीत
लंबहुलामोदंचंदनंप्रतिगृह्यतां ॥ चंदनं ॥ अक्षतान् ॥ अहिरिव० ॥ तालपत्रंमयानीतंहरिद्राकुंकुमांजनं ॥ सिंदूरालक्तकंदास्ये

सौभाग्यद्रव्यमीश्वरि ॥ सौभाग्यद्रव्यं ॥ रत्नकंकणकेयूरकांचीकुंडलनूपुरं ॥ मुक्ताहारंकिरीटंचगृहाणाभरणानिमे ॥ अलंकारान् ॥ मनसःकाममा० तस्मादश्वा० ॥ मिलत्परिमलामोदमत्तालिकुलसंकुलं ॥ गृहाणनंदनोत्पन्नंपद्मेकुसुमसंचयं ॥ पुष्पाणि ॥ अथांगपूजा ॥ श्रियै० पादौपू० लक्ष्म्यै० जानुनी० पद्मायै० ऊरू० धात्र्यै० कटिं० रमायै० उदरं० वरदायै० स्तनौ० लोकमात्रे० कंठं० चतुर्भुजायै० बाहू० ऋद्ध्यै० मुखं० सिद्ध्यै० नासिकां० पुष्ट्यै० नेत्रे० तुष्ट्यै० ललाटं० इंदिरायै० शिरः० सर्वेश्वर्यै० सर्वांगं० ॥ अथपत्रपूजा ॥ श्रियै० पद्मपत्रं० लक्ष्म्यै० दूर्वां० पद्मायै० तुलसी० धात्र्यै० बिल्व० रमायै० चंपक० वरदायै० बकुल० लोकमात्रे० मालती० चतुर्भुजायै० जाती० ऋद्ध्यै० आम्र० सिद्ध्यै० मल्लिका० पुष्ट्यै० अपामार्ग० तुष्ट्यै० अशोक० इंदिरायै० करवीर० हरिप्रियायै० बदरी० भूत्यै० दाडिमी० ईश्वर्यै० अगस्ति ॥ कर्दमेन० यत्पुरुषं० ॥ गंधसंभारसंनद्धंनानाद्रुमरसोद्भवं ॥ सुरासुरनरानंदंधूपंदेविगृहाणमे ॥ धूपं ॥ आपःसृजंतु० ब्राह्मणोस्य० ॥ मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसां ॥ निदानंदेविदीपोऽयंकल्पितस्तवभक्तितः ॥ दीपं ॥ आर्द्रांपु० चंद्रमा० ॥ एलालवंगशर्करादिमिश्रगोक्षीरलड्डुकादि नैवेद्यः ॥ देवतालयपातालभूतलाधारधान्यजं ॥ षोडशाकारसंभारंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं ॥ इदंफलं० फलं ॥ पातालतलसंभूतंवदनांभोजभूषणं ॥ नानागुणसमायुक्तंतांबूलंदेविगृ० ॥ तांबूलं ॥ हिरण्यगर्भ० दक्षिणां ॥ श्रियेजात० चंद्रादित्यौ० महानीराजनं ॥ आर्द्रांयुः क० नाभ्याआसी० ॥ नमोदेव्यै० नमस्कारः ॥ तामआवह० सप्तास्या० यानिकानि० प्रदक्षिणाः ॥ यःशुचिः० यज्ञेन० सर्वस्याद्यामहा० पुष्पांजलिं ॥ गीतंवाद्यंनृत्यमित्यादि० ॥ प्रार्थना ॥ कमलाचपलालक्ष्मीश्चलाभूतिर्हरिप्रिया ॥ पद्मा

पद्मालयासंपदुच्चैःश्रीःपद्मधारिणी ॥ नमस्तेसर्वदेवानांवरदासिहरिप्रिये ॥ यागतिस्त्वत्प्रपन्नानांसामेभूयात्त्वदर्चनात् ॥
यादेवीसर्वभूतेषुलक्ष्मीरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ धनदायनमस्तुभ्यंनिधिपद्माधिपायच ॥
भवंतुत्वत्प्रसादान्मेधनधान्यादिसंपदः ॥ अत्रपूजायांगुडमिश्रधान्याकवीजंशर्कराखंडांल्लाजांश्चार्पयंतिशिष्टाः ॥ आवाहनं
नजानामीत्यादिपूजांसमापयेत् ॥ ततोब्राह्मणानुपाहारादिनासंतोष्यभूयसींदक्षिणांदत्वापुराणगीतादिनारात्रिंनयेत् ॥ ॥

॥ ६६ ॥ गोवर्धनादिपूजाविधिः ( अन्नकूटोत्सवः ) ॥ मुख्यगोवर्धनसंनिधौतस्यैवपूजनं ॥ तदसंनिधौगोमयादिना
तद्रूपंकृत्वातत्सहितश्रीगोपालमूर्तिपूजनंकार्यं ॥ तत्रप्रतिपदिप्रातरभ्यंगस्नानंकृत्वाधृतमंगलतिलकःस्त्रीभिःकृतनीराजनोनि
त्यकर्मांतेआचम्यदेशकालौनिर्दिश्य ममश्रीकृष्णप्रीतिद्वारासकलपापक्षयपूर्वकंकोटिशोधेनुप्राप्तिपुष्ट्यायुःक्षेमादिसिद्ध्यर्थंगोव
र्धनसहितश्रीगोपालपूजनंगोवृंदपूजनंचकरिष्ये इतिसंकल्प्य गणेशपूजादिसंभारप्रोक्षणांते॥बलिराज्ञोद्वारपालोभवानद्यभवप्र
भो ॥ निजवाक्यार्थनार्थायसगोवर्धनगोपते ॥ इतिगोवर्धनयुतंगोपालमावाह्य भक्ष्यभोज्यादिनिवेदनपूर्वकंषोडशोपचारैःसंपू
ज्यप्रार्थयेत् ॥ गोपालमूर्तेविश्वेशशक्रोत्सवविभेदक ॥ गोवर्धनकृतच्छत्रपूजांमेहरगोपते ॥ गोवर्धनधराधारगोकुलत्राणकार
क ॥ विष्णुबाहुकृतच्छायगवांकोटिप्रदोभव ॥ ततःपंचोपचारैर्गोवत्सादीन्संपूज्यप्रार्थयेत् ॥ लक्ष्मीर्यालोकपालानांधेनुरूपेण
संस्थिता ॥ घृतंवहतियज्ञार्थेममपापंव्यपोहतु ॥ गावोममाग्रतःसंतु० ॥ प्रत्यक्षगवामसंनिधौमृदादिप्रतिमासुपूजाकार्या ॥
ततोवृतर्त्विग्द्वारागृहसिद्धान्नेन आगावोअग्मन्० प्रैतेवदंतु० इतिमंत्राभ्यांहोमःकार्यः ॥ स्त्रीशूद्रादीनांतूक्तपौराणमंत्राभ्यां

(लक्ष्मीर्यालोक० गोवर्धन०) होमांते विप्रान्सुहृदश्चविशेषान्नैःसंभोज्यविप्रेभ्योधेनुंदीनेभ्यश्चान्नंदत्वागोभ्योयवसमन्नग्रा संगिरयेवलिंचदद्यात् ॥ ततोगाःशरत्पुष्पादिभिरलंकृत्यस्वयंभुक्तवद्भिःस्वलंकृतैःस्वनुलिप्तैःसुवेषैर्गोब्राह्मणहोमाग्निगिरीन्प्रदक्षिणीकुर्वद्भिस्तथागोभिःसहप्रदक्षिणाकार्या ॥ यथागोभिरपिब्राह्मणादीनांप्रदक्षिणाकृताभवति ॥ तद्दिनेगवांदोहनंभारवाहनंचवर्ज्यं ॥ इतिगोवर्धनपूजान्नकूटोत्सवविधिःसमाप्तः ॥ ततोऽपराह्णेमार्गपालीबंधनादिविधिःसिंध्वादौज्ञेयः ॥ ॥

॥ ६७ ॥ वलिराजपूजा ॥ अस्मिन्दिनेप्रतिसद्मप्रातः तथा रात्रौराजागृहमध्येप्रांगणेवाभूमौपंचरंगैःकृतेमंडलेतैरेववलिमालिख्यपूजयेत् ॥ नृत्यगीतप्रेक्षणकैश्चतांरात्रिंनयेत् ॥ लोकैस्तु शय्यायांशुक्लतंडुलैस्तमालिख्यपूजयेत् ॥ ममश्रीविष्णुसांनिध्यसिद्ध्यर्थंवलिपूजांकरिष्ये ॥ मंत्रः ॥ वलिराजनमस्तुभ्यंविरोचनसुतप्रभो ॥ भविष्येंद्रसुराराते पूजेयंप्रतिगृह्यतां ॥ प्रार्थना ॥ वलिराजनमस्तुभ्यंदैत्यदानववंदित॥इंद्रशत्रोऽमरारातेविष्णुसांनिध्यदोभव ॥ ततोवलिप्रीत्यर्थंवस्त्रादिदत्वाऽग्निर्ज्योतिरिति दीपान्दद्यात् ॥ अत्रमंगलस्नानातिरिक्तंसर्वंयथाचारंकार्यं नित्यत्वाभावात् ॥ राज्ञःकर्तव्यविशेषःकृत्यरत्नावल्यांद्रष्टव्यः ॥

॥६८॥ यमद्वितीयापूजा॥देशकालकथनांते ममश्रीयमप्रीत्यर्थंयमादिदेवतानांपूजनंकरिष्ये ॥ ततोयमंचित्रगुप्तंयमदूतांश्चावाह्यसंपूज्य ॥ एह्येहिमार्तंडजपाशहस्तयमांतकालोकधरामरेश॥ भ्रातृद्वितीयाकृतदेवपूजांगृहाणचार्घ्यंभगवन्नमस्ते ॥ इत्यर्घ्यंदत्वा ॥ धर्मराजनमस्तुभ्यंनमस्तेयमुनाग्रज ॥ त्राहिमांकिंकरैःसार्धंसूर्यपुत्रनमोस्तुते ॥ यमस्वसर्नमस्तेस्तुयमुनेलोकपूजिते ॥ वरदाभवमेनित्यंसूर्यपुत्रिनमोस्तुते॥इतियमंयमुनांचप्रणम्यकर्मसमाप्तिः ॥ अत्र भगिनीत्ववश्यंभ्रातरंसंभोज्यतांबूलादिनापूज

येत् तदित्थं ॥ ममश्रीयमप्रीतिद्वाराअवैधव्यप्राप्यर्थंभ्रातुरायुरभिवृद्ध्यर्थंचयमपूजनंभ्रातृभोजनंवस्त्रादिभिस्तत्पूजनंचक रिष्ये ॥ यमपूजांतेभ्रातरंगंधादिनासंपूज्यभोजयेत् ॥ भ्रातस्तवानुजाताहंभुंक्ष्वभोज्यमिदंशुभं ॥ प्रीतयेयमराजस्ययमुना याविशेषतः ॥ ज्येष्ठातुभ्रातस्तवाग्रजाताहमितिवदेत् ॥ भोजनांतेचतांबूलादिदत्वा ॥ मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ चिरंजीवीयथैवत्वंतथामेभ्रातरंकुरु ॥ इतिप्रार्थ्यकर्मसमापयेत् ॥ भ्रातापि भगिनींवस्त्रालंकारादिभिःपूजयेत् ॥ सोदर्या-दिभगिन्यभावेभगिनीत्वेनव्यवहृतयासहायंपूजादिविधिःकार्यइतिकृत्यरत्नावल्यादौस्पष्टं ॥ इतियमद्वितीया ॥ ॥

॥ ६९ ॥ कूष्मांडनवमी ॥ देशकालौनिर्दिश्यममब्रह्महत्यादिसमस्तपापक्षयपूर्वकंपुत्रपौत्रसौभाग्यादिसकलमनोरथावाप्तिकूष्मांडबीजसमसहस्रसंख्याब्दब्रह्मलोकनिवासकामःश्रीपरमेश्वरप्रीत्यर्थंब्राह्मणाययथाशक्त्युपस्करयुतंकूष्मांडदानंकरिष्ये तदंगंतत्पूजनंब्राह्मणपूजनंचकरिष्ये ॥ कूष्मांडदेवताभ्योनमइतितंसंपूज्य ब्राह्मणंचसंपूज्य स्वस्त्यस्तु० ॥ ब्रह्महत्यादिपापघ्नं ब्रह्मणानिर्मितंपुरा ॥ कूष्मांडंबहुबीजाढ्यंपुत्रपौत्रादिवृद्धिदं ॥ मुक्ताप्रवालहेमादियुक्तंदत्तंतवद्विज ॥ अनंतपुण्यफलद मतःशांतिंप्रयच्छमे ॥ इमंव्रीहिराशिस्थंकूष्मांडमिक्षुदंडचुक्रामलकदीपाद्युपस्करयुतंब्राह्मणायसंप्रददे ॥ ॥

॥७०॥ एकादशीपूजा ॥ आचमनादिदेशकालकीर्तनांतेसपरिवारस्यममश्रीमहाविष्णुप्रीतिद्वारासकलपापक्षयपूर्वकंधर्मार्थकाममोक्षचतुर्विधपुरुपार्थसिद्ध्यर्थंषोडशोपचारैर्महाविष्णुपूजांकरिष्ये ॥ यथाधिकारंन्यासादिकृत्वाकलशार्चनादिसंभारप्रोक्षणांते ॥ येभ्योमाता० एवापित्रे० इतिपठित्वा शांताकारमितिविष्णुंध्यायेत् ॥ चतुर्भुजंमहाकायंजांबूनदसमप्रभं ॥

शंखचक्रगदापद्मरमागरुडशोभितं ॥ सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः ॥ एवंविधंहरिंध्यात्वाततोयजनमारभेत् ॥ श्रीमहा
विष्णुंध्यायामि ॥ सहस्रशीर्षा० ॥ आवाहयामिदेवेशंभक्तानामभयप्रदं ॥ स्निग्धकोमलकेशंचमनसावाहयेहरिं ॥ आवाहनं ॥
पुरुषएवेदं० ॥ सुवर्णमणिभिर्दिव्यैरचितेदेवनिर्मिते ॥ दिव्यसिंहासनेकृष्णउपविश्यप्रसीदमे ॥ आसनं ॥ एतावानस्य० ॥ पादो
दकंसुरश्रेष्ठसुवर्णकलशेस्थितं ॥ गंधपुष्पाक्षतैर्युक्तंपाद्यंमेप्रतिगृह्यतां ॥ पाद्यं ॥ त्रिपादूर्ध्वउदैत्० ॥ अष्टद्रव्यसमायुक्तंस्वर्णपा
त्रोदकंशुभं ॥ अभयंकरभक्तानांगृहाणार्घ्यंजगत्पते ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ कर्पूरेणसमायुक्तमुशीरेणसुवासितं ॥ दत्तमाच
मनीयार्थंनीरंस्वीक्रियतांविभो ॥ आचमनीयं ॥ यत्पुरुषेण० ॥ गंगागोदावरीचैवयमुनाचसरस्वती ॥ नर्मदासिंधुकावेरीताभ्यः
स्नानार्थमाहृतं ॥ स्नानं ॥ पृथक्पंचामृतस्नानादिमहाभिषेकांतंकुर्यात् ॥ आचमनं ॥ तंयज्ञं० ॥ वस्त्रयुग्मंसमानीतंपट्टसूत्रेण
निर्मितं ॥ सुवर्णखचितंदिव्यंगृहाणत्वंसुरेश्वर ॥ वस्त्रं ॥ तस्माद्यज्ञा० ॥ कार्पासतंतुभिर्युक्तंब्रह्मणानिर्मितंपुरा ॥ अनेकरत्न
खचितमुपवीतंगृहाणभो ॥ उपवीतं ॥ तस्माद्यज्ञा० ॥ चंदनंमलयोद्भूतंकस्तूरीचारुचंदनं ॥ कर्पूरेणचसंयुक्तंस्वीकुरुष्वानुले
पनं ॥ चंदनं ॥ हरिद्रादिसौभाग्यद्रव्यं भूषणानिच ॥ अहिरिवभोगैः० परिमलद्रव्याणि ॥ तस्मादश्वा० ॥ शतपत्रैश्चकह्लारैश्चंप
कैर्मल्लिकादिभिः ॥ तुलसीयुक्तपुष्पाणिगृहाणपुरुषोत्तम ॥ पुष्पाणि ॥ तुलसीकुंदमंदारपारिजातांबुजैस्तुया ॥ पंचभिर्ग्रथितामा
लावनमालेतिकथ्यते ॥ वनमालां ॥ अत्रसहस्रतुलस्यर्पणं० ॥ यत्पुरुषं० ॥ दशांगंगुग्गुलोद्भूतंसुगंधंचमनोहरं ॥ कृष्णागुरुस
मायुक्तंधूपंदेवगृहाणमे ॥ धूपं ॥ ब्राह्मणोस्य० ॥ साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥

दीपं ॥ चंद्रमामनसो० ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ नानाविधोपहारादिनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं० ॥ मध्येपानी
यं० उत्तरापोशनं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनं० पूगीफलमितितांबूलं ॥ इदंफलमितिफलं ॥ हिरण्यगर्भेतिद
क्षिणां ॥ चंद्रादित्यौचधरणीवि० आर्तिक्यदीपं० ॥ नाभ्याआसी०नमोस्त्वनंताय० नमस्कारं॥सप्तास्यासन्०यानिकानिच० ॥
प्रदक्षिणां ॥ यज्ञेनयज्ञ० ॥ देवदेवजगन्नाथगोपालप्रतिपालक॥गोपदैःकृतसंत्राणगृहाणकुसुमांजलिं ॥ मंत्रपुष्पांजलिं० ॥ मंत्र
हीनंक्रियाहीनं० इतिप्रार्थनां॥ (क्वचिदर्घ्याण्यपिददत्येभिर्मंत्रैः॥ अनंतंवामनंशौरिंवैकुंठमपराजितं ॥ गृहाणार्घ्यंमयादत्तंमातु
रुत्संगसंस्थितं ॥ इदमर्घ्यं ॥ देवकीगर्भसंभूतंयशोदानंदनंहरिं ॥ गरुडध्वजंश्रीधरंचसृष्टिस्थित्यंतकारणं ॥ इदमर्घ्यं ॥ नमः
कमलनाभायनमस्तेजलशायिने॥नमस्तेस्तुहृषीकेशगृहाणार्घ्यंनमोस्तुते ॥ इदमर्घ्यं) अनेनकृतपूजनेनश्रीमहाविष्णुःप्रीयतां ॥

॥ ७१ ॥ प्रबोधोत्सवतुलसीविवाहौ ॥ देशकालौसंकीर्त्यश्रीदामोदरप्रीत्यर्थंप्रबोधोत्सवंसंक्षेपतस्तुलसीविवाहविधिंच
तंत्रेणकरिष्ये॥तदंगतयापुरुषसूक्तेनविधिनाषोडशोपचारैस्तंत्रेणश्रीमहाविष्णुपूजांतुलसीपूजांचकरिष्ये ॥ गणपतिंसंपूज्यन्या
सादिविधाय कलशार्चनादिसंभारप्रोक्षणांते शांताकारमितिविष्णुंध्यात्वा ॥ ध्यायामितुलसींदेवींश्यामांकमललोचनां ॥ प्रस
न्नांपद्मकह्लारवराभयचतुर्भुजां॥किरीटहारकेयूरकुंडलादिविभूषितां॥ धवलांशुकसंवीतांपद्मासननिषेदुषीं ॥ इतितुलसींचध्या
त्वासहस्रशीर्षेतिश्रीमहाविष्णुंतुलसींचावाह्य ॥ पुरुषएवेदमित्यादिभिः ॥ त्रैलोक्यजननीदेविसर्वलोकैकपावनि ॥ संपूजयामिदे
वेशितुलसित्वांहरिप्रिये॥ इतिपौराणेनचश्रीमहाविष्णवेदामोदरायश्रीदेव्यैतुलस्यैचनमआसनमित्यादिस्नानांतेमंगलवाद्यैःसुगं

धितैलहरिद्राभ्यांनागवल्लीदलगृहीताभ्यांउष्णोदकेनच कनिक्रददितिमंगलस्नानंविष्णवेतुलस्यैचसुवासिनीभिःकारयित्वास्व
यंवादत्वा पंचामृतस्नानंसमर्प्यशुद्धोदकेनाभिषिच्यवस्त्रयज्ञोपवीतचंदनंदत्वातुलस्यैहरिद्राकुंकुमकंठसूत्रमंगलालंकारान्द
त्वामंत्रपुष्पांतपूजांसमाप्यघंटादिवाद्यघोषेणदेवंप्रबोधयेत् ॥ तत्रमंत्राः इदंविष्णु० ॥ योजागार० इतितुआचारप्राप्तः ॥
ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदितवंदनीय ॥ बुध्यस्वदेवेशजगन्निवासमंत्रप्रभावेणसुखेनदेव ॥ इयंचद्वादशीदेवप्र
बोधार्थंतुनिर्मिता ॥ त्वयैवसर्वलोकानांहितार्थंशेषशायिना ॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते ॥ त्वयिसुप्तेजगत्सुप्त
मुत्थितेचोत्थितंजगत्॥एवमुत्थाप्य चरणंपवित्रं०॥ गतामेघावियच्चैवनिर्मलंनिर्मलादिशः ॥ शारदानिचपुष्पाणिगृहाणममके
शव॥इत्यादिमंत्राभ्यां पुष्पांजलिंदद्यात्॥ अथाचारात्तुलसीसंमुखांश्रीकृष्णप्रतिमांकृत्वामध्येंतःपटंधृत्वामंगलाष्टकपद्यानिपठि
त्वाअंतःपटंविसृज्याक्षताप्रक्षेपंकृत्वादामोदरहस्तेतुलसीदानंकुर्यात् ॥ देवींकनकसंपन्नांकनकाभरणैर्युतां ॥ दास्यामिविष्णवेतु
भ्यंब्रह्मलोकजिगीषया ॥ मयासंवर्धितांयथाशक्त्यलंकृतामिमांतुलसींदेवींदामोदरायश्रीधरायवरायतुभ्यमेहंसंप्रददे ॥
इतिदेवपुरतःसाक्षतजलंक्षिपेत् ॥ श्रीमहाविष्णुःप्रीयतामित्युक्त्वाइमांदेवींप्रतिगृह्णातुभवान् इतिवदेत् ॥ ततोदेवह
स्तस्पर्शंतुलस्याःकृत्वा ॥ कइदंकस्माअदात्कामःकामायादात्कामोदाताकामःप्रतिग्रहीताकामंसमुद्रमाविश कामेनत्वाप्रतिगृ
ह्णामिकामैतत्तेवृष्टिरसिद्यौस्त्वाददातुपृथिवीप्रतिगृह्णातु ॥ इतिमंत्रमन्येनवाचयेत्॥ यजमानः ॥ त्वंदेविमेग्रतोभूयास्तुलसीदे
विपार्श्वतः ॥ देवित्वंपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ दानस्यप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांसंप्रददे इतिदेवपुरतोदक्षिणाम

र्पयेत् ॥ ततःस्वस्तिनोमिमीता० शंनइंद्राग्नीइत्यादिस्वस्वशाखोक्तानिशांतिसूक्तानिविष्णुसूक्तानिचपठेयुः॥ तुलसीयुतायविष्ण
वेमहानीराजनंकृत्वामंत्रपुष्पंदत्वा सपत्नीकःसगोत्रजःसामात्योयजमानश्चतस्रःप्रदक्षिणाःकुर्वीत ॥ ब्राह्मणेभ्योदक्षिणांदत्वा
यथाशक्तिब्राह्मणभोजनंसंकल्प्यकर्मेश्वरार्पणंकुर्यात्॥ इतिधर्मसिंधुव्रतराजसंश्लिष्टःप्रबोधोत्सवतुलसीविवाहप्रयोगःसंपूर्णः ॥

॥ ७२ ॥ वैकुंठचतुर्दशी ॥ देशकालावुच्चार्यअस्माकमित्यादिममवैकुंठचतुर्दशीव्रतकल्पोक्तफलावाप्तयेइत्यादिसंकल्प्य
निशीथेविष्णुंतुलसीपत्रकमलादिभिःसंपूज्य ॥ ततःप्रातःस्नानोत्तरंबिल्वपत्रद्रोणपुष्पकमलादिभिःशिवंसंपूजयेत् ॥ विष्णुपू
जापूर्वमेकादश्युक्तवच्छिवपूजाचपूर्वनिर्दिष्टसोमवारपूजावदेवेतिविस्तरभियानात्रमुहुर्न्यस्तासानिर्दिष्टस्थलादवगंतव्या ॥ ॥

॥ ७३ ॥ त्रिपुरोत्सवः ॥ आचमनादिदेशकालोत्कीर्तनांतेऽस्माकमित्यादिममश्रीशिवप्रीतिद्वारासकलपापक्षयपूर्वकंवि
मलज्ञानशिवसायुज्यादिशुभफलप्राप्तयेत्रिपुराख्यदीपप्रज्वालनंतदंगत्वेनश्रीशिवपूजांचकरिष्ये इतिसंकल्प्य यथाविभवंयथा
धिकारंचशिवंषोडशोपचारैःसंपूज्यगंधादिनालंकृत्य ॥ कीटाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः ॥ दृष्ट्वाप्रदीपंनच
जन्मभाजोभवंतिनित्यंश्वपचाहिविप्राः॥इतित्रिपुरदीपंप्रज्वाल्यसमर्पयेत् ॥ अनेनत्रिपुरदीपप्रज्वालनेनश्रीमत्रिपुरहरःप्री० ॥

॥ ७४ ॥ चंपाषष्ठीपूजा ॥ मार्गशीर्षशुक्लप्रतिपदमारभ्यषष्ठीपर्यंतंप्रत्यहंमल्लारिपूजनंतत्सन्निधौअखंडदीपदानंचकार्यं ॥
आचम्यदेशकालौसंकीर्त्य मल्लारिमार्तंडप्रीत्यर्थंयथामिलितोपचारैःपूजनंकरिष्ये ॥ तदंगत्वेनगणपतिपूजनंकलशाद्यर्चनंचक
रिष्ये इतिसंकल्प्यकृत्वादेवंध्यायेत्॥ ध्यायेन्मल्लारिदेवंकनकगिरिनिभंह्मालसाभूषितांगंश्वेताश्वंखड्गहस्तंविबुधमुनिगणैःसेव्य

मानंकृतार्थैः ॥ युक्तांघ्रिंदैत्यमूर्ध्नाडमरुविलसितंनैशचूर्णाभिरामंनित्यंभक्तेषुतुष्टंश्वगणपरिवृतंनित्यमोंकारगम्यं॥ इतिध्यात्वा मल्लारिमार्तंडायनमःइतिनाममंत्रेणपूजयेत् ॥ ततः तलिकापूजनं तत्प्रकारः ॥ वैश्वदेवंकृत्वानैवेद्यंदत्वादेवाग्रेगोमयेनोपलिप्ते रंगवल्ल्याद्यलंकृतेदेशेपात्रंनिधायतन्मध्ये कलशंनिधायजलेनापूर्यतस्मिन्कमलाकाराणिनागवल्लीदलानिस्थापयित्वातदुपरिना रिकेलफलंनिधायतत्समीपेतांबूलदक्षिणाभंडाराभिधहरिद्राचूर्णंचसंस्थाप्य आचम्यदेशकालौसंकीर्त्यमल्लारिमार्तंडप्रीत्यर्थंम त्कुलाचारप्राप्तंगंधादिनातलिकापूजनंकरिष्ये ॥ तलिकायैनमःइतिमंत्रेणोपचारान्समर्प्यहरिद्राचूर्णंदेवेदत्वाचतुर्भिर्ब्राह्मणैः सह यजमानः एळकोट एळकोट इतिशब्दमुच्चारयन्तलिकोत्थापनंवारत्रयंकार्यं ॥ पश्चान्नारिकेलस्फोटनंकारयित्वातदुदके नदेवंप्रोक्ष्यतांबूलंदक्षिणांनारिकेलबीजांशंचदेवेदत्वापूर्ववत्रिवारंतलिकोत्थापनंविधेयं ॥ ततश्चतुर्भ्योब्राह्मणेभ्यःहरिद्राला पनंकृत्वानारिकेलबीजांशंदक्षिणांचदत्वास्वयंहरिद्रांधृत्वानारिकेलबीजांशंभक्षयेत् ॥ इत्याचारः ॥ ॥ छ ॥ ॥ छ ॥

॥ ७५ ॥ दत्तजयंतीपूजा ॥ आचमनादिदेशकालकीर्तनांतेसपरिवारस्यममधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंश्री पादश्रीवल्लभश्रीगुरुदत्तात्रेयरूपीश्रीसद्गुरुप्रीत्यर्थंषोडशोपचारैःपूजांकरिष्ये ॥ यथाधिकारमासनविधिन्यासकलशाद्यर्चनसं भारप्रोक्षणांते ॥ ध्यायेत् ॥ ब्रह्मानंदंपरमसुखदंकेवलंज्ञानमूर्तिंद्वंद्वातीतंगगनसदृशंतत्त्वमस्यादिलक्ष्यं ॥ एकंनित्यंविमलमचलं सर्वधीसाक्षिभूतंभावातीतंत्रिगुणरहितंसद्गुरुंतंनमामि ॥ काषायवस्त्रंकरदंडधारिणंकमंडलुंपद्मकरेणशंखं ॥ चक्रंगदाभूषितभू षणाढ्यंश्रीपादराजंशरणंप्रपद्ये ॥ ध्यायामि ॥ ॐ दीर्घतमामतेयोजुजुर्वान्दशमेयुगे ॥ अपामर्थंयतीनांब्रह्माभवतिसारथिः ॥

सहस्रशीर्षा० ॥ कोटिसूर्यप्रतीकाशंनिजानंदैकविग्रहं ॥ राजद्वैराग्यसाम्राज्यंगुरुमावाहयाम्यहं ॥ आवाहनं ॥ ( सिद्धमूर्तावा वाहनाभावात्पुष्पांजलिः )॥पुरुषएवेदं०॥यमाद्यष्टांगयोगोक्तसिद्धासनविराजते॥मूर्तसद्गुरवेतुभ्यमासनंपरिकल्पये ॥आसनं॥ एतावानस्य० ॥ येनत्रैलोक्यमखिलंव्याप्तंपादत्रयेणहि ॥ तस्मैसद्गुरवेपाद्यंपादयोःप्रददाम्यहं ॥पाद्यं॥ त्रिपादूर्ध्व० ॥ चंदनाक्षत पुष्पादिफलरत्नसमन्वितं ॥ श्रद्धोपकल्पितंचार्घ्यंसद्गुरोप्रतिगृह्यतां ॥ अर्घ्यं ॥ तस्माद्विराळ० ॥ एलालवंगकर्पूरकस्तूरीगंधवा सितं॥जलमाचमनीयार्थंदास्येभक्त्याजगद्गुरो ॥ आचमनीयं ॥ यत्पुरुषेण०॥ तीर्थानांलोकपापौघक्षालनोत्थांहसांभिदे ॥ लीलो पात्तावतारायस्नानंसद्गुरवेददे ॥ स्नानं ॥ आप्यायस्वेत्यादिपंचमंत्रैःपृथक्पंचामृतस्नानं ॥ गंधद्वारामितिचंदनोदकस्नानं ॥ आपोहिष्ठेत्यादिभिःशुद्धोदकस्नानं ॥ पंचोपचारैःपूर्वपूजांसमाप्यपुरुषसूक्तविष्णुसूक्तादिभिर्महाभिषेकंकुर्यात् ॥ स्नानांतेआ चमनं ॥ तंयज्ञं० ॥ आशावासायदीक्षांगकाषायवसनायच ॥ काषायमंशुकंदास्येपरिधानायभिक्षवे ॥ वस्त्रं ॥ आचमनं ॥ तस्मा द्यज्ञात्सर्वहुतःसंभृतं०॥पट्टकूलोर्णरोमोत्थवस्त्रमार्गाजिनान्यदः॥प्रावारार्थंप्रदास्यामिपरिव्राड्रूपयोगिने॥ प्रावरणमुपवीतंचा ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥ कस्तूरीकेशरामोदयुक्तंपाटीरजंरजः॥भस्मोद्धूलितदेहायचंदनंयतयेर्पये ॥ चंदनं ॥ सर्वालंकाररू पायकृत्तिदंडकमंडलून्॥दंडिभूषाप्रदान्दास्येदत्तमस्करिणेमुदा॥ अलंकारान् ॥ अहिरिव० ॥ वेदांतकल्पवृक्षोत्थमहावाक्य प्रसूनजं ॥ गंधमाघ्रायतृप्तायद्यांपरिमलंमुहुः ॥ परिमलद्रव्याणि ॥ तस्मादश्वा० ॥ पुष्पवद्दहनक्षत्रमालिनेज्ञानशालिने ॥ मालत्यादीनिपुष्पाणिगुरवेप्रतिपादये ॥ पुष्पाणि ॥ तुलसीकुंदमंदारपारिजातांबुजैःकृतां ॥ वैजयंतीमिमांमालांगुरुकंठेर्पया

म्यहं ॥ पुष्पमाला ॥ अत्रयथाविभवंसहस्राष्टोत्तरशततुलस्यर्पणं ॥ यत्पुरुषं० ॥ जगत्यामोदजातंयद्यस्मादाघ्रेयतागतं॥आघ्रा
णार्थंददेतस्मैधूपंश्रीपादरूपिणे ॥ धूपं ॥ ब्राह्मणोस्य० ॥ यद्भासाभासंतेवह्निःसूर्याचंद्रमसौतडित् ॥ घृतदीपंप्रदास्यामितस्मैस
द्गुरवेपुनः ॥ दीपं ॥ चंद्रमाम० ॥ऊरीकृतजगत्पूज्यचतुर्थाश्रमयोगतः॥भिक्षार्थमटमानायभैक्षंदास्यामिभिक्षवे ॥ विश्वंभरोऽनि
शंयावदाब्रह्मादिपिपीलिकं ॥ भृणात्यन्नजलाभ्यांयस्तस्मैनैवेद्यमर्पये ॥ नैवेद्यं० ॥ मध्येपानीयंउत्तरापोशनंहस्तप्रक्षालनंमुखप्र
क्षालनंकरोद्वर्तनार्थेचंदनं ॥ इदंफलमितिफलानि ॥ पूगीफलमितितांबूलं ॥ हिरण्यगर्भगर्भेतिदक्षिणां ॥ श्रियेजात० ॥ नीरा
जितंसुरगणैर्ऋषिभिर्दीपराजिभिः॥तमारार्तिक्यदीपेनगुरुंनीराजयाम्यहं॥आरार्तिक्यं कर्पूरदीपं ॥ नाभ्याआसी० ॥ यत्पाद
पद्ममरानिजमूर्धक्लृप्तसद्रत्नवन्मुकुटकोटिभिरानमंति ॥ तंस्वांघ्रिलग्नजनतार्तिहरंदयालुंश्रीसद्गुरुंभयहरंशिरसानमामि ॥ न
मोगुरुभ्योगुरुपादुकाभ्योनमःपरेभ्यःपरपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादुकाभ्योनमोस्तुलक्ष्मीपतिपादुकाभ्यः ॥ नमस्का
रान् ॥ सप्तास्यासन्०॥स्वर्भूःपाताललोकेषुयदटाव्यादिवानिशं ॥ प्रदक्षिणंकरोमीहसद्गुरुंपादचारतः ॥ प्रदक्षिणाः ॥ यज्ञेन
यज्ञ० ॥ मंत्रविद्भिर्मंत्रशतैर्मंत्रवत्संस्तुतायच ॥ श्रीमत्सद्गुरवेदास्येमंत्रपुष्पांजलिंमुदा ॥ मंत्रपुष्पांजलिं॥ गीतवाद्यनृत्यछत्रचाम
राद्युपचारान्० ॥ प्रार्थना ॥ अनेकजन्मार्जितपापसंघैःसंसारकूपेपतितंगभीरे ॥ पुनःपुनर्जन्ममृतीभजंतंश्रीपादमांतारयपाद
लग्नं ॥ बद्धांजलिस्त्वांमुहुरर्थयेहंभवत्पदांभोजरतिर्दृढास्तु ॥ स्वरूपविज्ञानमपिप्रसादान्मुच्येयमोहादपिगर्भवासात् ॥ वाणीगु
णानुकथनेश्रवणौकथायांहस्तौचकर्मसुमनस्तवपादयोर्नः॥स्मृत्यांशिरस्तवनिवासजगत्प्रणामेदृष्टिःसतांदर्शनेऽस्तुभवत्तनूनां ।

अपराधसहस्राणिक्रियंतेहर्निशंमया ॥ दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ इत्यादिक्षमापयेत् ॥ इतिश्रीदत्तपूजासंपूर्णा ॥

॥ ७६ ॥ मकरसंक्रांतिः ॥ तिलस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी ॥ तिलभुक्तिलदाताचषट्तिलाःपापनाशनाः॥देशकालौनिर्दिश्यममकायिकवाचिकमानसिकत्रिविधपापनिवर्हणपूर्वकंश्रीसूर्यप्रसादसिद्ध्येतिलकल्कोद्वर्तनपूर्वंस्नानंकरिष्ये॥ इतिसंकल्प्ययथाविधिस्नात्वायथाविभवंश्रीसूर्यनारायणंसंपूज्ययथाशक्तिदानादिकृत्वाअयनश्राद्धंचकुर्यात् ॥ ॥ ७ ॥

॥ ७७ ॥ तिलपात्रदानं ॥ ताम्रपात्रेतिलान्कृत्वापलषोडशनिर्मिते ॥ सहिरण्यंस्वशक्त्यावाविप्रायप्रतिपादयेत् ॥ ममवाङ्मनःकायजत्रिविधपापनाशपूर्वकंब्रह्मलोकप्राप्तिकामस्तिलपात्रदानंकरिष्ये॥ उक्तपरिमाणेताम्रपात्रेप्रस्थतिलान्कर्षसुवर्णयुतान्यथाशक्तिसुवर्णयुतान्वाकृत्वाविप्रंसंपूज्य ॥ देवदेवजगन्नाथवांछितार्थफलप्रद ॥ तिलपात्रंप्रदास्यामितवांगेसंस्थितोह्यहं ॥ इतिमंत्रेणदद्यात् ॥ तिलाःपुण्याःपवित्राश्चसर्वपापहराःस्मृताः ॥ शुक्लाश्चैवतथाकृष्णाविष्णुगात्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुमेसदा॥इदंतिलपात्रंयथाशक्तिदक्षिणासहितंसूर्यदैवत्यंब्रह्मलोकप्राप्तिकामस्तुभ्यमहंसंप्रददे ॥ इतिदद्यात् ॥ अग्रेतुपुंस्त्रीकर्तृकानिविविधदानानिव्रतराजस्थानिसंग्रहीष्यंते ॥ ॥ ७ ॥

॥७८॥ दधिमंथदानं ॥ प्रातस्तिलकल्कोद्वर्तनेनस्नात्वा शुचिवस्त्रंपरिधाय देशकालौसंकीर्त्य ममश्रीसवितृप्रीतिद्वारादुःखदारिद्र्यनिरासपूर्वकंचिरजीविपुत्रपौत्रयुतधनधान्यसमृद्धिविविधभोगसुखसंपदादिमनोरथसिद्ध्येदधिमंथदानंकरिष्ये॥तदंगपूजनं०॥उपलिप्तभूमौस्वस्तिकंविरच्य तत्रद्रोणमितगोधूमादिधान्यपुंजोपरि दधिपूर्णभांडंकुंकुमाद्यलंकृतंरक्तसूत्रवस्त्रवेष्टि

तमंथदंडंनिधायोपरिप्रतिमाया यशोदांकृष्णं दंडेदेवींसूर्यंचसंपूज्य परितोष्टदीपान्प्रज्वाल्य लाजेक्षुखंडपृथुकलड्डुकादिनिवेद्य॥ पूजितासिमयादेविदधिमंथनभाजने ॥ यशोदेसुमहाभागेपुत्रंदेहिमनोरमं ॥ श्रीकृष्णपरमानंदसंसारार्णवतारक ॥ पुत्रंदेहिमनोज्ञंमेऋणत्रयविमोक्षणं॥इतिप्रार्थ्यविप्रंसंपूज्य ॥ गृहाणत्वंद्विजश्रेष्ठदधिमंथनभाजनं ॥ नवनीतेनसहितंयशोदासहितंहरिं ॥ प्रसादःक्रियतांमह्यंसूर्यरूपनमोस्तुते ॥ इतितत्पात्रंप्रतिमादियुतंदद्यात् ॥ इतिदधिमंथदानं ॥ ॥ छ ॥

॥ ७९ ॥ संक्रांतिदानानि ॥ अथेदानींमकरसंक्रमेप्रचलितानांस्त्रीकर्तृकविविधदानानांसंग्रहः ॥ तत्रादौसुघटदानं ॥ देशकालौसंकीर्त्य ममश्रीसवितृप्रीतिद्वारासकलपापक्षयपूर्वकंइहजन्मनिजन्मांतरेचस्थिरसौभाग्यकुलाभिवृद्धिधनधान्यसमृद्धिदीर्घायुःपुष्टिमहैश्वर्यमंगलाभ्युदयसुखसंपदादिकल्पोक्तफलसिद्ध्ये अस्मिन्मकरसंक्रमपुण्यपर्वकालेब्राह्मणायधान्यपूर्णसुघटदानंक०॥देयद्रव्यंविप्रंचसंपूज्य॥ मकरेर्केतुसंप्राप्तेसुघटंधान्यपूरितं॥रवेःप्रीतिकरंदास्येसौभाग्यादिफलाप्तये ॥ इदंसुघटदानंसंकल्पहेतवेसंप्रददे ॥ दानसांगतायैदक्षिणांदद्यात्॥एवमग्रेपिसंकल्पादिज्ञेयं ॥ विशेषस्तत्रवक्ष्यते ॥छ॥ अथकरक [ चिलीपिली ] दानं०॥अपत्याद्यभिवृद्ध्येकरकदानंकरिष्ये॥ करकैरन्वितंस्थूलंकलशंबहुभिःफलैः ॥ सोपस्करंप्रयच्छामिवस्त्रसंवेष्टिताननं ॥छ॥ अथदधिमंथपात्र[घुसळण]दानं० ॥ गोमहिषीवृंदरूपसंपदभिवृद्ध्येदधिमंथदानं० ॥ दध्नाप्रपूरितंपात्रंवस्त्रकांचनसंयुतं ॥ सेक्षुदंडंप्रदास्यामिगवांवृद्धिकरंपरं ॥छ॥ अथधाणकदानं ॥ मद्गृहेक्षय्यधान्यराशिसमृद्ध्येकंडितधान्यदानंक०॥ उलूखलस्थितंधान्यंमुसलाहतिनिस्तुषं ॥ ददामिप्रीतिदंभानोर्धान्यराशिविवर्धनं ॥छ॥ अथवस्त्रपूर्ति [धडवती] दानं॥मम

अविच्छिन्नशुभसंततिवृद्ध्येसुवासिन्यैवस्त्रपूर्तिदानं० ॥ नानाकृतीनिरम्याणिविचित्राणिशुभानिच ॥ वासांसिसंप्रयच्छामिशु
भसंततिवृद्धये ॥छ॥ अथचीरचोलकदानं ॥ ममावैधव्यादिप्राप्तयेचीरचोलक० ॥ सकंचुकमिदंवस्त्रमनर्घतुष्टिदंरवेः ॥ पुरं
ध्र्यैतेप्रदास्यामिसौभाग्यंवर्धतांमम ॥ छ ॥ आवापक[आवा]दानं ॥ ममसर्वगुणोपेतभृत्यसुहृद्भर्तृपुत्रादिपरिवृतायाउत्तमगृ
हसुखशांतिसमृद्ध्यादिसिद्धयेआवापकदानंकरिष्ये ॥ धान्यराशौस्थूलसूक्ष्मविविधाकाराणिताम्रमृदादिभांडानिराशीकृत्यपू
जांते ॥ नानाविधानिभांडानिस्थूलसूक्ष्माण्यनेकशः॥ राशीकृतानिदास्यामिसर्वकामसमृद्धये ॥ नानाभांडरचितंइममावापकं
सूर्यदैवत्यंसोपस्करंसंकल्पोक्तफलसिद्धयेनानानामगोत्रेभ्योविप्रेभ्यःसुवासिनीभ्यश्चदातु० ॥ छ ॥ हरिद्रादिदानं॥सुखसौभा
ग्यमंगलाभिवृद्धयेसुवासिनीभ्योहरिद्रादिदानंक० ॥ गौर्याविनिर्मितंपूर्वंसर्वमंगलकारणं ॥ स्त्रीणांसौभाग्यसुखदंहरिद्रादिस
मर्पये ॥ छ ॥ नेत्रदानं ॥ सकलार्थदर्शननिर्मलकीर्तिरूपादिमंगलावाप्तयेनेत्रसंज्ञकदर्पणयुग्मदानंक० ॥ सर्वार्थदर्शनंपुण्यंरू
पकीर्तिविवर्धनं ॥ क्षेमप्रदंप्रयच्छामिनिर्मलंदर्पणद्वयं ॥ छ ॥ हीरदीपदानं ॥ ममविमलज्ञानपुष्टितुष्टिकांत्यादिसिद्धयेहीर
काख्यदीपयुग्मदानं० ॥ स्वच्छंगोधूमराशिस्थंदीपयुग्मघृतान्वितं ॥ हीरवत्कांतिविज्ञानपुष्टितुष्टिकरंददे ॥छ॥ अथानाख्या
त[अवच्चितफल]दानं ॥ सुपुत्रादिफलप्राप्तयेऽनाख्यातफलदानंक० ॥ जलेफलंप्रक्षिप्य ॥ अनाख्यातंजलेक्षिप्तंफलमेतदनुत्त
मं ॥ ससुवर्णप्रदास्यामिसुपुत्रादिफलप्रदं ॥ छ ॥ अथफलपिंडिका[पेंड]दानं ॥ अखंडवंशवृद्ध्यादिफलप्राप्त्यैफलपिंडिका० ॥
अखंडोत्तारितंभद्रंवंशवृद्धिकरंसदा ॥ ददामितेनारिकेलक्रमुकादिफलोच्चयं ॥ छ ॥ अथफलयुग्म [जोडसंक्रांति] दानं० ॥

सकलाभीष्टसिद्धयेविप्रेभ्योद्वादशफलयुग्मदानंक० ॥ फलद्वादशयुग्मानिनारिकेलोद्भवानिच ॥ विप्रेभ्यःसंप्रदास्यामिसर्वका
मफलाप्तये ॥छ॥ अथवर्धितफलदानं ॥ सतिलंगुडसंयुक्तंफलंप्रीतिकरंनृणा ॥ वर्धितंप्रगृहाणेदमतःशांतिंप्रयच्छमे ॥ छ ॥
अथतप्तजलेतंडुलनिर्वाप[आधणभरणें]दानं॥अक्षय्यान्नपरिपोषतुष्ट्यादिप्राप्त्यैसुतप्तजलेतंडुलावापं० ॥ विप्रगृहंगत्वामहानसे
स्थालीस्थतप्तजलेतंडुलान्निर्वपेत् ॥ स्थाल्यांतप्तांबुयुक्तायामक्षय्यान्नप्रतुष्टये ॥ कुटुंबाशनपर्याप्तांस्तंडुलान्निर्वपाम्यहं ॥ छ ॥
अथघरट्टदानं ॥ सर्वधान्यसमृद्धयेघरट्ट० ॥ शालिगोधूमसंयुक्तंघरट्टंधान्यपेषणं ॥ ददामिसर्वसस्यानांसमृद्धिकरमुत्तमं॥छ॥
अथपाकभांडदानं ॥ नित्यतृप्तिपुष्टिसुखक्षेमाभिवृद्धयेदंपतीभोजनपर्याप्तामान्नसहितंपाकोपकरणस्थालीदर्व्यादिभांडदानंक
रिष्ये ॥ ताम्रायसारकूटानिभांडानिविविधानिच ॥ नित्यतृप्तिसुखार्थायपाकोपकरणंददे ॥ छ ॥ अथरसरंगदानं ॥ भर्तृपु
त्राद्यवियोगसुखप्राप्तयेरसरंगदानंक० ॥ पात्रद्वयमिदंपूर्णंकुंकुमेनगुडेनच ॥ अवियोगसुखार्थायददामिहितमंगलं॥ ॥ अथनि
र्झर [वाहतीधार] दानं ॥ अविच्छिन्नशुभसंततिविविधान्नसमृद्धयेनिर्झरदानं० ॥ प्रवहन्निर्झरक्लिन्नतंडुलप्रस्थपूरितं॥ वस्त्रच्छ
न्नंददेपात्रंवंशवृध्यन्नपूर्तिदं ॥ ॥ अथसिद्धस्थालीदानं ॥ इष्टफलप्राप्त्यै० ॥ सिद्धस्थालीमिमांविप्रसकलाभीष्टसिद्धिदां ॥ सो
पस्करांप्रयच्छामिप्रीयतांमेदिवाकरः ॥ ॥ अथपृष्ठोदरदानं ॥ भ्रातृपुत्रादिविवृद्धयेपृष्ठोदरदानं० ॥ शरावयुगलंविप्रधान्य
पूर्णंमनोहरं ॥ गृहाणविधिनादत्तंसोदरैरसवर्धनं ॥ ॥ अथकुलद्वयदानं ॥ पितृभर्तृकुलाभ्युदयसुखसमृद्धये कुलद्वय० ॥
द्वारोभयप्रदेशस्थंधान्यराशिद्वयंमहत् ॥ प्रकरोतुमयादत्तंपितृभर्तृकुलोदयं ॥ ॥ अथात्रुटितवल्लिदानं ॥ अच्छिन्नवल्लीप्रता

नवत्संततिविस्तरादिसिद्धये अत्रुटित०॥तिलचूर्णकृतंद्रव्यंसगुडंमुष्टिपंचकं ॥ ददामितेनमेभूयाद्वंशवृद्धिःप्रतानवत् ॥ ७ ॥
अथमहानसदानं ॥ इहामुत्रक्षुत्तृड्बाधोपशमनार्थंमहानसदानं०॥महानसंगुडमयमिक्षुदंडकृतेंधनं॥क्षुत्तृषोःशमनंनित्यंगृहाणे दंद्विजोत्तम ॥७॥ अथेक्षुस्तंबादिहारणं ॥ ऐहिकामुष्मिकसुखभोगप्राप्तयेविप्रैर्विप्रस्त्रीभिर्वेक्षुस्तंबादिहारयिष्ये ॥ संघातमिक्षु दंडानांपीयूषरसवर्षणं ॥ नानाभोगसुखायेमंहारयाम्यर्कतुष्टये ॥ नारिकेलफलान्यद्यसर्वदेवप्रियाणिच ॥ रुचिराणिसुवृत्ता निहारयाम्यर्कतुष्टये ॥ स्वादूनिगुडखंडानिरसानांप्रवराणिच॥सर्वप्रियाण्यनर्घाणिहारयिष्येर्कतुष्टये ॥ इमान्यष्टशतेक्षुस्तंबा दीनि० ॥ ॥ गौरीहरदानं ॥ दांपत्यसुखाभिवृद्धयेगौरीहरदानंक० ॥ गुडगौरीसमाश्लिष्टंनवनीतमयंहरं ॥ ददामिवस्त्रसंयु क्तंदंपत्योःसुखवर्धनं ॥ ॥ तिलपात्रदानं॥तिलाःकश्यपसंभूतास्तिलाःपापहराःशुभाः ॥ तिलपात्रप्रदानेनअतःशांतिंप्रय० ॥ गृहाणतैजसंपात्रंपरमान्नेनपूरितं॥दानेनानेनमेनित्यंप्रसीदतुदिवाकरः ॥ ॥ वरहस्तदानं ॥ सर्वेष्टदायकंश्रेष्ठंतिलपिष्टंगुडा न्वितं ॥ वरहस्तप्रदानेनवरदोस्तुरविर्मम ॥ ॥ सूर्यबिंबदानं ॥ विमलकांतिकीर्त्यायुरैश्वर्यादिफलावाप्तये सूर्यबिंबदानंक० ॥ कांस्यपात्रेस्थितंसाज्येस्वर्णबिंबंरवेःशुभं ॥ ददामिकांतिकीर्त्यायुरैश्वर्यसुखपुष्टिदं ॥ इतिसंक्रांतिदानानि ॥ ॥ ॥

॥ ८० ॥ व्यतीपातदानादि ॥ संकल्पपूर्वकंजनार्दनंव्यतीपातंचसंपूज्य ॥ देशकालौसंकीर्त्यममाशेषपापक्षयपूर्वकंश्री महाविष्णु ( सूर्य )प्रीतयेव्यतीपातपर्वनिमित्तंस्वर्णदानंत्रयोदशामुकफलदानंवाकरिष्ये॥ इतिसंकल्प्य॥ शंकुकर्णप्रलंबोष्ठलं बभ्रूर्दीर्घनासिक ॥ अष्टनेत्रचतुर्वक्त्रशतयोजनविस्तर ॥ व्यतीपातनमस्तेस्तुसोमसूर्यसुतप्रभो॥ यद्दानादिकृतंकिंचित्तदनंतमि

हास्तुमे ॥ कुरुक्षेत्रमयंदेशोविप्रोनारायणःस्वयं ॥ अनेनस्वर्णदानेनप्रीयतांमेजनार्दनः ॥ इतिव्यतीपातदानं ॥ ॥ ॥

॥ ८१ ॥ माघस्नानं ॥ आचमनादिदेशकालकीर्तनांतेममकायिकवाचिकमानसिकसांसर्गिकसमस्तपापक्षयद्वाराश्रीमाधवप्रीत्यर्थंमाघस्नानंकरिष्ये ॥ इतिसंकल्प्य ॥ माघमासमिमंपूर्णंस्नास्येहंदेवमाधव ॥ तीर्थस्यास्यजलेनित्यमितिसंकल्प्यचेतसि ॥ इत्येकंतीर्थमुपेत्य ॥ दुःखदारिद्र्यनाशायश्रीविष्णोस्तोषणायच ॥ प्रातःस्नानंकरोम्यद्यमाघेपापविनाशनं ॥ मकरस्थेरवौमाघेगोविंदाच्युतमाधव ॥ स्नानेनानेनमेदेवयथोक्तफलदोभव ॥ इमौमंत्रौसमुच्चार्यस्नायान्मौनसमन्वितः ॥ प्रत्यहंसूर्यार्घ्यदानमंत्रः ॥ सवित्रेप्रसवित्रेचपरंधामजलेमम ॥ त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा ॥ इतिसूर्यायार्घ्यंदत्वामाधवंपूजयेत् ॥ ॥

॥ ८२ ॥ रथसप्तमीपूजा ॥ अत्रव्रतेषष्ठ्यामेकभक्तंकृत्वासप्तम्यामरुणोदयेस्नानंकार्यं ॥ तत्रमंत्रः ॥ यदाजन्मकृतंपापंमयाजन्मसुजन्मसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी ॥ एतज्जन्मकृतंपापंयच्चजन्मांतरार्जितं ॥ मनोवाक्कायजंयच्चज्ञाताज्ञातेचयेपुनः ॥ इतिसप्तविधंपापंस्नानान्मेसप्तसप्तिके ॥ सप्तव्याधिसमायुक्तंहरमाकरिसप्तमि ॥ इत्यादिस्नात्वाआचमनादिदेशकालकीर्तनांतेममश्रीसूर्यप्रीतिद्वाराइहजन्मनिजन्मांतरेचाखंडसौभाग्यपुत्रपौत्रधनधान्यादिमनसेप्सितकामनासिद्ध्यर्थं श्रीसूर्यपूजांक० ॥ गणपतिपूजनकलशार्चनसंभारप्रोक्षणांतेरक्तचंदनेनरथारूढंसूर्यंविलिख्यतस्मिन्सूर्ययंत्रेवा ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ इतिसूर्यंध्यात्वा ॥ पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंस्थश्चद्विभुजःस्यात्सदारविः ॥ इत्यावाहनादिषोडशोपचारान

र्पयेत् ॥ नैवेद्यार्थंतत्रैवपायसंनिर्माय।र्पयंतीत्याचारः ॥ पूजांते ॥ नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरिंचिनारायणशंकरात्मने ॥ इतिनत्वा ॥ रक्ताक्षतमाल्योपेतान्यर्घ्याणिदद्यात् ॥ सप्तसप्तिवहप्रीतसप्तलोकप्रदीपन ॥ सप्तमीसहितोदेवगृहाणार्घ्यंदिवाकर ॥ इतिमंत्रेणाथवामित्रायनमःइदमर्घ्यंसमर्पयामि ॥ एवं रवये॰ सूर्याय॰ भानवे॰खगाय॰पूष्णे॰हिरण्यगर्भाय॰मरीचये॰ आदित्याय॰ सवित्रे॰ अर्काय॰ भास्कराय॰इति॥ एकचक्रोरथोयस्यदिव्यःकनकभूपितः ॥ समेभवतुसुप्रीतःपद्महस्तोदिवाकरः ॥ आवाहनंन॰यस्यस्मृत्या॰ इत्यादिप्रार्थ्यपूजांसमापयेत् ॥

॥ ८३ ॥ शिवरात्रिपूजा ॥ त्रयोदश्यांकृतैकभक्तश्चतुर्दश्यांकृतनित्यक्रियःप्रातर्मंत्रेणसंकल्पंकुर्यात् ॥ देशकालौस्मृत्वा ॥ शिवरात्रिव्रतंह्येतत्करिष्येहंमहाफलं ॥ निर्विघ्नमस्तुमेचात्रत्वत्प्रसादाज्जगत्पते ॥ चतुर्दश्यांनिराहारोभूत्वाशंभोपरेहनि ॥ भोक्ष्येहंभुक्तिमुक्त्यर्थंशरणंमेभवेश्वर ॥ इति ॥ द्विजस्तुरात्रींप्रपद्येजननीमित्यृचावपिपठित्वाजलमुत्सृजेत् ॥ ततःसायाह्नेकृष्णतिलैःस्वगायत्र्याजलाशयेगृहेवास्नात्वा धृतभस्मत्रिपुंड्रुद्राक्षोनिशामुखेशिवायतनंगत्वाक्षालितपादःस्वाचांतउदङ्मुखोदेशकालौसंकीर्त्य शिवरात्रौशिवप्रीत्यर्थंप्रथमयामपूजांकरिष्येइतियामचतुष्टयेभिन्नपूजाचतुष्टयचिकीर्षायांसंकल्पः॥ सकृत्पूजाचिकीर्षायांश्रीशिवप्रीत्यर्थंशिवरात्रौश्रीशिवपूजांकरिष्यइतिसंकल्पः॥तत्रादौसामान्यतःपूजाविधिरुच्यते॥ यामभेदेनविशेषस्तुअग्रेवक्ष्यते॥ तत्रसंकल्पांतेगणेशंसंपूज्यपृथ्वीत्याद्यासनविधिंपौरुषसूक्तन्यासादिविधाय ॥ अस्यश्रीशिवपंचाक्षरमंत्रस्य वामदेवऋषिः अनुष्टुप्छंदः श्रीसदाशिवोदेवता श्रीसदाशिवप्रीत्यर्थे न्यासेपूजनेजपेचविनियोगः ॥ वामदेवऋषयेनमः शिर

नि॥ अनुष्टुप्छंदसेनमोमुखे ॥ श्रीसदाशिवदेवतायैनमोहृदि ॥ ॐ नंतत्पुरुषायनमःहृदये ॥ ॐ मं अघोरायनमःपादयोः ॥ ॐ सिंसद्योजातायनमःगुह्ये ॥ ॐ वांवामदेवायनमःमूर्ध्नि ॥ ॐ यंईशानायनमः मुखे ॥ ॐ ॐ हृदयायनमः ॐ नंशिरसेस्वाहा ॐ मंशिखायैवषट् ॐ शिंकवचायहुं ॐ वांनेत्रत्रयायवौषट् ॐ यं अस्त्रायफट् ॥ कलशपूजादिसंभारप्रोक्षणांते॥ ॐ त्र्यंबकं यजामहे० ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ॥ इतिदेवंध्यात्वा ॥ प्राणप्रतिष्ठांकृत्वास्यालिंगस्पृशन् सहस्रशीर्षा० ॐ भूःपुरुषंसांबसदाशिवमावाहयामि ॐ भुवःपुरुषंसांब० ॐ स्वः पुरुषंसांब० ॐ भूर्भुवःस्वःपुरुषंसांब० इत्यावाहयेत् ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनलिंगेस्मिन्सन्निधोभव ॥ इतिपुष्पांजलिंदद्यात् ॥ (आवाहनाद्युपचारेषुवैदिकपौराणमंत्रसमुच्चयोपीच्छयाकार्यः ॥ स्थावरलिंगेपूर्वसंस्कृतचरलिंगेचप्राणप्रतिष्ठावाहनांतंनकार्यं) ॥ पुरुषएवेदं० ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥ ॐनमःशिवायश्रीसांबसदाशिवायनमःआसनं ॥ एवमग्रेपिपंचाक्षरादिपाठः॥ (स्त्रीशूद्रश्चेत् ॐ नमःशिवायेतिपंचाक्षरीस्थाने श्रीशिवायनमइतिनमोंतमंत्रेणपूजयेत् ) ॥ एतावानस्य० ॐभवेभवेनातिभवेभवस्वमां ॐ नमःशिवायश्रीसांबसदाशिवायनमःपाद्यं ॥ त्रिपादूर्ध्व० ॐ भवोद्भवायनमः ॐ नमःशिवायश्रीसांब० अर्घ्यं० ॥ तस्माद्विराळ० ॐ वामदेवायनमः ॐ नमःशिवायश्रीसांब० आचमनं०॥यत्पुरुषेण० ॐ ज्येष्ठायनमः ॐ नमःशिवाय० स्नानं ॥ ततोमूलमंत्रेणआप्यायस्वेत्यादिभिश्चपंचामृतैःसंस्नाप्य ॥ मूलेनाभ्यंगोष्णोदकाभ्यां

धोदकस्नानेचकृत्वा ॥ आपोहिष्ठेतितिसृभिःशुद्धोदकेनप्रक्षाल्यततःपूर्वपूजांतेएकादशावृत्त्यैकावृत्त्यावारुद्रेणपुरुषसूक्तेनचचं
दनकुंकुमकर्पूरवासितजलेनाभिषेकंकृत्वा ॐ नमःशिवायेतिस्नानांतेआचमनंदत्वासाक्षतजलेनतर्पणंकार्यं ॥ॐ भवंदेवंतर्पया
मि १ शर्वंदेवंतर्पयामि २ ईशानंदेवंतर्पयामि ३ पशुपतिंदेवंतर्पयामि ४ उग्रंदेवंत० ५ रुद्रंदेवंत० ६ भीमंदेवंत० ७ महांतंदेवंत०
८॥भवस्यदेवस्यपत्नींतर्पयामि शर्वस्यदेवस्यप० ईशानस्यदेवस्यप० पशुपतेर्देवस्यप० उग्रस्यदेवस्यप०रुद्रस्यदेवस्यप०भीमस्य
देवस्यप० महतोदेवस्यप० ८ ॥ तंयज्ञंबर्हिषि० ॐ ज्येष्ठायनमः ॐ नमःशिवायश्रीसांब० वस्त्रं० ॥ मूलेनाचमनं ॥ तस्मा
द्यज्ञा० ॐ रुद्रायनमः ॐ नमःशिवाय० यज्ञोपवीतं० मूलेनाचमनं ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॐ कालायनमः ॐ नमः
शिवाय० चंदनं० ॥ ॐ कलविकरणायनमः ॐनमःशिवायश्री० अक्षतान्० ॥ तस्मादश्वा० ॐ बलविकरणायनमः ॐनमः
शिवायश्रीसांब० पुष्पाणि० ॥ सहस्रमष्टोत्तरशतंवासहस्राष्टोत्तरनामभिर्मूलमंत्रेणवाबिल्वपत्राण्यर्पयेत् ॥ यत्पुरुषं० ॐबला
यनमः ॐ नमःशिवायश्रीसांब० धूपं ॥ ब्राह्मणोस्य० ॐ बलप्रमथनायनमः ॐ नमःशिवायश्रीसांब० दीपं० ॥ चंद्रमा
मनसो० ॐ सर्वभूतदमनायनमः ॐ नमःशिवाय० नैवेद्यं० ॥ मूलेनाचमनंफलंच ॥ ॐमनोन्मनायनमः ॐ नमःशिवाय०
तांबूलं० मूलेनदक्षिणां० ॥ मूलेनवैदिकैर्मंत्रैश्चनीराजनं० ॥ नाभ्याआसी० ॐ नमःशिवायप्रदक्षिणाः॥सप्तास्यासन्० भवा
यदेवायनमः शर्वायदेवायेत्याद्यष्टौ भवस्यदेवस्यपत्न्यै इत्यष्टौच नमस्कारान्कृत्वातैरेवपुष्पांजलिः ॥ अथवा यज्ञेनयज्ञ०
ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवों ॐ नमःशिवाय० मंत्रपुष्पं० ॥

शिवाय० रुद्राय० पशुपतये० नीलकंठाय० महेश्वराय० हरिकेशाय० विरूपाक्षाय० पिनाकिने० त्रिपुरांतकाय० शंभवे० शूलिने० महादेवायनमइतिद्वादशनामभिर्द्वादशपुष्पांजलीन्दत्वा मूलेनप्रदक्षिणानमस्कारान्कृत्वा॥शिवरात्रिव्रतंदेवपूजाजपपरायणः ॥ करोमिविधिवद्दत्तंगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यंदत्वा ॥ नित्यंनैमित्तिकंकाम्यंयत्कृतंतुमयाशिव ॥ तत्सर्वंपरमेशानमयातुभ्यंसमर्पितं ॥ इतिपूजांसमर्प्यस्तोत्रेणप्रणम्य मूलमंत्रमष्टोत्तरशतंजप्त्वा॥गुह्यातिगुह्यगोप्तात्वंगृहाणास्मत्कृतंजपं॥सिद्धिर्भवतुमेदेवत्वत्प्रसादान्महेश्वर ॥ इतिजपंनिवेद्य ॥ यत्किंचित्कुर्महेदेवसदासुकृतदुष्कृतं ॥ तन्मेशिवपदस्थस्यभुंक्ष्वक्षपयशंकर ॥ शिवोदाताशिवोभोक्ताशिवःसर्वमिदंजगत् ॥ शिवोजयतिसर्वत्रयःशिवःसोहमेवहि॥इतिप्रार्थ्य देवहृदयस्थंपादस्थंपुष्पमादायप्रणम्य देवेनदत्तमितिध्यात्वा ॥ प्रपन्नंपाहिमामीशभीतंमृत्युमहार्णवात् ॥ त्वयोपभुक्तस्रग्गंधवासोलंकारचर्चिताः ॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ॥ इतिमूर्ध्निधृत्वा मंत्रहीनंक्रियाहीनमित्यादिभिःक्षमापयित्वा ॥ अनेनपूजनेनसांबसदाशिवःप्रीयतामितिनिवेदयेत् ॥ इतिकेवलशिवरात्रिव्रतपूजाविधिःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ ८४ ॥ यामेषुपूजाचतुष्टयेविशेषः ॥ तत्रप्रथमयामेमूलमंत्रांतेश्रीशिवायासनंसमर्पयामीतिशिवनाम्नासर्वोपचारसमर्पणम् ॥ द्वितीययामेशिवरात्रौद्वितीययामपूजांकरिष्यइतिसंकल्प्यश्रीशंकरायासनमितिशंकरनाम्ना ॥ ततोमहानिशिनिशीथपूजांकरिष्यइतिसंकल्प्यश्रीसांबसदाशिवायासनमितिपूर्ववत्पूजा॥ ततस्तृतीययामपूजांकरिष्यइत्युक्त्वाश्रीमहेश्वरायासनमित्यादि॥ एवमेवचतुर्थयामेश्रीरुद्रायेतिरुद्रनाम्नापूजनं॥प्रतियामंतैलाभ्यंगपंचामृतोष्णोदकशुद्धोदकगंधोदकाभिषेकाःकार्याः

यज्ञोपवीतांतेगोरोचनकस्तूरीकुंकुमकर्पूरागुरुचंदनमिश्रितानुलेपेनालिंगंलेपयेत् ॥ पंचविंशतिपलमितःसर्वोनुलेपइतिअनुलेप परिमाणं यथाशक्तिवा ॥ धत्तूरकरवीराम्रकुसुमैर्बिल्वपत्रैश्चपूजनमतिप्रशस्तं ॥ पुष्पाभावेशालितंडुलगोधूमयवैःपूजा ॥ नैवेद्योत्तरंतांबूलमुखवासौउक्तौ ॥ नागवल्लीपत्रक्रमुकफलशुक्त्यादिचूर्णेतित्रयंतांबूलसंज्ञं ॥ एतदेवनारिकेलकर्पूरैलाकंकोलैःसहितंमुखवाससंज्ञं ॥ शालिपिष्टनिर्मितैःपड्विंशतिघृतदीपैर्नीराजनं ॥ लिंगमूर्ध्निदध्यक्षतपुष्पदूर्वागोरोचनसर्षपयुतस्वर्णपद्मनिवेदनं ॥ एतेपामन्यतमद्रव्यालाभेतत्तद्द्रव्यंस्मरेद्बुधः ॥ सर्वपूजांतेप्रार्थना ॥ नित्यंनैमित्तिकंकाम्यंयत्कृतंतुमयाशिव ॥ तत्सर्वं परमेशानमयातुभ्यंसमर्पितमिति ॥ एवंयामचतुष्टयेर्घ्यभेदःकौस्तुभे ॥ सचेत्थं ॥ चंदनाक्षतदूर्वांकुशफलयुतमर्घ्यंप्रतियामं दद्यात् ॥ तत्रप्रथमयामेमंत्रः ॥ नमःशिवायशांतायसर्वपापहरायच ॥ शिवरात्रौमयादत्तंगृहाणार्घ्यंममप्रभो ॥ द्वितीये—मयाकृतान्यनेकानिपापानिहरशंकर ॥ गृहाणार्घ्यमुमाकांतशिवरात्रौप्रसीदमे ॥ महानिशि ( निशीथे )—शिवरात्रिव्रतंदेवपूजाजपपरायणः ॥ करोमिविधिवद्दत्तंगृहाणार्घ्यंनमोस्तुते ॥ तृतीये—दुःखदारिद्र्यभारैश्चदग्धोहंपार्वतीपते ॥ त्रायस्वमांमहादेवगृहाणार्घ्यंनमोस्तुते ॥ चतुर्थे—किंनजानासिदेवेशत्वयिभक्तिंप्रयच्छमे ॥ स्वपादाग्रतलेदेवदास्यंदेहिजगत्पते ॥ ततःपूजानिवेदनं ॥ मंत्रस्तु ॥ नमोयज्ञजगन्नाथनमस्त्रिभुवनेश्वर ॥ पूजांगृहाणमेदत्तांमहेशप्रथमेपदे ॥ इतिप्रथमयामे ॥ पूर्वेनंदिमहाकालौ गणभृंगीचदक्षिणे ॥ वृषस्कंदौपश्चिमेतेदेशकालौतथोत्तरे ॥ गंगाचयमुनापार्श्वेपूजांगृह्णनमोस्तुते ॥ इतिद्वितीये ॥ नमोव्यक्तायसूक्ष्मायनमस्तेत्रिपुरांतक ॥ पूजांगृहाणदेवेशयथाशक्त्युपपादितां ॥ इतितृतीये ॥ बद्धोहंविविधैःपाशैःसंसारभयबंधनैः ॥

पतितंमोहजालेमांत्वंसमुद्धरशंकर ॥ इतिचतुर्थं ॥ अन्यत्समानं ॥ यामचतुष्टयेपिनृत्यगीतकथाश्रवणादिनाजागरणंकार्यं ॥ ततःप्रभातेस्नात्वापुनःशिवंसंपूज्य पूर्वोक्तद्वादशनामभिर्द्वादशब्राह्मणानशक्तावेकंवासंपूज्यतिलपक्वान्नपूर्णान्द्वादशकुंभानेकं वादत्वाव्रतमर्पयेत् ॥ यन्मयाद्यकृतंपुण्यंतद्रुद्रस्यनिवेदितं ॥ त्वत्प्रसादान्मयादेवव्रतमद्यसमापितं ॥ प्रसन्नोभवमेश्रीमन्मुक्तिःप्रतिपाद्यतां ॥ त्वदालोकनमात्रेणपवित्रोस्मिनसंशयः ॥ इति ततोब्राह्मणान्भोजयित्वापूर्वनिर्णीतेकालेस्वजनैःसहपारणं कुर्यात् ॥ तत्रमंत्रः ॥ संसारक्लेशदग्धस्यव्रतेनानेनशंकर ॥ प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव ॥ इति ॥ दक्षिणांदत्वाशिषो गृहीत्वाकर्मसमाप्तिः ॥ इतिशिवरात्रिव्रतयामचतुष्टयभेदभिन्नःपूजाविधिःसंपूर्णः ॥ ॥ छ ॥ ॥ ॥

॥८५॥पार्थिवलिंगपूजा॥ अथकृत्यरत्नावल्यनुसारेणपार्थिवलिंगेशिवपूजाप्रयोगः ॥ कर्तास्नानादिविधाय भस्मनात्रिपुंड्रं कृत्वोदङ्मुखउपविश्याचम्यपवित्रपाणिःप्राणानायम्य अघोरेभ्योहिरण्यगर्भोरुद्रोनुष्टुप् ॥ मालाधारणे० ॥ मंत्रांतेसप्तविंशति रुद्राक्षमालांकंठेधृत्वा देशकालौस्मृत्वाममोपात्त० पार्थिवलिंगेश्रीशिवपूजनंक० ॥ घंटानादंकृत्वा गंगेचयमुने० इतिकलशे तीर्थान्यावाह्यतंसंपूज्यालिंगंकुर्यात् ॥ हरायनमइति ( सर्वाधारधरादेवित्वद्रूपांमृत्तिकामिमां ॥ लिंगार्थंतुप्रगृह्णामिप्रसन्नोभव मेप्रभो ॥ इतिवा ) मृदमाहृत्य शोधितायांतस्यांशुचिजलंप्रक्षिप्य महेश्वरायनमइतिसंघट्टनंकृत्वातेनपिंडेनाशीतिगुंजापरिमितादधादधिकपरिमाणमंगुष्ठादधिकोन्नतंलिंगंकृत्वा शूलपाणयेनमःशिवेहसुप्रतिष्ठितोभवेतिप्रतिष्ठाप्य ध्यायेन्नित्यंमहेशमि तिध्यात्वा त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् ॥ पूजनेवि० ॥ त्र्यंबकं० ॥ पिनाकधृषेनमःशिवेहागच्छेत्यावाह्य त्र्यंबकं० ॐनमःशिवाय

आसनंपरिकल्पयामि ॥ पाद्यंस० ॥ अर्घ्यंस० ॥ आचमनंस० ॥ त्र्यं० पशुपतये० स्नानंस०॥ आच० ॥ त्र्यं० ॐ नमः० वस्त्रंपरि० आच० ॥ उपवीतं ॥ आच० ॥ गंधादिप्रणामांते ॐ योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै ॥ तश्ँहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये ॥ इतिनमस्कृत्य प्राच्यादिष्वष्टमूर्तीर्गंधपुष्पाक्षतैःपूजयेत् ॥ प्राच्यां शर्वायक्षितिमूर्तये नमः ॥ ऐशान्यां भवाय जलमू० ॥ उदीच्यां रुद्रायाग्निमू० ॥ वायव्यां उग्राय वायुमू० ॥ प्रतीच्यां भीमायाकाशमू० ॥ नैर्ऋत्यांपशुपतयेयजमानमू० ॥ अवाच्यां महादेवायसोममू० ॥ आग्नेय्यां ईशानायसूर्यमू० ॥ ततोयथासंभवंरुद्रस्तोत्रादिनास्तुत्वा ॥ देशकालानुसारेणयथाशक्तिकृतंमया ॥ कर्मेदंपूर्णतांयातुत्वत्प्रसादाज्जगत्प्रभो ॥ त्र्यं० ॥ महादेवायनमइतिविसर्जनं ॥ ॐ भूर्भुवःस्वरितिजपित्वाचम्यपठेत् ॥ ज्ञात्वाज्ञात्वाकृतेनाथविधिनाविधिनापिवा ॥ प्रीणातुभगवानीशःकर्मणानेन शाश्वतः ॥ स्त्रीणांतुशिवायनमइतिमंत्रः॥ अस्याःपूजायाःशिवरात्रिपूजयासहानुष्ठाने यथासंभवंपंचामृताभिषेकाद्यपिकार्यं ॥

॥ ८६ ॥ होलिकापूजा ॥ तत्रपूर्णिमायामुक्तकालेउपलिप्तेस्वस्तिकादिचित्रितेगृहांगणादौराशीकृतशुष्कगोमयपिंडदारुखंडरूपामेरंडदंडादिभूषितांवर्तुलांपुरुषप्रमाणांहोलिकाचितिंविरच्यगृहीतसंभारःकर्तादेशकालौसंकीर्त्य ममसपरिवारस्यश्रीढुंढाराक्षसीप्रीतिद्वारातत्कर्तृकविविधबालजनोपसर्गाग्निबाधोत्पातभयप्रशमपूर्वकंक्षेमायुः पुष्टिमैश्वर्यसुखसंपत्कुलाभिवृद्ध्याद्यभीष्टफलसिद्धिकामःश्रीहोलिकापूजनंकरिष्ये ॥ संभारप्रोक्षणांते ॥ दीपयाम्यद्यतेघोराचितिंराक्षससत्तमे ॥ हितायसर्वजगतां प्रीतयेपार्वतीपतेः ॥ इतिमंत्रेणतामग्निनाप्रदीप्य ( प्रतिमापूजनपक्षेऽग्रेप्रदीपनं ) सप्तहस्तांचतुःशृंगींसप्तजिह्वांद्विशीर्षकां ॥

त्रिपदांहस्तवदनांसुस्वामीनांशुचिस्मितां ॥ मेषारूढामग्निरूपांजिह्वालल्लनभीषणां ॥ तप्तकांचनसंकाशांहोलिकांहृदिचिंतये ॥
इतिध्यात्वा ॥ अस्माभिर्भयमंत्रस्तैःकृतात्वंहोलिकेयतः ॥ अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभव ॥ इतिषोडशोपचारैःपूजये
त् ॥ तत्रनैवेद्यंनिवेद्यतस्यांप्रक्षिप्यनीराजनांते माज्येनपयसाचितिमभ्युक्ष्यत्रिःपरिक्रम्य देशभाषयाभगलिंगादिशब्दोच्चारण
पूर्वमुचैःमहकरपृष्ठोष्ठसंयोगेनोच्चैर्घोषंकृत्वा ॥ नमस्तेसर्वकल्याणिनमस्तेकरुणालये ॥ नमस्तेहोलिकेदेविरुद्रस्यप्रियवादिनि ॥
इतिप्रणम्यपुष्पांजलिंदत्वा ॥ गुडोद्भवान्वृश्चिकांस्तुगृहाणपरमेश्वरि वृश्चिकोत्थानमेवाधाभवतुत्वत्प्रसादतः ॥ इतिगुडम
यान्वृश्चिकादिकीटान्समर्प्य ॥ होलिकेहोलतनयेपूजांस्वीकृत्यमत्कृतां ॥ स्वस्थानंगच्छभद्रेत्वंरक्षमामग्निजाद्भयात् ॥ इतिप्रा
र्थ्यविसृज्य सर्वोत्सवंविप्रान्सुवासिनीश्चसंपूज्यसंभोज्यभूयसींदत्वा तांरात्रिंपौरैःसहगीताद्युत्सवेननीत्वाप्रातःश्वपचंस्पृष्ट्वास्ना
त्वानित्यकर्मांते श्रीरजन्मभूलिमासिच्य ॥ वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच ॥ अतस्त्वंपाहिनोदेविविभूतेभूतिदाभव ॥ इति
विभूतिमभिवंद्य ॥ होलिकादेहसंभूतसर्वभीतिविनाशन ॥ मदीयदेहजात्रोगानभस्मनाशयनाशय ॥ इतिसर्वांगेषुविलिप्यमध्या
ह्नेपुनःस्नात्वाभोजनादिकुर्यात् ॥ अत्रदेशिकक्रीडादियथाचारंकार्यं ॥ ॥ ॥ ॥ ॥

॥ ८७ ॥ सत्यनारायणपूजा ॥ व्रतीसंक्रांतौपौर्णमास्यांचैकादश्यांयस्मिन्कस्मिन्दिनेवा सायंकालेस्नात्वापूजास्थानमाग
त्यआसनेउपविश्य आचम्यपवित्रंधृत्वासंकल्पंकुर्यात् ॥ अद्येत्यादिपूर्वोच्चरितएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममु
कगोत्रोऽमुकशर्माऽहंमकलदुरितोपशमसर्वापच्छांतिपूर्वकसकलमनोरथसिद्ध्यर्थं यथासंपादितसामग्र्या गणेशगौरीवरुणदेव

तागणपत्यादिचतुष्टयाष्टलोकपालदेवतासूर्यादिनवग्रहदेवताऽऽवाहनपूजनपूर्वकंश्रीसत्यनारायणपूजनंतत्कथाश्रवणंचकरिष्ये तथा कलशादिपूजांशरीरशुद्ध्यर्थं पुरुषसूक्तन्यासंचकरिष्ये ॥ आसनविध्यादिघंटादीपपूजनांते अपवित्रःपवित्रइतिपूजाद्रव्याणिसंप्रोक्ष्य निर्विघ्नतासिद्ध्यर्थेगणपतिंचसंपूज्यकलशंस्थापयेत् ॥ महीद्यौरितिभूमिंस्पृष्ट्वा ॥ ओषधयइतितंदुलपुंजंकृत्वा ॥ आकलशेष्वितिकलशंसंस्थाप्य॥इमंमेगंगेइतिजलं॥कांडात्कांडादितिदूर्वाः॥अश्वत्थेवइतिपंचपल्लवान्॥याःफलिनीरितिफलं॥ सहिरत्नानीतिपंचरत्नानि ॥ हिरण्यरूपइतिहिरण्यंचप्रक्षिप्य ॥ युवासुवासाइत्यनेनवस्त्रंसमर्प्यतदभावेअक्षतान्क्षिपेत् ॥ ततः पूर्णादर्वीतिपूर्णपात्रंनिधायतत्त्वायामि०कलशेवरुणगंधादिपंचोपचारैःपूजयेत्॥(अथवापुराणोक्तपद्धत्युक्तप्रकारेणकलशस्थापनंयथा ॥ चतुर्भुजेशुक्लवर्णेदिव्याभरणभूषिते ॥ चतुर्दिङ्नागपृष्ठस्थेभूमेत्वांसंस्पृशाम्यहं ॥ इतिभूमिंस्पृष्ट्वा ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीवनोपायंस्थापयामीष्टसिद्धये ॥ इतिधान्यराशिंकृत्वा ॥ तत्र देवासुरैर्मथ्यमानादुत्पन्नोऽसिमहोदधेः॥ कुंभत्वयिसुराःसर्वेतीर्थानिजलदानदाः ॥ तिष्ठंतिकामफलदारुद्रादित्यादयोऽपिच ॥ अतोऽत्रधान्यराशौत्वांपूजार्थंस्थापयाम्यहं ॥ इतिकलशंसंस्थाप्य ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिकुंभेऽस्मिन्संनिधिंकुरु ॥ इतिशुद्धजलेनापूर्य ॥ कस्तूरीकुंकुमोपेतंकर्पूरेणचसंयुतम् ॥ चंदनंसर्वगंधाढ्यंकुंभेऽस्मिन्प्रक्षिपाम्यहं ॥ इतिगंधंप्र० ॥ कुष्ठमांसीहरिद्राद्याःसर्वौषध्योऽमृतप्रभाः ॥ सर्वामयहराश्चातःकुंभेऽस्मिन्प्रक्षिपाम्यहम् ॥ इत्यौषधीः ॥ धान्यराजांश्चमांगल्येद्विजप्रीतिकरान्यवान्॥ यज्ञार्थंनिर्मितानस्मिन्कलशेप्रक्षिपाम्यहं ॥ इतियवान् ॥ त्वंदूर्वेऽमृतजन्मासिवंदितासिसुरासुरैः ॥ सौ

भाग्यंमनतंदेहिमेकार्यंकरीभव ॥ इतिदूर्वाः ॥ अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवान् ॥ अस्मिन्कुंभेप्रक्षिपामिसर्वकर्मसुशो भनान् ॥ इतिपंचपल्लवांस्तत्रनिक्षिप्य ॥ गजाश्वरथ्यावल्मीकसंगमह्रदगोकुलात् ॥ मृदमानीयकुंभेऽस्मिन्प्रक्षिपामिचच त्वरात् ॥ इत्यष्टमृदः ॥ फलंमनोहरंस्वादुमुनिदेवप्रियंसदा ॥ अस्मिन्कुंभेप्रक्षिपामिसर्वदामंगलप्रदं ॥ इतिफलं ॥ सुवर्णंरज तंमुक्तारत्नप्रवालकं ॥ इमानिपंचरत्नानिकलशेप्रक्षिपाम्यहं ॥ हिरण्यगर्भंगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलद मतःशांतिंप्रयच्छमे ॥ इतिहिरण्यं० ॥ सूत्रेणतेनशुभ्रेणसदनेनाहतेनच ॥ संवेष्टयामिकलशंनूतनेनसुवाससा ॥ इतिवाससा वेष्ट्य ॥ पूर्णपात्रंताम्रमयंशालितंडुलपूरितं ॥ प्रधानदेवपूजार्थंन्यसामिकलशोपरि ॥ इतिपूर्णपात्रंनिधाय ) देवताआवाहये त् ॥ ततःगणेशादीनांसूर्यादिनवग्रहाणांचतत्तन्मंत्रैरावाहनंकृत्वापूजनंकुर्यात् ॥ तदित्थं ॥ ॐ गणानांत्वा० गणेशायनमः गणेशंआवाहयामि ॥ ॐगौरीर्मिमाय० गौरीमा० ॐ तत्त्वायामि० वरुणमावा० ॥ गणपतिं दुर्गां क्षेत्रपालं वास्तोष्पतिं च आवाह्य ॥ इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं सोमं ईशानं च तत्तन्मंत्रैर्नाममंत्रैर्वाक्षतपुंजेष्वावाह्यसूर्यादीनावाहयेत् ॥ तत्र मंत्राः ॥ आकृष्णेन० सूर्यंआवाहयामि ॥ आप्यायस्व० चंद्रंआवाह० ॥ अग्निर्मूर्धा० भौमंआवाह० ॥ उद्बुध्यस्व० बुधंआ वाह० ॥ बृहस्पतेअति० बृहस्पतिंआवा० ॥ शुक्रःशुशुक्वाँ० शुक्रंआ० ॥ शमग्निरग्निभिः० शनैश्चरंआ० ॥ कयानश्चित्र० राहुं आवा० ॥ केतुंकृण्वन्न० केतुंआवाहयामि ॥ तदस्तुमित्रावरुणेत्यनेनगणेशाद्यावाहितदेवताःसुप्रतिष्ठिताःसंतुइतिप्रतिष्ठाप्यॐ भूर्भुवःस्वःगणेशाद्यावाहितदेवताभ्योनमःध्यायामि इत्यादिषोडशोपचारपूजांकुर्यात् ॥ अथध्यानं ॥ पुष्पंगृहीत्वाध्यानंकुर्या

त् ॥ शांताकारंभु० ॥ ध्यायेत्सत्यंगुणातीतंगुणत्रयसमन्वितं ॥ लोकनाथंत्रिलोकेशंकौस्तुभाभरणंहरिम् ॥ नीलवर्णंपीतवासः
श्रीवत्सपदभूषितम् ॥ गोविंदंगोकुलानंदंब्रह्माद्यैरपिपूजितम् ॥ इतिध्यानं ॥ ॐसहस्रशीर्षा० ॥ आगच्छभगवन्देवस्थानेचा
त्रस्थिरोभव ॥ यावत्पूजांकरिष्येहंतावत्त्वंसंनिधोभव ॥ इत्यावाहनं ॥ पुरुषएवेदं० ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितम् ॥
आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां ॥ इत्यासनं ॥ एतावा० ॥ नारायणनमस्तेऽस्तुनरकार्णवतारक ॥ पाद्यंगृहाणदेवेशम
मसौख्यंविवर्धय ॥ इतिपाद्यं ॥ त्रिपादूर्ध्व० ॥ व्यक्ताव्यक्तस्वरूपायहृषीकपतयेनमः ॥ मयानिवेदितोभक्त्याअर्घोयंप्रतिगृह्य
ताम् ॥ इत्यर्घ्यं ॥ तस्माद्विराळ० ॥ मंदाकिन्यास्तुयद्वारिसर्वपापहरंशुभं ॥ तदिदंकल्पितंदेवसम्यगाचम्यतांत्वया ॥ इत्या
चमनं ॥ यत्पुरुषेण० ॥ गंगाचयमुनाचैवगोदावरिसरस्वती ॥ तापीपयोष्णीरेवाचताभ्यःस्नानंकुरुप्रभो ॥ स्नानं० ॥ पंचामृ
तस्नानं ॥ आप्यायस्व० ॥ सुरभेस्तुसमुत्पन्नंदेवर्पिपितृतृप्तिदं ॥ मयादत्तंपयोदेवस्नानार्थंप्रतिगृह्यतां ॥ इतिपयःस्नानं ॥ द
धिक्राव्णो० ॥ दध्नाचैवमहादेवस्नापनंक्रियतेमया ॥ गृहाणत्वंसुराधीशप्रसन्नोमांभवाव्यय ॥ इतिदधिस्नानं ॥ घृतंमिमिक्षे० ॥
सर्पिषाचजगन्नाथस्नापनंक्रियतेऽधुना ॥ गृहाणश्रद्धयानंततवप्रीत्यैमनोहरम् ॥ इतिघृतस्नानं ॥ मधुवाता० ॥ इदंमधुमया
दत्तंतवतुष्ट्यर्थमेवच ॥ स्नातुंगृहाणदेवेशततःशांतिंप्रयच्छमे ॥ इतिमधुस्नानं ॥ स्वादुःपवस्व० ॥ सितयाचसुरश्रेष्ठस्नापनं
क्रियतेत्वयि ॥ तस्माद्भक्तपराधीनप्रसन्नोभवसर्वदा ॥ इतिशर्करास्नानं० ॥ इतिपंचामृतस्नानं० ॥ गंधद्वारां० गंधोदकेनदे
वेशकुशपुष्पफलोदकैः ॥ रत्नांबुनाचशुद्धेनस्नापयामिपृथक्पृथक् ॥ इतिचंदनोदकस्नानं ॥ पुनर्मधुवाताइति मधुपर्कस्नानं ॥

अनंतमत्रंकामानामधीनमर्यसौख्यद ॥ मधुपर्कंगृहाणेमंमयादत्तमधोक्षज ॥ कनिक्रदत्० ॥ तैलंपुष्पसुगंधाढ्यंभ्रमद्भ्रमर नादितं ॥ विलेपयामिसर्वांगेसुवर्णचषकस्थितं ॥ तैलाभ्यंगं ॥ उन्मर्दनंतवांगेऽस्मिंल्लेपयामिसुभक्तितः ॥ काश्मीरागरुकर्पूरमृ गनाभिविनिर्मितं ॥ उन्मर्दनं ॥ स्नानार्थंजलमानीतंशीतमुष्णंयथारुचि ॥ सुगंधितंसर्वनदीतीर्थेभ्यःप्रतिगृह्यतां ॥ इतिमांग लिकस्नानं ॥ गंधादिदक्षिणांतोपचारैःसंपूज्य ॥ पुरुषसूक्तादिभिरन्यैरुद्रादिभिश्चाभिषेकः ॥ तंयज्ञं० ॥ वेदसूक्तसमायुक्तेय ज्ञसामसमन्विते ॥ सर्ववर्णप्रदेदेववाससीप्रतिगृह्यताम् ॥ इतिवस्त्रं ॥ तस्माद्यज्ञात्सर्वहुतः० ॥ ब्रह्मविष्णुमहेशैश्चनिर्मितंब्रह्म सूत्रकं ॥ यज्ञोपवीतदानेनप्रीयतांकमलापतिः ॥ इतियज्ञोपवीतं ॥ तस्माद्यज्ञात्सर्वहुतऋचः० ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसु मनोहरं ॥ विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां ॥ इतिचंदनं ॥ अहिरिवभोगैः० ॥ कस्तूर्याद्याश्चयेगंधाभोगार्थंतेमयाहृताः ॥ अ नेकगंधसंयुक्ताःप्रीत्यर्थंप्रतिगृह्यतां ॥ इतिपरिमलद्रव्याणिसौभाग्यद्रव्याणिच ॥ अलंकारार्थानक्षतांश्च० ॥ तस्मादश्वा० ॥ मल्लिकादिसुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ इतिपुष्पाणि ॥ अत्रसंभवेसहस्रतुलसीस मर्पणं ॥ वनमालांसुगंधाढ्यांनानापुष्पैःसमन्वितां ॥ पूजार्थंसाधितांदेवप्रीत्यर्थंप्रतिगृह्यतां ॥ मालां ॥ यत्पुरुषंव्यदधुः० ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम् ॥ धूपं ॥ ब्राह्मणोस्य० साज्यंचवर्तिसंयुक्तं वह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ दीपं ॥ चंद्रमामनसो० घृतपक्वंहविष्यान्नंपायसंचसशर्करं ॥ नानाविधंचनैवेद्यंविष्णोमेप्रतिगृह्यताम् ॥ नैवेद्यं ॥ सर्वपापहरंदिव्यंगांगेयंनिर्मलंजलं ॥ मयाचाचमनंदत्तंगृह्यतांपुरुषोत्तम ॥

इत्याचमनं ॥ नारिकेरंमातुलिंगंकपित्थंकदलीफलं ॥ कूष्मांडंकर्कटीयुक्तंगृह्यतामखिलार्थद ॥ इदंफलंमयादेवस्थापितंपुरतं
स्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ इतिफलं ॥ लवंगकर्पूरयुतंतांबूलंसुरपूजितम् ॥ प्रीत्यागृहाणदेवेशममसौख्यं
विवर्धय ॥ इतितांबूलं ॥ ॐश्रियेजातः० ॥ चतुर्वर्तिसमायुक्तंघृतेनचसुपूरितम् ॥ नीराजनेनसंतुष्टोभवत्वेवजगत्पतिः ॥ इति
नीराजनं ॥ कर्पूरदीपंसुमनोहरंप्रभोददामितेदेववरप्रसीदभो ॥ पापान्धकारंत्वरितंनिवारयप्रज्ञानदीपंमनसिप्रदीपय ॥ इति
कर्पूरार्तिक्यं ॥ नाभ्याआसी० ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्र
कोटीयुगधारिणेनमः ॥ इतिनमस्कारं ॥ सप्तास्यासन्० ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंति
प्रदक्षिणपदेपदे ॥ इतिप्रदक्षिणाः ॥ यज्ञेनयज्ञ० ॥ कह्लारनीलकमलोत्पलपारिजातपुन्नागकैःकदलिचंपकपाटलैश्च ॥ बिल्व
प्रवालतुलसीशतपत्रजातीपुष्पैश्चकृसममुमंजलिमर्पयामि ॥ इतिअन्यैर्मंत्रैश्चपुष्पांजलिंसमर्पयेत् ॥ ततोगीतवाद्यनृत्यछत्रचाम
रादिराजोपचारार्थेऽक्षतान्समर्प्य देवंसंप्रार्थ्यस्तुवीत ॥ यन्मयाभक्तियुक्तेनपत्रंपुष्पंफलंजलं ॥ निवेदितंचनैवेद्यंतद्गृहाणानुकंप
या ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ अमोघंपुंडरीकाक्षंनृसिंहंदैत्यसूदनम् ॥ हृषी
केशंजगन्नाथंवागीशंवरदायकं ॥ गुणत्रयंगुणातीतंगोविंदंगरुडध्वजं ॥ जनार्दनंजनातीतंजानकीवल्लभंहरिं ॥ प्रणमामिसदा
भक्त्यानारायणमतःपरम् ॥ दुर्गमेविषमेघोरेशत्रुभिःपरिपीडिते ॥ निस्तारयस्वसर्वेषुतथानिष्टभयेषुच ॥ नामान्येतानिसंकी
र्त्यईप्सितंफलमाप्नुयात् ॥ सत्यनारायणंदेवंवंदेहंकामदंप्रभुं ॥ लीलयाविततंविश्वंयेनतस्मैनमोनमः ॥ इतिप्रार्थना ॥ इति ॥

॥ ८८ ॥ गंगापूजनं ॥ तीर्थादागतःशुभदिनेसद्यएववापत्यासहोपविश्याचमनादिदेशकालकीर्तनांतेमयात्मनासहसमस्तपूर्वजोद्धारार्थंकृतभागीरथीस्नानादेःकल्पोक्तफलावाप्तयेआनीततीर्थोदकेगंगापूजनंकरिष्ये ॥ विभवेसतिगणपतिपूजनस्वस्तिवाचनेकृत्वाआसनादिसंभारप्रोक्षणांतेगंगांध्यायेत् ॥ सितमकरनिषण्णांशुभ्रवर्णांत्रिनेत्रांकरधृतकलशोद्यत्सोत्पलामत्यभीष्टां ॥ विधिहरिहररूपांसेंदुकोटीरजुष्टांकलितसितदुकूलांजाह्नवींतांनमामि ॥इतिध्यानं॥ सहस्रशीर्षा० अघक्षयकरेदेविचंद्रचूडप्रियेऽनघे ॥ निजरूपंसमासाद्यह्यागच्छममसंनिधौ ॥ आवाहनं ॥ पुरुषएवेदं० अनंतादिधराभागंममयच्छमहाफलं ॥ ब्रह्माद्रिशिखरेगंगेआसनंप्रतिगृह्यतां॥आसनं०॥एतावानस्य० नमोदेविमहापुण्येपुण्यतोयैःशुभैर्युते ॥ पाद्यंगृहाणमेदेविप्रसीदपरमेश्वरि॥पाद्यं०॥त्रिपादूर्ध्व०॥विष्णुपादाब्जसंभूतेविभार्तित्वांशिवःस्वयं॥ अर्घ्यंगृहाणभोगंगेपापभंगेभयापहे॥अर्घ्यं०॥तस्माद्विराळ०॥त्वदुद्भवंमहापुण्यमानीयममृतोपमं ॥ गृहाणाचमनंगंगेकृपयाभक्तवत्सले ॥ आचमनीयं० ॥ यत्पुरुषेण० ॥ क्षीरोदधिसमुद्भूतंस्नानार्थंतोयमुत्तमं ॥ स्वीकुरुष्वमहाभागेगंगेसर्वाघनाशिनि ॥ स्नानं० ॥ ततःपंचामृतस्नानाद्यभिषेकांतंकुर्यात् ॥ ब्रह्मविष्णुशिवश्लाघ्येजगतःपापनाशिनि ॥ ततआचमनीयंवैगृहाणत्वंमयार्पितं ॥ अभिषेकस्नानानंतरंआचमनीयं० ॥ तंयज्ञंव० ॥ लसत्क्षौमयुगंदेविगुणाढ्यमनुकंपया ॥ यथाशक्त्यामयानीतंगृहाणजगदीश्वरि॥वस्त्रोपवस्त्रेस०॥तस्माद्यज्ञात्० ॥सत्सूत्रगुंफितंदिव्यंपवित्रंपरमंशुभं ॥ गृहाणकंठभूषार्थंगंगेब्रह्मांडनिर्मिते ॥ कंठसूत्रं० ॥ तस्माद्यज्ञा० ऋचः० ॥ कर्पूरागरुकस्तूरीकुंकुमादिमनोहरं ॥ गृहाणाक्षतगंधानिगंगेसर्वार्थदायिनि ॥ चंदनं० ॥ कुंकुमादिसौभाग्यद्रव्याणिगंधाक्षतांश्चस० ॥ तस्मा

दश्वां० पारिजातकपुष्पाणिदिव्यगंधानिवैतथा ॥ यथर्तुभूतान्यन्यानिमयानीतानिसर्वतः ॥ यथासंभवपुष्पाणिबिल्वतुलसीप
त्राणिच० ॥ यत्पुरुषं० ॥ सुगंधतरुसंपन्नंगंधद्रव्यविवर्धनं ॥ गृहाणधूपकंगंगेसंसारार्णवतारिणि ॥ धूपं० ॥ ब्राह्मणो०॥अनंतज्व
लितंदीपमज्ञानांधविनाशनं ॥ आर्तिक्यंचमयादत्तंगृहाणपरमेश्वरि ॥ दीपं० ॥ चंद्रमाम० ॥ नानाभक्ष्यैःसमाकीर्णपक्वान्नैर्वि
विधैरपि ॥ नैवेद्यंतेमयादत्तंगृहाणसुरपूजिते ॥ नैवेद्यं० मध्येपानीयं उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं ॥ महाफल
समानीतंगृहाणसरितांवरे ॥ मनोरमंफलंदेहिदेवदेवस्यवल्लभे ॥ फलं० ॥ कर्पूरैलालवंगादितांबूलीदलखादिरैः ॥ जातिपूग
फलैर्युक्तंत्रयोदशगुणान्वितं ॥ तांबूलं० ॥ न्यूनातिरिक्तपूजायाःसंपूर्णफलहेतवे ॥ दक्षिणांकांचनींदेविस्थापयामितवाग्रतः ॥
सुवर्णपुष्पदक्षिणांस० ॥ श्रियेजातइतिमहानीराजनं ॥ कर्पूरदीपं ॥ नाभ्याआसी० ॥ नमःश्रेयस्करीदेविनमःपापप्रणाशिनि ॥
नमःशांतिकरीगंगेनमोदारिद्र्यनाशिनि ॥ नमस्कारं० ॥ सप्तास्यासन्० यानिकानिचेति प्रदक्षिणां० यज्ञेनयज्ञम० नमो
देव्याइति मंत्रपुष्पं० ॥ प्रार्थना ॥ मंदाकिनिनमस्तुभ्यंनमस्तेसुरपूजिते ॥ भोगावतिनमस्तुभ्यंनागैस्त्वंतत्रवंदिते ॥ भागीर
थिनमस्तुभ्यंसागराणांचपावनि ॥ प्रयोगेचत्रिरूपात्वंनैमिषेचसरस्वती ॥ विंध्येत्वंनर्मदादेविकुशतुल्यातुगौतमी ॥ तस्मात्त्वं
सर्वदासेव्याश्रद्धयाचकलौयुगे ॥ हरिद्वारेनमस्तुभ्यंसरिदीशेनमोनमः ॥ जयगंगेनमोगंगेगोदावरिनमोऽस्तुते ॥ भूतंभव्यंच
यत्पापंभविष्यतिचगौतमि ॥ विनाशंयातुतत्सर्वंप्रसादात्तवदुःखहे ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि ॥ यत्कृतंतुमयादे
विपरिपूर्णतदस्तुमे ॥ प्रार्थनांस० ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षमांपरमेश्वरि ॥ ततःदंपती

वतीजाह्नवीत्रिदशेश्वरी ॥ द्वादशैतानिनामानियत्रयत्रजलाशये ॥ स्नानयुक्तःस्मरेन्नित्यंतत्रतत्रवसेद्धिसा ॥ शरीरेजर्जरीभूते व्याधिग्रस्तेकलेवरे ॥ औषधंजाह्नवीतोयंवैद्योनारायणोहरिः ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयागंगेसर्व पापहराभव ॥ इतिप्रार्थ्यअर्घ्यादिदद्यात् ॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमोस्तुते ॥ सूर्यनारायणायेदमर्घ्यं० ॥ भागीरथिनमस्तुभ्यसर्वपापप्रणाशिनि ॥ भक्त्यातुभ्यंमयादत्तंगृहाणार्घ्यंनमोस्तुते ॥ गंगायैइद मर्घ्यं० ॥ नमःकमलनाभायनमस्तेऽजलशायिने ॥ नमस्तेऽस्तुहृषीकेशगृहाणार्घ्यंनमोस्तुते ॥ विष्णवेइदमर्घ्यं० ॥ इत्यर्घ्या णिदत्वा ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ वस्त्रंनिष्पीड्य गंधपुष्पाक्षतहरि द्राकुंकुमादिभिर्गंगांतुलसींसूर्यंचनाम्नापूजयेत् ॥ इतिस्नानविधिः ॥ ॥ छ ॥ ॥ छ ॥

॥ ९१ ॥ हेमाद्रिकृतःस्नान ( महा ) सङ्कल्पः ॥ आचम्यप्राणानायम्य ॥ श्रीमन्महागणाधिपतयेनमः श्रीगुरुभ्यो नमः ॥ श्रीसर० ॥ वेदाय० ॥ वेदपुरुषाय० ॥ इष्टदेवताभ्यो० ॥ कुलदे० ॥ स्थानदेवताभ्यो० ॥ ग्रामदेवताभ्यो० ॥ वास्तुदेवता भ्यो० ॥ एतत्कर्मप्रधानदेवताभ्यो० ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदं० ॥ वक्रतुण्डमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे ॥ यंनत्वा कृतकृत्याःस्युस्तंनमामिगजाननम् ॥ गणनाथंनमस्कृत्यनमस्कृत्यपितामहम् ॥ विष्णुंरुद्रंश्रियंदेवींवंदेभक्त्यासरस्वतीम् ॥ स्थानंक्षेत्रंनमस्कृत्यदिननाथंनिशाकरम् ॥ धरणीगर्भसंभूतंशशिपुत्रंबृहस्पतिम् ॥ दैत्याचार्यंनमस्कृत्यसूर्यपुत्रंशनैश्चरम् ॥

राहुंकेतुंनमस्कृत्ययज्ञारम्भेविशेषतः ॥ शक्रादिदेवताःसर्वान्नृषींश्चैवतपोधनान् ॥ गर्गंमुनिंनमस्कृत्यनारदंपर्वतंतथा ॥ वसिष्ठं
मुनिशार्दूलंविश्वामित्रंचगोभिलम् ॥ अगस्त्यंचपुलस्त्यंचदक्षमत्रिंपराशरम् ॥ भरद्वाजंचमांडव्यंयाज्ञवल्क्यंचगालवम् ॥
अन्येविप्रास्तपोयुक्तावेदशास्त्रविचक्षणाः ॥ तान्सर्वान्प्रणिपत्याहंशुभकर्मसमारभे ॥ लाभस्ते० अग्रतःश्रीनृसिंहश्चपृष्ठतोदेव
कीसुतः ॥ रक्षतांपार्श्वयोर्देवौभ्रातरौरामलक्ष्मणौ ॥ ॐस्वस्तिश्रीमुकुंदसच्चिदानंदस्यब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृंभि
ताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहंकारोद्भूतवियदादिपंचमहाभूतेंद्रियदेवतानिर्मितेऽडकटाहे, चतुर्दश
लोकात्मके, लीलयातन्मध्यवर्तिभगवतःश्रीनारायणस्यनाभिकमलोद्भूतसकललोकपितामहस्यब्रह्मणःसृष्टिंकुर्वतस्तदुद्धरणाय
प्रजापतिप्रार्थितस्यसमस्तजगदुत्पत्तिस्थितिलयकारणस्यजगद्रक्षाशिक्षाविचक्षणस्यप्रणतपारिजातस्यअच्युतानंतवीर्यस्यश्रीम
द्भगवतोमहापुरुषस्यअचिंत्यापरिमितशक्त्याध्येयमानस्यमहाजलौघमध्येपरिभ्रममाणानामनेककोटिब्रह्मांडानामेकतमेऽव्य
क्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते, अस्मिन्महतिब्रह्मांडखंडे, आधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजि
ते,कूर्मानंतवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखाद्यष्टमहानागैर्ध्रियमाणेऐरावतपुंडरीकवामनकुमुदांजनपुष्पदंतसार्व
भौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलरसातलमहातलपाताललोकानामुपरिभागे, भूर्लोकभुवर्लोकस्व
र्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकाख्यसप्तलोकानामधोभागेचक्रवालशैलमहावलयनागमध्यवर्तिनोमहाकालमहाफ
णिराजशेषस्यसहस्रफणानांमणिमंडलमंडिते, दिग्दंतिशुंडोत्तंभिते, अमरावत्यशोकवतीभोगवतीसिद्धवतीगांधर्ववतीकांच्यवं

त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठितेइंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानेष्टदिक्पालप्रतिष्ठिते,धरध्रुवाध्वरसोमपाप्रभं
जनानलप्रत्यूषप्रभासाख्याष्टवसुभिर्विराजितेहरत्र्यंबकरुद्रमृगव्याधापराजितकपालीभैरवशंभुकपर्दिवृषाकपित्रदुरूपाख्यैका
दशरुद्रैःसंशोभिते, रुद्रोपेंद्रसवितृधातृत्वष्टर्यमेंद्रेशानभगमित्रपूषाख्यद्वादशादित्यप्रकाशिते, यमनियमासनप्राणायामप्रत्या
हारधारणाध्यानसमाध्यष्टांगनिरतवसिष्ठवालखिल्यविश्वामित्रदक्षकात्यायनकौंडिण्यगौतमांगिरसपाराशर्यव्यासवाल्मीकशु
कशौनकभरद्वाजसनकसनंदनसनातनसनत्कुमारनारदादिमुख्यमुनिभिःपवित्रिते, लोकालोकाचलवलयिते, लवणेक्षुरससुरा
सर्पिर्दधिक्षीरोदकयुक्तसप्तार्णवपरिवृते, जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्कराख्यसप्तद्वीपयुते, इंद्रकांस्यताम्रगभस्तिनागसौ
म्यगंधर्वचारणभारतेतिनवखंडमंडिते,सुवर्णगिरिकार्णिकोपेतमहासरोरुहाकारपंचाशत्कोटियोजनविस्तीर्णभूमंडले, अयोध्याम
थुरामायाकाशीकांच्यवंतिकाद्वारावतीतिसप्तपुरीप्रतिष्ठिते,महामुक्तिप्रदस्थले,शालग्रामशंभलनंदिग्रामेतिग्रामत्रयविराजिते,
चंपकारण्यवदरिकारण्यदंडकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजंबुकारण्यविंध्यारण्यद्राक्षारण्यनहुपारण्यकाम्य
कारण्यद्वैतारण्यनैमिपारण्यादीनांमध्येसुमेरुनिषधकूटशुभ्रकूटश्रीकूटहेमकूटरजतकूटचित्रकूटत्रिकूटकिष्किंधश्वेताद्रिकूट
हिमविंध्याचलानांहरिवर्षकिंपुरुषवर्षयोश्चदक्षिणे, नवसहस्रयोजनविस्तीर्णे, भरतखंडेमलयाचलसह्याचलविंध्याचलानामुत्त
रेणस्वर्णप्रस्थचंडप्रस्थसूक्तिकआवंतकरमणकमहारमणकपांचजन्यसिंहललंकाऽशोकवत्यलकावतीसिद्धवतीगांधर्ववत्यादिपु
ण्यपुरीविराजिते नवखंडोपद्वीपमंडिते, दक्षिणावस्थितरेणुकाद्वयसूकरकाशीकांचीकालिकालवटेश्वरकालंजरमहाकालेतिन

वोपरयुते, द्वादशज्योतिर्लिंगगंगा (भागीरथी) गोदा (गौतमी) क्षिप्रायमुनासरस्वतीनर्मदातापीपयोष्णीचंद्रभागाकावेरीमंदा
किनीप्रवराकृष्णावेण्याभीमरथीतुंगभद्रामलापहाकृतमालाताम्रपर्णीविशालाक्षीवंजुलाचर्मण्वतीवेत्रवतीभोगावतीविशोका
कौशिकीगंडकीवासिष्ठीप्रमदाविश्वामित्रीफल्गुनीचित्रकाश्यपीसरयूसर्वपापहारिणीकरतोयाप्रणीतावज्रात्रकगामिनीसुवर्णरे
खाशोणाभवनाशिनीशीघ्रगाकुशावर्तिनीब्रह्मानंदामहितनयेत्यनेकपुण्यनदीभिर्विलसिते, ब्रह्मपुत्रसिंधुनदादिपरमपवित्रजल
विराजिते; हिमवन्मेरुगोवर्धनक्रौंचचित्रकूटहेमकूटमहेंद्रमलयसह्येंद्रकीलपारियात्राद्यनेकपर्वतसमन्विते, मतंगमाल्यकिष्किं
धऋष्यशृंगेतिमहानगसमन्विते, अंगवंगकलिंगकाश्मीरकांवोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोरलपांचालगौडमा
लवमलयसिंहलद्रविडकर्नाटकललाटकरहाटवरहाटपानाटपांड्यनिपधमागधांध्रदशार्णभोजकुरुगांधारविदर्भविदेहवाह्लीकव
र्वरकैकेयकोसलविराटशूरसेनकोंकणकैकटमत्स्यमद्रपारसिकखर्जूरयावनम्लेच्छजालंधरेतिसिद्धवत्यन्यदेशविशेषभाषाभूमि
पालविचित्रिते, इलावृतकुरुभद्राश्वकेतुमालकिंपुरुपरमणकहिरण्मयादिनववर्षाणांमध्ये, भरतखंडे, वकुलचंपकपाटलाब्जपु
न्नागजातिकरवीररसालकह्लारकेतक्यादिनानाविधकुसुमस्तवकविराजिते, कोकंतहिरण्यशृंगकुब्जार्बुदमणिकर्णीवटशालग्राम
सूकरमथुरागयानिष्क्रमणलोहार्गलपोतस्वामिप्रभासवदरीतिचतुर्दशगुह्यविलसिते, जंवुद्वीपेकुरुक्षेत्रादिसमभूमध्यरेखायाःप
श्चिमदिग्भागे, कुलमेरोर्दक्षिणदिग्भागेविंध्यस्यदक्षिणेदेशेश्रीशैलस्यवायव्यदेशे, कृष्णावेण्योर्मध्यदेशे, मत्स्यकूर्मवराहनृसिंह
वामनपरशुरामरामकृष्णवुद्धकल्किरितिदशावताराणांमध्येवौद्धावतारे गंगादिसरिद्भिःपाविते, एवंनवसहस्रयोजनविस्तीर्ण

भारतवर्षे,निखिलजनपावनपरमभागवतोत्तमशौनकादिनिवासितेनैमिपारण्ये,आर्यावर्तांतर्गतब्रह्मावर्तैकदेशेसूर्यान्वयभूभृत्प्र
तिष्ठिते,श्रीमन्नारायणनाभिकमलोद्भूतसकलजगत्स्रष्टुःपरार्धद्वयजीविनोब्रह्मणोद्वितीयेपरार्धेएकपंचाशत्तमेवर्षे, प्रथममासेप्र
थमपक्षे,प्रथमदिवसेअह्नोद्वितीयेयामे,तृतीयेमुहूर्ते, रथंतरादिद्वात्रिंशत्कल्पानांमध्येअष्टमेश्वेतवाराहकल्पे,स्वायंभुवादिमन्वं
तराणांमध्येसप्तमेवैवस्वतमन्वंतरेकृतत्रेताद्वापारकलिसंज्ञकानांचतुर्णांयुगानांमध्येवर्तमानेअष्टाविंशतितमेकलियुगे, तत्प्रथमे
विभागे, (पादे)श्रीमन्नृपविक्रमार्कात्श्रीमन्नृपशालीवाहनाद्वायथासंख्यागमेनचांद्रसावनसौरनाक्षत्रादिप्रकारेणागतानांप्रभ
वादिषष्टिसंवत्सराणांमध्येअमुकनाम्निसंवत्सरे,उत्तरगोलावलंबिनिश्रीमार्तंडमंडले, अमुकर्तौ, अमुकमासे, अमुकपक्षे, अमुक
तिथौ,अमुकवासरे,अमुकनक्षत्रे,अमुकयोगे, अमुककरणे, अमुकराशिस्थेचंद्रे, अमुकस्थेसूर्ये, अमुकस्थितेदेवगुरौ, शेषेपुग्रहेषु
यथायथास्थानस्थितेषुसत्सु,एवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ,अमुकशर्मणः(भार्ययासहाधिकृतस्य) ममइहजन्मनि
जन्मांतरेवावाल्ययौवनवार्धक्यावस्थासुवाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुःस्पर्शनश्रोत्रमनोभिचरित-ज्ञाताज्ञातकामाका
ममहापातकोपपातकादिसंचितानांपापानां, ब्रह्महननसुरापानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानांबुद्धिपूर्वका
णांमनोवाक्कायकृतानांवहुकालाभ्यस्तानांउपपातकानांच, स्पृष्टास्पृष्टसंकलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणवि
हिताकरणकर्मलोपजनितानां, रसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयअजादिपशुविक्रयस्वगृहवि
क्रयनीलीविक्रयअक्रेयविक्रयपण्यविक्रयजलचरादिजंतुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसंभूतानां, निरर्थकवृक्षच्छेद

नऋणानपाकरणब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलाहरणलोहादिहरणनाना
वस्तुहरणरूपाणां, ब्राह्मणनिंदागुरुनिंदावेदनिंदाशास्त्रनिंदापरनिंदाभक्ष्यभक्षणाभोज्यभोजनाचोष्यचोषणालेह्यलेहनापेया
पेयास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावंद्यवंदनाचिंत्यचिंतनायाज्ययाजनापूज्यपूजनरूपाणां, मातृपितृतिरस्कारस्त्रीपुरु
षप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमनचांडालादिहीनजातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरू
पाणां,कूटसाक्षित्वपैशून्यवादमिथ्यापवादम्लेच्छसंभाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरणवृत्तिच्छेदनपरवृत्तिहरणरूपाणां, मित्रवं
चनगुरुवंचनस्वामिवंचनासत्यभाषणगर्भपातनपथितांबूलचर्वणहीनजातिसेवनपरान्नभोजनगणान्नभोजनलशुनपलांडुगृंजन
भक्षणतालवृक्षफलभक्षणोच्छिष्टभक्षणमार्जारोच्छिष्टभक्षणपर्युषितान्नभक्षणरूपाणां पंक्तिभेदकरणभ्रूणहिंसापशुहिंसात्रालहिं
साद्यनेकहिंसोद्भूतानां, शौचत्यागस्नानत्यागसंध्यात्यागोपासनाग्नित्यागवैश्वदेवत्यागरूपाणां, निषिद्धाचरणकुग्रामवासब्रह्म
द्रोहगुरुद्रोहपितृमातृद्रोहपरद्रोहपरनिंदात्मस्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां, गोयानवृषभयानमहिषीयानगर्दभयानोष्ट्र
यानाजयानभृत्याभरणस्वग्रामत्यागगोत्रत्यागकुलत्यागदूरस्थमंत्रणविप्राशाभेदनावंदिताशीर्वादग्रहणपतितसंभाषणरूपाणां,
पतितजनपंक्तिभोजनाहःसंगमवृथामनोरथादिपापानांतथा—"महापापोपपापाभ्यांनानायोनिषुयत्कृतम् ॥ बालभावेनयत्पापं
क्षुत्तृडर्थेचयत्कृतम् ॥ आत्मार्थचैवयत्पापंपरार्थेचैवयत्कृतम् ॥तीर्थेषुचैवयत्पापंगुर्ववज्ञाकृतंचयत् ॥ रागद्वेषादिजनितंकामक्रो
धेनयत्कृतम् ॥ हिंसानिद्रादिजंपापंभेदद्दष्ट्याचयन्मया ॥ देहाभिमानजंपापंसर्वदायन्मयाकृतम् ॥ भूतंभव्यंचयत्पापंभविष्यं

चैवगौतमि ॥ शुष्कमार्द्रंचयत्पापंजानताजानताकृतम् ॥ महल्लघुचयत्पापंतन्मेनाशयजाह्नवि ॥ ब्रह्महामद्यपःस्तेयीतथैवगुरु तल्पगः ॥ महापापानिचत्वारितत्संसर्गीतुपंचमः ॥ अतिपातकमन्यच्चतश्यूनमुपपातकम् ॥ गोवधोव्रात्यतास्तेयंऋणानांचा नपक्रियाः ॥ अनाहिताग्नितापण्यविक्रयःपरिवेदनम् ॥ इंधनार्थेद्रुमच्छेदःस्त्रीहिंसौपधिजीवनम् ॥ हिंसायात्राविधानंचभृत काध्यापनंतथा ॥ प्रथमाश्रममारभ्ययत्किंचित्किल्विपंकृतम् ॥ कृमिकीटादिहननंयत्किंचित्प्राणिहिंसनम् ॥ मातापित्रोरशुश्रू पातद्वाक्याकरणंतथा ॥ अपूज्यपूजनंचैवपूज्यानांचव्यतिक्रमः ॥ अनाश्रमस्थताऽग्न्यादिदेवाशुश्रूपणंतथा ॥ परकार्यापहरणं परद्रव्योपजीवनम् ॥ ततोऽज्ञानकृतंवापिकायिकंवाचिकंतथा ॥ मानसंत्रिविधंपापंप्रायश्चित्तैरनाशितम् ॥ तस्मादशेपपापे भ्य स्त्राहित्रैलोक्यपावनि ॥ निष्पापोऽस्म्यधुनादेविप्रसादात्तवनान्यथा ॥ स्त्रीणांविशेपः–पाणिग्रहणमारभ्यस्वकर्मापरिपाल नम् ॥ इंद्रियाभिरतिःपुंसुनानायोनिपुयाभवेत् ॥ कृमिकीटादिहननंपंक्तिभेदादिकंतथा ॥ स्पृष्टास्पृष्टमनाचारंमनसादोप कल्पनम् ॥तत्सर्वंनाशयक्षिप्रंगंगेत्वंयात्रयानया ॥" इत्यादिप्रकीर्णपातकानांएतत्कालपर्यंतंसंचितानांलघुस्थूलसूक्ष्माणांचनिः शेपपरिहारार्थंदशावरान्दशापरान्आत्मनासहितान्एकविंशतिपुरुपानुद्धर्तुंब्रह्मलोकावधिपंचाशत्कोटियोजनविस्तीर्णेऽस्मि न्भूमंडलेसप्तर्षिमंडलपर्यंतंवालुकाभिःकृतराशेःवर्पसहस्रावसानेएकैकवालुकापकर्पक्रमेणसर्वराश्यपकर्पसंमितकालपर्यंतंब्रह्म लोकेब्रह्मसायुज्यताप्राप्त्यर्थंतथाममसमस्तपितॄणांआत्मनश्चविष्ण्वादिलोकप्राप्तये, अधीतानामध्येप्यमाणानांचाध्यायानांस्था पनविच्छेदक्रोशघोपणदंतविवृतिदुर्वृत्तद्रुतोच्चारितवर्णानां,पूर्वसवर्णानांगलोपलंवितविवृतोच्चारितवर्णानाम्, श्लिष्टास्पष्टवर्ण



॥ ९२ ॥

विघट्टनादिभिःपठितानांश्रुतीनांयद्यातयामत्वंतत्परिहारार्थं, अष्टत्रिंशदनध्यायाध्ययने, रथ्यासंचरतःशूद्रस्यशृण्वतोऽध्ययने,
म्लेच्छांत्यजादेःशृण्वतोऽध्ययने, अशुचिदेशेऽध्ययने, आत्मनोशुचित्वेऽध्ययने, अक्षरस्वरानुस्वारपदच्छेदकंडिकाव्यंजनह्र
स्वदीर्घप्लुतकंठतालुमूर्धन्योष्ठ्यदंत्यनासिकानुनासिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनांव्यत्ययेनोच्चारे, मा
धुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं, सर्वस्यवेदस्यसवीर्यत्वसंपादनद्वारायथावत्फलप्राप्त्यर्थं, श्रीपरमेश्वरप्रीत्यर्थं
देवब्राह्मणसवितृसूर्यनारायणसंनिधौगंगाभागीरथ्याममुकतीर्थेवाप्रवाहाभिमुखंस्नानमहंकरिष्ये। इतिहेमाद्रिगतोमहासंकल्पः
॥९२॥शीतलाष्टकं ॥ आचमनादिदेशकालनिर्देशांतेऽमुकगोत्रस्यामुकशर्मणःशरीरेउत्पन्नोत्पत्स्यमानविस्फोटकजनितदा
हादिसर्वोपद्रवस्यजीवच्छरीराविरोधेनपरिहारार्थंशीतलाष्टकस्यनवावृत्तिजपंक० ॥ आसनादि० अस्यश्रीशीतलाष्टकस्तोत्रमंत्र
स्यश्रीरुद्रऋषिःश्रीशीतलादेवताअनुष्टुप्छंदःलक्ष्मीर्बीजंभवानीशक्तिःविस्फोटकपीडापरिहारार्थेजपेविनियोगः ॥ रुद्रर्षयेनमः
शिरसि अनुष्टुप्छंदसेनमोमुखे शीतलांबादेवतायैहृदये ॐ ह्रींनमःशीतलेदेविस्फोटकान्नाशयनाशयतंतूञ्छेदय २ दाहंशमय
२ ॐऐंह्रींश्रींशीतलादेव्यैस्वाहा ह्रींनमःशीतलेअंगुष्ठाभ्यांनमःएवंतर्जन्यादिषडंगंविधायध्यात्वामूलमंत्रमष्टवारंजप्त्वाध्याये
त् ॥ भूतेशंभूतसैन्यैःपरिवृतमनिशंकृष्णवेतालपीठेहाहाहीहीतिवादैरशनिभरसहैरट्टहासैरुपेतं ॥ हस्तैःसाहस्रसंख्यैरनलगण
सखैःसाध्यदेहाधिरूढान्स्फोटान्दंदह्यमानंमुहुरहमनिशंघंटकर्णंनमामि ॥ १ ॥ घंटकर्णमहाप्राज्ञसर्वोपद्रवनाशन ॥ मसूरि
काभयंप्राप्यरक्षरक्षमहाबल ॥ २ ॥ अथशीतलाध्यानं ॥ सजलांबुदवच्छ्यामांरक्तमाल्यानुलेपनां ॥ तुंगस्तनांविशालाक्षींना

नालंकारभूषितां ॥ लसन्नितंवविंवाढ्यांखरारूढांसुशोभनां ॥ हस्ताभ्यांमार्जनींशूर्पंदधानांनग्निकांस्मरेत् ॥ मार्जन्यामार्जयन्स्फोटान्रोगानन्यांश्चदारुणान् ॥ शूर्पेकृत्वांभसिक्षारेप्रक्षिपंतींमुहुर्मुहुः ॥ इति ॥ स्कंदउवाच ॥ नमस्तेदेवदेवशशीतलायाः स्तवंशुभं ॥ वक्तुमर्हस्यशेषेणविस्फोटकभयापहं ॥ १ ॥ ईश्वरउवाच ॥ नमामिशीतलांदेवींरासभस्थांदिगंबरां ॥ मार्जनीकलशोपेतांशूर्पालंकृतमस्तकां ॥ २ ॥ वंदेहंशीतलांदेवींसर्वरोगभयापहां ॥ यामासाद्यनिवर्तेतविस्फोटकभयंमहत् ॥ ३ ॥ शीतले शीतलेचेतियोब्रूयाद्दाहपीडितः ॥ विस्फोटकभवोदाहःक्षिप्रंतस्यविनश्यति ॥ ४ ॥ यस्त्वामुदकमध्येतुध्यात्वासंपूजयेन्नरः ॥ विस्फोटकभयंघोरंगृहेतस्यनजायते ॥ ५ ॥ शीतलेज्वरदग्धस्यपूतिगंधहतस्यच ॥ प्रनष्टचक्षुषांपुंसांत्वामाहुर्जीवनौषधं ॥ ६ ॥ शीतलेतनुजान्रोगान्नृणांहरसिदुस्त्यजान् ॥ विस्फोटकविशीर्णानांत्वमेकामृतवर्षिणी ॥ ७ ॥ गलगंडग्रहारोगायेचान्येदारुणानृणां ॥ तेतवस्मरणादेवशीतलेयांतिसंक्षयं ॥ ८ ॥ नमंत्रोनौषधंकिंचित्पापरोगस्यविद्यते ॥ त्वमेकाशीतलेत्रात्रीनान्यांपश्यामिदेवतां ॥ ९ ॥ मृणालतंतुसदृशींनाभिहृन्मध्यसंस्थितां ॥ यस्त्वांविचिंतयेद्देवींतस्यमृत्युर्नजायते ॥ १० ॥ इतिशीतलाष्टकं ॥ अष्टकंशीतलादेव्यायःपठेन्मानवःसदा ॥ विस्फोटकभयंघोरंकुलेतस्यनजायते॥श्रोतव्यंपठितव्यंचश्रद्धाभक्तिसमन्वितैः॥ उपसर्गविनाशायपरंस्वस्त्ययनंमहत् ॥ शीतलाष्टकमेवेदंनदेयंयस्यकस्यचित् ॥ दातव्यंचसदातस्मैश्रद्धाभक्तियुतस्यच ॥ रासभोगर्दभश्चैवखरोवैशाखनंदनः ॥ शीतलावाहनश्चैवदूर्वाकंदनकंदनः ॥ एतानिखरनामानिशीतलाग्रेतुयःपठेत् ॥ तस्यदेहेचगेहेच शीतलानैवबाधते ॥ इतिश्रीस्कंदपुराणेशीतलाष्टकंसंपूर्णम् ॥ ॥ ॥ छ ॥ ॥ इतिपूजासमुच्चयःसंपूर्णः ॥

## ॥ गणेशाद्यष्टोत्तरशत-सहस्रनामावलिसमुच्चयः ॥

॥ ९३ ॥ गणेशाष्टोत्तरशतनामावलिः ॥ ॐकारःसर्वत्रादौनाम्नामंतेचनमःशब्दःप्रयोज्यः ॥ ॐ विघ्नेशायनमः वि
श्ववरदाय० विश्वचक्षुषे० जगत्प्रभवे० हिरण्यरूपाय० सर्वात्मने० ज्ञानरूपाय० जगन्मयाय० ऊर्ध्वरेतसे० महाबाहवे०
अमेयाय० अमितविक्रमाय० वेदवेद्याय० महाकालाय० विद्यानिधये० अनामयाय० सर्वज्ञाय० सर्वगाय० शांताय० ग
जास्याय० चित्तेश्वराय० विगतज्वराय० विश्वमूर्तये० अमेयात्मने० विश्वाधाराय० २५ सनातनाय० सामगाय० प्रियाय०
मंत्रिणे० सत्वाधाराय० सुराधीशाय० समस्तसाक्षिणे० निर्द्वंद्वाय० निर्लोकाय० अमोघविक्रमाय० निर्मलाय० पुण्याय०
कामदाय० कांतिदाय० कामरूपिणे० कामपोपिणे० कमलाक्षाय० गजाननाय० सुमुखाय० शर्मदाय० मूपकाधिपवाहना
य० शुद्धाय० दीर्घतुंडाय० श्रीपतये० अनंताय० ५० मोहवर्जिताय० वक्रतुंडाय० शूर्पकर्णाय० परमाय० योगीशाय०
योगधाम्ने० उमासुताय० आपद्धंत्रे० एकदंताय० महाग्रीवाय० शरण्याय० सिद्धसेनाय० सिद्धवेदाय० करुणाय० सिद्धा
य० भगवते० अव्यग्राय० विकटाय० कपिलाय० ढुंढिराजाय० उग्राय० भीमोदराय० शुभाय० गणाध्यक्षाय० गणेशा
य० ७५ गणाराध्याय० गणनायकाय० ज्योतिःस्वरूपाय० भूतात्मने० धूम्रकेतवे० अनुकूलाय० कुमारगुरवे० आनंदा
य० हेरंबाय० वेदस्तुताय० नागयज्ञोपवीतिने० दुर्धर्षाय० बालदूर्वांकुरप्रियाय० भालचंद्राय० विश्वधात्रे० शिवपुत्राय०
विनायकाय० लीलासेविताय० पूर्णाय० परमसुंदराय० विघ्नांधकाराय० सिंदूरवदनाय० नित्याय० विभवे० प्रथमपूजि

ताय० १०८ दिव्यपादाब्जाय० भक्तमंदराय० शूरमहाय० रत्नसिंहासनाय० मणिकुंडलमंडिताय० भक्तकल्याणाय० अमेयाय० कल्याणगुरवे० सहस्रशीर्ष्णे० महागणपतयेनमः ॥ ११० ॥ इतिगणेशाष्टोत्तरशतनामावलिः ॥ ॥ छ ॥

॥ ९४ ॥ गणेशसहस्रनामावलिः ॥ ॐकारःसर्वत्रादावंतेचनमःशब्दःप्रयोज्यः ॥ ॐ गणेश्वरायनमः गणाध्यक्षाय० गणाराध्याय० गणप्रियाय० गणनाथाय० गणस्वामिने० गणेशाय० गणनायकाय० गणमूर्तये० गणपतये० गणत्रात्रे० गणंजयाय० गणपाय० गणक्रीडाय० गणदेवाय० गणाधिपाय० गणज्येष्ठाय० गणश्रेष्ठाय० गणप्रेष्ठाय० गणाधिराजाय० गणराजे० गणगोप्त्रे० गणांगाय० गणदैवताय० गणबंधवे० २५ गणसुहृदे० गणाधीशाय० गणप्रथाय० गणप्रियसखाय० गणप्रियसुहृदे० गणप्रियरतोनित्याय० गणप्रीतिविवर्धनाय० गणमंडलमध्यस्थाय० गणकेलिपरायणाय० गणाग्रण्ये० गणेशाय० गणगीताय० गणोच्छ्रयाय० गण्याय० गणहिताय० गर्जद्गणसेनाय० गणोद्यताय० गणप्रीतिप्रमथनाय० गणभीत्यपहारकाय० गणनार्हाय० गणप्रौढाय० गणभर्त्रे० गणप्रभवे० गणसेनाय० गणचराय० ५० गणप्राज्ञाय० गणैकराजे० गणाग्र्याय० गण्यनाम्ने० गणपालनतत्पराय०गणजिते० गणगर्भस्थाय० गणप्रवणमानसाय० गणगर्वपरिहर्त्रे० गणाय० गणनमस्कृताय० गणार्चितांघ्रियुगुलाय० गणरक्षणकृते० गणध्याताय० गणगुरवे० गणप्रणयतत्पराय० गणागणपरित्रात्रे० गणादिहरणोद्धुराय० गणसेतवे० गणनताय० गणकेतवे० गणाग्रगाय० गणहेतवे० गणग्राहिणे० गणानुग्रहकारकाय० ७५ गणागणानुग्रहभुवे० गणागणवरप्रदाय० गणस्तुताय० गणप्राणाय० गणसर्वस्वदायकाय० गणवल्लभमूर्तये० गणभूतये० गणेष्ट

दाय० गणसौख्यप्रदाय० गणदुःखप्रणाशनाय० गणप्रथितनाम्ने० गणाभीष्टकराय० गणमान्याय० गणख्याताय० गणवी
ताय० गणोत्कटाय० गणपालाय० गणवराय० गणगौरवदायकाय० गणगर्जितसंतुष्टाय० गणस्वच्छंदगाय० गणराजाय०
गणश्रीदाय० गणभीतिहराय० गणमूर्धाभिषिक्ताय० १०० गणसैन्यपुरःसराय० गुणातीताय० गुणमयाय० गुणत्रयवि
भागकृते० गुणिने० गुणाकृतिधराय० गुणशालिने० गुणप्रियाय० गुणपूर्णाय० गुणांभोधये० गुणभाजे० गुणदूरगाय०
गुणागुणवपुषे० गुणशरीराय० गुणमंडिताय० गुणस्रष्ट्रे० गुणेशाय० गुणेशानाय० गुणेश्वराय० गुणसृष्टजगत्संघाय०
गुणसंघाय० गुणैकराजे० गुणप्रविष्टाय० गुणभुवे० गुणीकृतचराचराय० १२५ गुणप्रवणसंतुष्टाय० गुणहीनपराङ्मुखाय०
गुणैकभुवे० गुणश्रेष्ठाय० गुणज्येष्ठाय० गुणप्रभवे० गुणज्ञाय० गुणसंपूज्याय० गुणिप्रणतपादाब्जाय० गुणिगीताय० गुणो
ज्ज्वलाय० गुणवते० गुणसंपन्नाय० गुणानंदितमानसाय० गुणसंचारचतुराय० गुणसंचयसुंदराय० गुणगौराय० गुणाधा
राय० गुणसंवृतचेतनाय० गुणकृते० गुणभृते० गुण्याय० गुणाग्र्याय० गुणपारदृशे० गुणप्रचारिणे० १५० गुणयुजे० गुणा
गुणविवेककृते० गुणाकराय० गुणकराय० गुणप्रवणवर्धनाय० गुणगूढचराय० गौणसर्वसंसारचेष्टिताय० गुणदक्षिणसौहा
र्दाय० गुणदक्षिणतत्वविदे० गुणहारिणे० गुणकलाय० गुणसंघसखाय० गुणसंस्कृतसंसाराय० गुणतत्त्वविवेकाय० गुणगर्भ
धराय० गौणसुखदुःखोदयाय० गुणाय० गुणाधीशाय० गुणालयाय० गुणवीक्षणलालसाय० गुणगौरवदात्रे० गुणदात्रे० गुण
प्रभवे० गुणकृते० गुणसंबोधाय० १७५ गुणभुजे० गुणबंधनाय० गुणहृद्याय० गुणस्थायिने० गुणदायिने० गुणोत्कटाय० गुण

चक्रचराय० गौणावताराय० गुणबांधवाय० गुणबंधवे० गुणप्रज्ञाय० गुणप्राज्ञाय० गुणालयाय० गुणधात्रे० गुणप्राणाय० गुणगोपाय० गुणाश्रयाय० गुणयायिने० गुणधायिने० गुणपाय० गुणपालकाय० गुणाहृततनवे० गौणाय० गीर्वाणाय० गुणगौरवाय० २०० गुणवत्पूजितपदाय० गुणवत्प्रीतिदाय० गुणवते० गीतकीतये० गुणवद्बद्धसौहृदाय० गुणवद्वरदाय० गुणवत्प्रतिपालकाय० गुणवद्गुणसंतुष्टाय० गुणवद्रचितद्रवाय० गुणवद्रक्षणपराय० गुणवत्प्रणयप्रियाय० गुणवच्चक्रसंचाराय० गुणवत्कीर्तिवर्धनाय० गुणवद्गुणचित्तस्थाय० गुणवद्गुणरक्षणाय० गुणवत्पोषणकराय० गुणवच्छत्रुसूदनाय० गुणवत्सिद्धिदात्रे० गुणवद्गौरवप्रदाय० गुणवत्प्रवणस्वांताय० गुणवद्गुणभूषणाय० गुणवत्कुलविद्वेषिविनाशकरणक्षमाय० गुणिस्तुतगुणाय० गर्जत्प्रलयांबुदनिस्वनाय० गजाय० २२५ गजाननाय० गजपतये० गर्जन्नागयुद्धविशारदाय० गजकर्णाय० गजराजाय० गजाननाय० गजरूपधराय० गर्जते० गजयूथोद्धुरध्वनये० गजाधीशाय० गजाधाराय० गजासुरजयोद्धुराय० गजदंताय० गजवराय० गजकुंभाय० गजध्वनये० गजमायाय० गजमयाय० गजश्रिये० गजगर्जिताय० गजामयहराय० गजपुष्टिप्रदायकाय० गजोत्पत्तये० गजत्रात्रे० गजहेतवे० गजाधिपाय० गजमुख्याय० गजकुलप्रवराय० गजदैत्यघ्ने० गजकेतवे० गजाध्यक्षाय० गजसेतवे० गजाकृतये० गजवंद्याय० गजप्राणाय० गजसेव्याय० २५० गजप्रभवे० गजमताय० गजेशानाय० गजेशाय० गजपुंगवाय० गजदंतधराय० गर्जन्मधुपाय० गजवेषभृते० गजच्छद्मने० गजाग्रस्थाय० गजयायिने० गजाजयाय० गजराजे० गजयूथस्थाय० २७५ गजगंजकभंजकाय० गर्जितोज्झितदैत्यासवे० गर्जितत्रातविष्टपाय० गानज्ञाय०

गानकुशलाय० गानतत्त्वविवेकवते० गानश्लाघिने० गानरसाय० गानज्ञानपरायणाय० गानागमज्ञाय० गानांगाय० गान
प्रवणचेतनाय० गानध्येयाय० गानगम्याय० गानध्यानपरायणाय० गानभुवे० गानकृते० गानचतुराय० गानविद्याविशा
रदाय० गानशीलाय० गानशालिने० गतश्रमाय० गानविज्ञानसंपन्नाय० गानश्रवणलालसाय० गानायत्ताय० ३०० गान
मयाय० गानप्रणयवते० गानध्यात्रे० गानबुद्धये० गानोत्सुकमनसे० गानोत्सुकाय० गानभूमये० गानसीम्ने० गुणोज्ज्व
लाय० गानांगज्ञानवते० गानमानवते० गानपेशलाय० गानवत्प्रणयाय० गानसमुद्राय० गानभूषणाय० नागसिंधवे० गान
पराय० गानप्राणाय० गणाश्रयाय० गानैकभुवे० गानहृष्टाय० गानचक्षुषे० गणैकदृशे० गानमत्ताय० गानरुचये० ३२५
गानविदे० गानवित्प्रियाय० गानांतरात्मने० गानाढ्याय० गानभ्राजत्स्वभाववते० गानमायाय० गानधराय० गानविद्या
विशोधकाय० गानाहितघ्नाय० गानेंद्राय० गानलीनाय० गतिप्रियाय० गानाधीशाय० गानलयाय० गानाधाराय० गती
श्वराय० गानवन्मानदाय० गानभूतये० गानैकभूतिमते० गानताननताय० गानतानमानविमोहिताय० गुरवे० गुरूदर
श्रेणये० गुरुतत्त्वार्थदर्शनाय० गुरुस्तुताय० ३५० गुरुगुणाय० गुरुमायाय० गुरुप्रियाय० गुरुकीर्तये० गुरुभुजाय० गुरु
वक्षसे० गुरुप्रभाय० गुरुलक्षणसंपन्नाय० गुरुद्रोहपराङ्मुखाय० गुरुविद्याय० गुरुप्राणाय० गुरुबाहुबलोच्छ्रयाय० गुरुदैत्य
प्राणहराय० गुरुदैत्यापहारकाय० गुरुगर्वहराय० गुह्यप्रवराय० गुरुदर्पघ्ने० गुरुगौरवदायिने० गुरुभीत्यपहारकाय० गुरुशुं
डाय० गुरुस्कंधाय० गुरुजंघाय० गुरुप्रथाय० गुरुभालाय० गुरुगलाय० ३७५ गुरुश्रिये० गुरुगर्वनुदे० गुरवे० गुरुपीनां

साय॰ गुरुप्रणयलालसाय॰ गुरुमुख्याय॰ गुरुकुलस्थायिने॰ गुणगुरवे॰ गुरुसंशयभेत्रे॰ गुरुमानप्रदायकाय॰ गुरुधर्मस
दाराध्याय॰ गुरुधर्मनिकेतनाय॰ गुरुदैत्यगलच्छेत्रे॰ गुरुसैन्याय॰ गुरुद्युतये॰ गुरुधर्माग्रगण्याय॰ गुरुधर्मधुरंधराय॰ गरि
ष्ठाय॰ गुरुसंतापशमनाय॰ गुरुपूजिताय॰ गुरुधर्मधराय॰ गौरधर्माधाराय॰ गदापहाय॰ गुरुशास्त्रविचारज्ञाय॰ गुरुशा
स्त्रकृतोद्यमाय॰ ४०० गुरुशास्त्रार्थनिलयाय॰ गुरुशास्त्रालयाय॰ गुरुमंत्राय॰ गुरुश्रेष्ठाय॰ गुरुमंत्रफलप्रदाय॰ गुरुस्त्री
गमनेदोषप्रायश्चित्तनिवारकाय॰ गुरुसंसारसुखदाय॰ गुरुसंसारदुःखभिदे॰ गुरुश्लाघापराय॰ गौरभानुखंडावतंसभृते॰
गुरुप्रसन्नमूर्तये॰ गुरुशापविमोचकाय॰ गुरुकांतये॰ गुरुमहते॰ गुरुशासनपालकाय॰ गुरुतंत्राय॰ गुरुप्रज्ञाय॰ गुरुभाय॰
गुरुदैवताय॰ गुरुविक्रमसंचाराय॰ गुरुदृशे॰ गुरुविक्रमाय॰ गुरुक्रमाय॰ गुरुप्रेष्ठाय॰ गुरुपाखंडखंडकाय॰ ४२५ गुरुग
र्जितसंपूर्णब्रह्मांडाय॰ गुरुगर्जिताय॰ गुरुपुत्रप्रियसखाय॰ गुरुपुत्रभयापहाय॰ गुरुपुत्रपरित्रात्रे॰ गुरुपुत्रवरप्रदाय॰ गुरुपु
त्रार्तिशमनाय॰ गुरुपुत्राधिनाशनाय॰ गुरुपुत्रप्राणदाय॰ गुरुभक्तिपरायणाय॰ गुरुविज्ञानविभवाय॰ गौरभानुवरप्रदाय॰
गौरभानुसुताय॰ गौरभानुत्रासापहारकाय॰ गौरभानुप्रियाय॰ गौरभानवे॰ गौरववर्धनाय॰ गौरभानुपरित्रात्रे॰ गौरभानु
सखाय॰ गौरभानुप्रभवे॰ गौरभानुमत्प्राणनाशनाय॰ गौरीतेजःसमुत्पन्नाय॰ गौरीहृदयनंदनाय॰ गौरीस्तनंधयाय॰ गौरी
मनोवांछितसिद्धिकृते॰ ४५० गौराय॰ गौरगुणाय॰ गौरप्रकाशाय॰ गौरभैरवाय॰ गौरीशनंदनाय॰ गौरीप्रियपुत्राय॰
गदाधराय॰ गौरीवरप्रदाय॰ गौरीप्रणयाय॰ गौरवच्छवये॰ गौरीगणेश्वराय॰ गौरीप्रवणाय॰ गौरभावनाय॰ गौरात्मने॰

गौरकीर्तये० गौरभावाय० गरिष्ठदृशे० गौतमाय० गौतमीनाथाय० गौतमीप्राणवल्लभाय० गौतमाभीष्टवरदाय० गौतमा
भयदायकाय० गौतमप्रणवप्रह्वाय० गौतमाश्रमदुःखघ्ने० गौतमीतीरसंचारिणे० ४७५ गौतमीतीर्थदायकाय० गौतमापत्परि
हराय० गौतमाधिविनाशनाय० गोपतये० गोधनाय० गोपाय० गोपालप्रियदर्शनाय० गोपालाय० गोगणाधीशाय० गोक
श्मलनिवर्तयाय० गोसहस्राय० गोपवराय० गोपगोपीसुखावहाय० गोवर्धनाय० गोपगोपाय० गोद्दत्रे० गोकुलवर्धनाय०
गोचराय० गोचराध्यक्षाय०गोचरप्रीतिवृद्धिकृते० गोमिने० गोकष्टसंत्रात्रे० गोसंतापनिवर्तकाय० गोष्ठाय० गोष्ठाश्रयाय०
५०० गोष्ठपतये० गोधनवर्धनाय० गोष्ठप्रियाय० गोष्ठामयाय० गोष्ठमयनिवर्तकाय० गोलोकाय० गोलकाय० गोभृते०
गोभर्त्रे० गोसुखावहाय० गोदुहे० गोधुग्गणप्रेष्ठाय० गोदोग्ध्रे० गोपयःप्रियाय० गोत्राय० गोत्रपतये० गोत्रप्रभवे० गोत्रभ
यापहाय० गोत्रवृद्धिकराय० गोत्रप्रियाय० गोत्रार्तिनाशनाय० गोत्रोद्धारपराय० गोत्रप्रभवाय० गोत्रदेवतायै० गोत्रवि
ख्यातनाम्ने० ५२५ गोत्रिणे० गोत्रप्रपालकाय० गोत्रसेतवे० गोत्रकेतवे० गोत्रहेतवे० गतक्लमाय० गोत्रत्राणकराय० गोत्र
पतये० गोत्रेशपूजिताय० गोत्रविदे० गोत्रभित्त्रात्रे० गोत्रभिद्वरदायकाय० गोत्रभित्पूजितपदाय० गोत्रभिच्छत्रुसूदनाय०
गोत्रभित्प्रीतिदाय० गोत्रभिदे० गोत्रपालकाय० गोत्रभिद्गीतचरिताय० गोत्रभिद्राज्यरक्षकाय० गोत्रभिद्वरदायिने० गोत्र
भित्प्राणनिश्चयाय० गोत्रभिद्भयसंहर्त्रे० गोत्रभिन्मानदायकाय० गोत्रभिद्गोपनपराय० गोत्रभित्सैन्यनायकाय० ५५०
त्राधिपप्रियाय० गोत्रपुत्रप्रीताय० गिरिप्रियाय० ग्रंथज्ञाय० ग्रंथकृते० ग्रंथग्रंथिदाय० ग्रंथविघ्नघ्ने० ग्रंथादये० ग्रंथसं

चाराय० ग्रंथश्रवणलोलुपाय० ग्रंथाधीनक्रियाय० ग्रंथप्रियाय० ग्रंथार्थतत्त्वविदे० ग्रंथसंशयसंछेदिने० ग्रंथवक्त्राय० ग्रहा
ग्रण्यै० ग्रंथगीतगुणाय० ग्रंथगीताय० ग्रंथादिपूजिताय० ग्रंथारंभस्तुताय० ग्रंथग्राहिणे० ग्रंथार्थपारदृशे० ग्रंथदृशे० ग्रंथ
विज्ञानाय० ग्रंथसंदर्शशोधकाय० ५७५ ग्रंथकृत्पूजिताय० ग्रंथकराय० ग्रंथपरायणाय० ग्रंथपारायणपराय० ग्रंथसंदेहभं
जकाय० ग्रंथकृद्वरदात्रे० ग्रंथकृते० ग्रंथवंदिताय० ग्रंथानुरक्ताय० ग्रंथज्ञाय० ग्रंथानुग्रहदायकाय० ग्रंथांतरात्मने० ग्रंथा
र्थपंडिताय० ग्रंथसौहृदाय० ग्रंथपारंगमाय० ग्रंथगुणविदे० ग्रंथविग्रहाय० ग्रंथसेतवे० ग्रंथहेतवे० ग्रंथकेतवे० ग्रहाग्र
गाय० ग्रंथपूज्याय० ग्रंथगेयाय० ग्रंथग्रथनलालसाय० ग्रंथभूमये० ६०० ग्रहश्रेष्ठाय० ग्रहकेतवे० ग्रहाश्रयाय० ग्रंथका
राय० ग्रंथकारमान्याय० ग्रंथप्रसारकाय० ग्रंथश्रमज्ञाय० ग्रंथांगाय० ग्रंथभ्रमनिवारकाय० ग्रंथप्रवणसर्वांगाय० ग्रंथप्रण
यतत्पराय० गीताय० गीतगुणाय० गीतकीर्तये० गीतविशारदाय० गीतस्फीतये० गीतगतिप्रणयिने० गीतचंचुराय० गीत
प्रसन्नाय० गीतात्मने० गीतलोलाय० गतस्पृहाय० गीताश्रयाय० गीतभयाय० गीततत्त्वार्थकोविदाय० ६२५ गीतसंश
यसंछेत्रे० गीतसंगीतशासनाय० गीतार्थज्ञाय० गीततत्त्वाय० गीतातत्त्वाय० गताश्रयाय० गीतासाराय० गीतकृतये० गीत
विघ्नविनाशनाय० गीतासक्ताय० गीतलीनाय० गीताविगतसंज्वराय० गीतैकदृशे० गीतभूतये० गीताप्रीताय० गताल
साय० गीतवाद्यपटवे० गीतप्रभवे० गीतार्थतत्त्वविदे० गीतागीतविवेकज्ञाय० गीतप्रवणचेतनाय० गतभिये० गतविद्वे
षाय० गतसंसारबंधनाय० गतमायाय ६५० गतत्रासाय० गतदुःखाय० गतज्वराय० गतासुहृदे० गताज्ञानाय० गतदु

ष्टाशयाय० गताय० गतार्तये० गतसंकल्पाय० गतदुष्टविचेष्टिताय० गताहंकारसंचाराय० गतदर्पाय० गताहिताय० गत
विद्याय० गतभयाय० गतागतनिवारकाय० गतव्यथाय० गतापायाय० गतदोषाय० गतेःपराय० गतसर्वविकाराय० गज
गर्जितकुंजराय० गतकंपितभूपृष्ठाय० गतरुपे० गतकल्मषाय० ६७५ गतदैन्याय० गतस्तैन्याय० गतमानाय० गतश्रमाय०
गतक्रोधाय० गतग्लानये० गतम्लानये० गतभ्रमाय० गताभावाय० गताभवाय० गततत्त्वार्थसंशयाय० गयासुरशिरश्छेत्रे०
गयासुरवरप्रदाय० गयावासाय० गयानाथाय० गयावासिनमस्कृताय० गयातीर्थफलाध्यक्षाय० गयायात्राफलप्रदाय०
गयामयाय० गयाक्षेत्राय० गयाक्षेत्रनिवासकृते गयावासिस्तुताय० गायन्मधुव्रतलसत्कटाय० गायकाय० गायकवराय०
७०० गायकेष्टफलप्रदाय० गायकप्रणयिने० गात्रे० गायकाभयदायकाय० गायकप्रवणस्वांताय० गायकप्रथमाय० गाय-
कोद्गीतसंप्रीताय० गायकोत्कटविघ्नघ्ने० गानगेयाय० गायकेशाय० गायकांतरसंचाराय० गायकप्रियदाय० गायकाधीन
विग्रहाय० गेयाय० गेयगुणाय० गेयचरिताय गेयतत्त्वविदे० गायकत्रासघ्ने० ग्रंथाय० ग्रंथतत्त्वविवेचकाय० गाढानु
रागाय० गाढांगाय० गाढगंगाजलोद्वहाय० गाढावगाढजलधये० गाढप्रज्ञाय० ७२५ गतामयाय० गाढप्रत्यर्थिसैन्याय०
गाढानुग्रहतत्पराय० गाढाश्लेषरसाभिज्ञाय० गाढनिर्वृतिसाधकाय० गंगाधरेष्टवरदाय० गंगाधरभयापहाय० गंगाधरगुरवे०
गंगाधरध्यानपरायणाय० गंगाधरस्तुताय० गंगाधराराध्याय० गतस्मयाय० गंगाधरप्रियाय० गंगाधराय० गंगांबुसुंदराय०
गंगाजलरसास्वादचतुराय० गंगानिरताय० गंगाजलप्रणयवते० गंगातीरविहाराय० गंगाप्रियाय० गंगाजलावगाहनपराय०

गंधमादनसंवासाय० गंधमादनकेलिकृते० गंधानुलिप्तसर्वांगाय० गंधलुभ्यन्मधुव्रताय० ७५० गंधाय० गंधर्वराजाय० गंधर्वप्रियकृते० गंधर्वविद्यातत्त्वज्ञाय० गंधर्वप्रीतिवर्धनाय० गकारवीजनिलयाय० गंधकाय० गर्विगर्वनुदे० गंधर्वगणसंसेव्याय० गंधर्ववरदायकाय० गंधर्वाय० गंधमातंगाय० गंधर्वकुलदैवताय० गंधर्वसंशयच्छेत्रे० गंधर्ववरदर्पघ्ने० गंधर्वप्रवणस्वांताय० गंधर्वगणसंस्तुताय गंधर्वार्चितपादाब्जाय० गंधर्वभयहारकाय० गंधर्वाभयदाय० गंधर्वप्रीतिपालकाय० गंधर्वगीतचरिताय० गंधर्वप्रणयोत्सुकाय० गंधर्वगानश्रवणप्रणयिने० गंधभाजनाय० ७७५ गंधर्वत्राणसन्नद्धाय० गंधर्वसमरक्षमाय० गंधर्वस्त्रीभिराराध्याय० गानाय० गानपटवे० गच्छाय० गच्छपतये० गच्छनायकाय० गच्छगर्वघ्ने० गच्छराजाय० गच्छेशाय० गच्छराजनमस्कृताय० गच्छप्रियाय० गच्छगुरवे० गच्छत्राणकृतोद्यमाय० गच्छप्रभवे० गच्छचराय० गच्छप्रियकृतोद्यमाय० गच्छातीतगुणाय० गच्छमर्यादाप्रतिपालकाय० गच्छधात्रे० गच्छभर्त्रे० गच्छवंद्याय० गुरोर्गुरवे० गृत्साय० ८०० गृत्समदाय० गृत्समदाभीष्टवरप्रदाय० गीर्वाणगीतचरिताय० गीर्वाणगणसेविताय० गीर्वाणवरदात्रे० गीर्वाणभयनाशकृते० गीर्वाणगणसंवीताय० गीर्वाणारातिसूदनाय० गीर्वाणधाम्ने० गीर्वाणगोप्त्रे० गीर्वाणगर्वनुदे० गीर्वाणार्तिहराय० गीर्वाणवरदायकाय० गीर्वाणशरणाय० गीतनाम्ने० गीर्वाणसुंदराय० गीर्वाणप्राणदाय० गंत्रे० गीर्वाणानीकरक्षकाय० गुहेहापूरकाय० गंधमत्ताय० गीर्वाणपुष्टिदाय० गीर्वाणप्रयुतत्रात्रे०गीतगोत्राय० गताहिताय० ८२५ गीर्वाणसेवितपदाय० गीर्वाणप्रथिताय० गलते० गीर्वाणगोत्रप्रवराय० गीर्वाणवलदाय० गीवाणप्रियकर्त्रे० गीर्वाणागमसारविदे०

गीर्वाणगणसंपत्तये॰ गीर्वाणव्यसनापघ्ने॰ गीर्वाणप्रणयाय॰ गीतग्रहणोत्सुकमानसाय॰ गीर्वाणमदसंहर्त्रे॰ गीर्वाणगुणपाल
काय॰ ग्रहाय॰ ग्रहपतये॰ ग्राहाय॰ ग्रहपीडाप्रणाशनाय॰ ग्रहस्तुताय॰ ग्रहाध्यक्षाय॰ ग्रहेशाय॰ ग्रहदैवताय॰ ग्रहकृते॰
ग्रहभर्त्रे॰ ग्रहेशानाय॰ ग्रहेश्वराय॰ ८५० ग्रहाराध्याय॰ ग्रहत्रात्रे॰ ग्रहगोप्त्रे॰ ग्रहोत्कटाय॰ ग्रहगीतगुणाय॰ ग्रंथप्रणेत्रे॰
ग्रहवंदिताय॰ गविने॰ गवीश्वराय॰ गर्विणे॰ गर्विष्ठाय॰ गर्विगर्वघ्ने॰ गवांप्रियाय॰ गवांनाथाय॰ गवीशानाय॰ गवांप
तये॰ गव्यप्रियाय॰ गवांगोप्त्रे॰ गविसंपत्तिसाधकाय॰ गवीरक्षणसन्नद्धाय॰ गवीभयहराय॰ गवीगर्वहराय॰ गोदाय॰
गोप्रदाय॰ गोजयप्रदाय॰ ८७५ गोजायुतबलाय॰ गंडगुंजन्मधुव्रताय॰ गंडस्थलगलद्दानमिलन्मत्तालिमंडिताय॰गुडाय॰
गुडप्रियाय॰ गंडगलद्दानाय॰ गुडाशनाय॰ गुडाकेशाय गुडाकेशसहायाय॰ गुडलड्डुभुजे॰ गुडभुजे॰ गुडभुग्गण्याय॰
गुडाकेशवरप्रदाय॰ गुडाकेशार्चितपदाय॰ गुडाकेशसखाय॰ गदाधरार्चितपदाय॰ गदाधरजयप्रदाय॰ गदायुधाय॰
गदापाणये॰ गदायुद्धविशारदाय॰ गदघ्ने॰ गददर्पघ्नाय॰ गदगर्वप्रणाशनाय॰ गदग्रस्तपरित्रात्रे॰ गदाडंबरखंडकाय॰
९०० गुहाय॰ गुहाग्रजाय॰ गुप्ताय॰ गुहाशायिने॰ गुहाशयाय॰ गुहप्रीतिकराय॰ गूढाय॰ गूढगुल्फाय॰ गुणैकदृशे॰
गिरे॰ गीष्पतये॰ गिरीशानाय॰ गीर्देवीगीतसद्गुणाय॰ गीर्देवाय॰ गीष्प्रियाय॰ गीर्भुवे॰ गीरात्मने॰ गीष्प्रियंकराय॰
गीर्भूमये॰ गीरसज्ञाय॰ गीःप्रसन्नाय॰ गिरीश्वराय॰ गिरीशजाय॰ गिरौशायिने॰ गिरिराजसुखावहाय॰ ९२५ गिरि
राजार्चितपदाय॰ गिरिराजनमस्कृताय॰ गिरिराजगुहाविष्टाय॰ गिरिराजाभयप्रदाय॰ गिरिराजेष्टवरदाय॰ गिरिराज

प्रपालकाय० गिरिराजसुतासूनवे० गिरिराजजयप्रदाय० गिरिव्रजवनस्थायिने० गिरिव्रजचराय० गर्गाय० गर्गप्रियाय० गर्गदेवाय० गर्गनमस्कृताय० गर्गभीतिहराय० गर्गवरदाय० गर्गसंस्तुताय० गर्गगीतप्रसन्नात्मने० गर्गानंदकराय० गर्गप्रियाय० गर्गमानप्रदाय० गर्गारिभंजकाय० गर्गवर्गपरित्रात्रे० गर्गसिद्धिप्रदायकाय० गर्गग्लानिहराय० ९५० गर्गश्रमनुदे० गर्गसंगताय० गर्गाचार्याय० गर्गऋषये० गर्गसन्मानभाजनाय० गंभीराय० गणितप्रज्ञाय० गणितागमसारविदे० गणकाय० गणकश्लाघ्याय० गणकप्रणयोत्सुकाय० गणकप्रवणस्वांताय० गणिताय० गणितागमाय० गद्याय० गद्यमयाय० गद्यपद्यविद्याविवेचकाय० गललग्नमहानागाय० गलदर्चिषे० गलन्मदाय० गलत्कुष्ठिव्यथाहंत्रे० गलत्कुष्ठिसुखप्रदाय० गंभीरनाभये० गंभीरस्वराय० गंभीरलोचनाय० ९७५ गंभीरगुणसंपन्नाय० गंभीरगतिशोभनाय० गर्भप्रदाय० गर्भरूपाय० गर्भापद्विनिवारकाय० गर्भागमनसंभावाय० गर्भदाय० गर्भशोकनुदे० गर्भत्रात्रे० गर्भगोप्त्रे० गर्भपुष्टिकराय० गर्भगौरवसाधनाय० गर्भगर्वनुदे० गरीयसे० गर्वनुदे० गर्वमर्दिने० गरदमर्दकाय० गरसंतापशमनाय० गुरुराजसुखप्रदाय० गर्भाश्रयाय० गर्भमयाय० गर्भामयनिवारकाय० गर्भाधाराय० गर्भधराय० गर्भसंतोषसाधकायनमः १००० इतिगणेशसहस्रनाम ॥

॥ ९५ ॥ कृष्णाष्टोत्तरशतनामावलिः ॥ ॐकारःसर्वत्रादावंतेचनमःशब्दोयोज्यः ॥ ॐ श्रीकृष्णायनमः कमलानाथाय० वासुदेवाय० सनातनाय० वसुदेवात्मजाय० पुण्याय० लीलामानुषविग्रहाय० श्रीवत्सकौस्तुभधराय० यशोदावत्सलाय० हरये० चतुर्भुजात्तचक्रासिगदाशंखाद्युदायुधाय० देवकीनंदनाय० श्रीशाय० नंदगोपप्रियात्मजाय० यमुनावेगसंहा

रिणे० वलभद्रप्रियानुजाय० पूतनाजीवितहराय० शकटासुरभंजनाय० नंदव्रजजनानंदाय० सच्चिदानंदविग्रहाय० नवनी
तविलिप्तांगाय०नवनीतनटाय० अनघाय० नवनीतनवाहाराय० मुचुकुंदप्रसादकाय०२५ षोडशस्त्रीसहस्रेशाय० त्रीभंगल
लिताकृतये० शुकवागमृताब्धींदवे० गोविंदाय० गोविदांपतये० वत्सवाट्कुचराय० अंनताय० धेनुकासुरखंडनाय० तृणी
कृततृणावर्ताय० यमलार्जुनभंजनाय० उत्तालतालभेत्त्रे० तमालश्यामलाकृतये० गोपगोपीश्वराय० योगिने० कोटिसूर्यसम
प्रभाय० इलापतये० परंज्योतिषे० यादवेंद्राय० यदूद्वहाय० वनमालिने०पीतवाससे० पारिजातापहारकाय० गोवर्धनाच
लोद्धर्त्रे० गोपालाय० सर्वपालकाय० ५० अजाय० निरंजनाय० कामजनकाय० कंजलोचनाय०मधुघ्ने० मथुरानाथाय०
द्वारकानायकाय० वलिने० वृंदावनांतःसंचारिणे० तुलसीदामभूषणाय० मुष्टिकासुरचाणूरमल्लयुद्धविशारदाय० संसारवैरि
णे० कंसारये० मुरारये० नरकांतकाय० स्यमंतकमणिहर्त्रे० नरनारायणात्मकाय० कुब्जाकृष्णांवरधराय० मायिने० परम
पूरुषाय० अनादिब्रह्मचारिणे० कृष्णाव्यसनकर्षकाय० शिशुपालशिरश्छेत्रे०दुर्योधनकुलांतकाय० विदुराक्रूरवरदाय० ७५
विश्वरूपप्रदर्शकाय० सत्यवाचे० सत्यसंकल्पाय० सत्यभामारताय० जयिने० सुभद्रापूर्वजाय० विष्णवे० भीष्ममुक्तिप्रदा
यकाय० जगद्गुरवे० जगन्नाथाय० वेणुनादविशारदाय० वृषभासुरविध्वंसिने० वाणासुरवलांतकाय० युधिष्ठिरप्रतिष्ठात्रे०
वर्हिवर्हावतंसकाय० पार्थसारथये० अव्यक्ताय० गीतामृतमहोदधये० कालीयफणिमाणिक्यरंजितश्रीपदांवुजाय० दामोद
राय० यज्ञभोक्त्रे० दानवेंद्रविनाशनाय० नारायणाय० परब्रह्मणे०पन्नगाशनवाहनाय०१०० जलक्रीडासमासक्तगोपीवस्त्रा

पहारकाय० पुण्यश्लोकाय० तीर्थपदाय० वेदवेद्याय० दयानिधये० सर्वभूतात्मकाय० सर्वग्रहरूपिणे० परात्पराय० १०८॥

॥ ९६ ॥ विष्णुसहस्रनामावलिः ॥ ॐकारःसर्वत्रादौ नमःशब्दोंतेच ॥ ॐ विश्वायनमः विष्णवे० वषट्काराय० भूत भव्यत्प्रभवे० भूतकृते० भूतभृते० भावाय० भूतात्मने० भूतभावनाय० पूतात्मने० परमात्मने० मुक्तानांपरमायैगतये० अव्ययाय० पुरुषाय० साक्षिणे० क्षेत्रज्ञाय अक्षराय० योगाय० योगविदांनेत्रे० प्रधानपुरुषेश्वराय० नारसिंहवपुषे० श्रीमते० केशवाय० पुरुषोत्तमाय० सर्वाय० २५ शर्वाय० शिवाय० स्थाणवे० भूतादये० निधयेऽव्ययाय० संभवाय० भावनाय० भर्त्रे० प्रभवाय० प्रभवे० ईश्वराय० स्वयंभुवे० शंभवे० आदित्याय० पुष्कराक्षाय० महास्वनाय० अनादिनिधनाय० धात्रे० विधात्रे० धातुरुत्तमाय० अप्रमेयाय० हृषीकेशाय० पद्मनाभाय० अमरप्रभवे० विश्वकर्मणे० ५० मनवे० त्वष्ट्रे० स्थविष्ठाय० स्थविरायध्रुवाय० अग्राह्याय० शाश्वताय० कृष्णाय० लोहिताक्षाय० प्रतर्दनाय० प्रभूताय० त्रिककुब्धाम्ने० पवित्राय० मंगलायपरस्मै० ईशानाय० प्राणदाय० प्राणाय० ज्येष्ठाय० श्रेष्ठाय० प्रजापतये० हिरण्यगर्भाय० भूगर्भाय० माधवाय० मधुसूदनाय० ईश्वराय०विक्रमिणे० ७५ धन्विने० मेधाविने० विक्रमाय० क्रमाय० अनुत्तमाय० दुराधर्षाय० कृतज्ञाय० कृतये० आत्मवते० सुरेशाय० शरणाय० शर्मणे० विश्वरेतसे० प्रजाभवाय० अह्ने० संवत्सराय० व्यालाय० प्रत्ययाय० सर्वदर्शनाय० अजाय० सर्वेश्वराय० सिद्धाय० सिद्धये० सर्वादये० अच्युताय० १०० वृषाकपये० अमेयात्मने० सर्वयोगविनिःसृताय०वसवे० वसुमनसे० सत्याय० समात्मने० संमिताय० समाय० अमोघाय०

पुंडरीकाक्षाय० वृषकर्मणे० वृषाकृतये० रुद्राय० वहुशिरसे० वभ्रवे० विश्वयोनये० शुचिश्रवसे० अमृताय० शाश्वतस्था
णवे० वरारोहाय० महातपसे० सर्वगाय० सर्वविद्भानवे० विष्वक्सेनाय० १२५ जनार्दनाय० वेदाय० वेदविदे० अव्यं
गाय० वेदांगाय० वेदविदे० कवये० लोकाध्यक्षाय० सुराध्यक्षाय० धर्माध्यक्षाय० कृताकृताय०चतुरात्मने० चतुर्व्यूहा
य० चतुर्दंष्ट्राय० चतुर्भुजाय० भ्राजिष्णवे०भोजनाय० भोक्त्रे० सहिष्णवे० जगदादिजाय० अनघाय० विजयाय० जेत्रे०
विश्वयोनये० पुनर्वसवे० १५० उपेंद्राय० वामनाय० प्रांशवे० अमोघाय० शुचये० ऊर्जिताय० अतींद्राय० संग्रहाय०
सर्गाय० धृतात्मने० नियमाय० यमाय० वेद्याय० वैद्याय० सदायोगिने० वीरघ्ने० माधवाय० मधवे० अतींद्रियाय० म
हामायाय० महोत्साहाय० महावलाय० महावुद्धये० महावीर्याय० महाशक्तये० १७५ महाद्युतये० अनिर्देश्यवपुषे० श्री
मते० अमेयात्मने० महाद्रिधृषे० महेष्वासाय० महीभर्त्रे० श्रीनिवासाय० सतांगतये० अनिरुद्धाय० सुरानंदाय० गोविं
दाय० गोविदांपतये० मरीचये० दमनाय० हंसाय० सुपर्णाय० भुजगोत्तमाय० हिरण्यनाभाय० सुतपसे० पद्मनाभाय०
प्रजापतये० अमृत्यवे० सर्वदृशे०सिंहाय० २००संधात्रे० संधिमते० स्थिराय० अजाय० दुर्मर्षणाय० शास्त्रे० विश्रुता
त्मने० सुरारिघ्ने० गुरवे० गुरुतमाय० धाम्ने० सत्याय० सत्यपराक्रमाय० निमिषाय० अनिमिषाय० स्रग्विणे० वाचस्पत
य उदारधिये० अग्रण्ये० ग्रामण्ये० श्रीमते० न्यायाय० नेत्रे० समीरणाय० सहस्रमूर्ध्ने० विश्वात्मने० २२५ सहस्राक्षाय०
सहस्रपदे० आवर्तनाय० निवृत्तात्मने० संवृताय० संप्रमर्दनाय० अहःसंवर्तकाय० वह्नये० अनिलाय० धरणीधराय० सु

प्रसादाय० प्रसन्नात्मने० विश्वधृषे० विश्वभुजे० विभवे० सत्कर्त्रे० सत्कृताय० साधवे० जह्नवे० नारायणाय० नराय०
असंख्येयाय० अप्रमेयात्मने० विशिष्टाय० शिष्टकृते० २५० शुचये० सिद्धार्थाय० सिद्धसंकल्पाय० सिद्धिदाय० सिद्धि
साधनाय० वृषाहिणे० वृषभाय० विष्णवे० वृषपर्वणे० वृषोदराय० वर्धनाय० वर्धमानाय० विविक्ताय० श्रुतिसागराय०
सुभुजाय० दुर्धराय० वाग्मिने० महेंद्राय० वसुदाय० वसवे० नैकरूपाय० बृहद्रूपाय० शिपिविष्टाय० प्रकाशनाय० ओ
जस्तेजोद्युतिधराय० २७५ प्रकाशात्मने० प्रतापनाय० ऋद्धाय० स्पष्टाक्षराय० मंत्राय० चंद्रांशवे० भास्करद्युतये० अमृ
तांशूद्भवाय० भानवे० शशिबिंदवे० सुरेश्वराय० औषधाय० जगतःसेतवे० सत्यधर्मपराक्रमाय० भूतभव्यभवन्नाथाय०
पवनाय० पावनाय० अनलाय० कामघ्ने० कामकृते० कांताय० कामाय० कामप्रदाय० प्रभवे० युगादिकृते० ३०० युगा
वर्ताय० नैकमायाय० महाशनाय० अदृश्याय० अव्यक्तरूपाय० सहस्रजिते० अनंतजिते० इष्टाय० विशिष्टाय० शिष्टेष्टा
य० शिखंडिने० नहुषाय० वृषाय० क्रोधघ्ने० क्रोधकृत्कर्त्रे० विश्वबाहवे० महीधराय० अच्युताय० प्रथिताय० प्राणाय०
प्राणदाय० वासवानुजाय० अपांनिधये० अधिष्ठानाय० अप्रमत्ताय० ३२५ प्रतिष्ठिताय० स्कंदाय० स्कंदधराय० धुर्या
य० वरदाय० वायुवाहनाय० वासुदेवाय० बृहद्भानवे० आदिदेवाय० पुरंदराय० अशोकाय० तारणाय० ताराय० शूरा
य० शौरये० जनेश्वराय० अनुकूलाय० शतावर्ताय० पद्मिने० पद्मनिभेक्षणाय० पद्मनाभाय० अरविंदाक्षाय० पद्मगर्भा
य० शरीरभृते० महर्द्धये० ४५० ऋद्धाय० वृद्धात्मने० महाक्षाय० गरुडध्वजाय० अतुलाय० शरभाय० भीमाय० सम

यज्ञाय० हविर्हरये० सर्वलक्षणलक्षण्याय० लक्ष्मीवते० समितिंजयाय० विक्षराय० रोहिताय० मार्गाय० हेतवे० दामोद
राय० सहाय० महीधराय० महाभागाय० वेगवते० अमिताशनाय० उद्भवाय० क्षोभणाय० देवाय० ३७५ श्रीगर्भाय०
परमेश्वराय० करणाय० कारणाय० कर्त्रे० विकर्त्रे० गहनाय० गुहाय० व्यवसायाय० व्यवस्थानाय० संस्थानाय० स्थान
दाय० ध्रुवाय० परर्द्धये० परमस्पष्टाय० तुष्टाय० पुष्टाय० शुभेक्षणाय० रामाय० विरामाय० विरजसे० मार्गाय० नेयाय०
नयाय० अनयाय० ४०० वीराय० शक्तिमतांश्रेष्ठाय० धर्माय० धर्मविदुत्तमाय० वैकुंठाय० पुरुषाय० प्राणाय० प्राणदा
य० प्रणवाय० पृथवे० हिरण्यगर्भाय० शत्रुघ्नाय० व्याप्ताय० वायवे० अधोक्षजाय० ऋतवे० सुदर्शनाय० कालाय० पर
मेष्ठिने० परिग्रहाय० उग्राय संवत्सराय० दक्षाय० विश्रामाय० विश्वदक्षिणाय० ४२५ विस्ताराय० स्थावरस्थाणवे०
प्रमाणाय० वीजायाव्ययाय० अर्थाय० अनर्थाय० महाकोशाय० महाभोगाय० महाधनाय० अनिर्विण्णाय० स्थविष्ठाय०
अभुवे० धर्मयूपाय० महामखाय० नक्षत्रनेमये० नक्षत्रिणे० क्षमाय० क्षामाय० समीहनाय० यज्ञाय० ईज्याय० महेज्या
य० ऋतवे० सत्राय० सतांगतये० ४५० सर्वदर्शिने० विमुक्तात्मने० सर्वज्ञाय० ज्ञानायोत्तमाय० सुव्रताय० सुमुखाय० सू
क्ष्माय० सुघोषाय० सुखदाय० सुहृदे० मनोहराय० जितक्रोधाय० वीरबाहवे० विदारणाय० स्वापनाय० स्ववशाय०
व्यापिने० नैकात्मने० नैककर्मकृते० वत्सराय० वत्सलाय० वत्सिने० रत्नगर्भाय० धनेश्वराय० धर्मगुपे० ४७५ धर्मकृते०
धर्मिणे० सते० असते० क्षराय० अक्षराय० अविज्ञात्रे० सहस्रांशवे० विधात्रे० कृतलक्षणाय० गभस्तिनेमये० सत्वस्थाय०

सिंहाय० भूतमहेश्वराय० आदिदेवाय० महादेवाय० देवेशाय० देवभृद्गुरवे० उत्तराय० गोपतये० गोप्त्रे० ज्ञानगम्याय० पुरातनाय० शरीरभूतभृते० भोक्त्रे० ५०० कपींद्राय० भूरिदक्षिणाय० सोमपाय० अमृतपाय० सोमाय० पुरुजिते० पुरुसत्तमाय० विनयाय० जयाय० सत्यसंधाय० दाशार्हाय० सात्वतांपतये० जीवाय० विनयितासाक्षिणे० मुकुंदाय० अमितविक्रमाय० अंभोनिधये० अनंतात्मने० महोदधिशयाय० अंतकाय० अजाय० महार्हाय० स्वाभाव्याय० जितामित्राय० प्रमोदनाय० ५२५ आनंदाय० नंदनाय० नंदाय० सत्यधर्मणे० त्रिविक्रमाय० महर्षये० कपिलाचार्याय० कृतज्ञाय० मेदिनीपतये० त्रिपदाय० त्रिदशाध्यक्षाय० महाशृंगाय० कृतांतकृते० महावराहाय० गोविंदाय० सुषेणाय० कनकांगदिने० गुह्याय० गभीराय० गहनाय० गुप्ताय० चक्रगदाधराय० वेधसे० स्वांगाय० अजिताय० कृष्णाय० ५५० दृढाय० संकर्षणायाच्युताय० वरुणाय० वारुणाय० वृक्षाय० पुष्कराक्षाय० महामनसे० भगवते० भगघ्ने० आनंदिने० वनमालिने० हलायुधाय० आदित्याय० ज्योतिरादित्याय० सहिष्णवे० गतिसत्तमाय० सुधन्वने० खंडपरशवे० दारुणाय० द्रविणप्रदाय० दिवस्पृशे० सर्वदृग्व्यासाय० वाचस्पतयेऽयोनिजाय० त्रिसाम्ने० सामगाय० ५७५ सामाय० निर्वाणाय० भेषजाय भिषजे० संन्यासकृते० शमाय० शांताय० निष्ठायै० शांतये० परायणाय० शुभांगाय० शांतिदाय० स्रष्ट्रे० कुमुदाय० कुवलेशयाय० गोहिताय० गोपतये० गोप्त्रे० वृषभाक्षाय० वृषप्रियाय० अनिवर्तिने० निवृत्तात्मने० संक्षेप्त्रे० क्षेमकृते० शिवाय० ६०० श्रीवत्सवक्षसे० श्रीवासाय० श्रीपतये० श्रीमतांवराय० श्रीदाय० श्रीशाय० श्रीनिवासाय० श्रीनिधये०

श्रीविभावनाय० श्रीधराय० श्रीकराय० श्रेयसे० श्रीमते० लोकत्रयाश्रयाय० स्वक्षाय० स्वंगाय० शतानंदाय० नंदिने०
ज्योतिर्गणेश्वराय० विजितात्मने० विधेयात्मने० सत्कीर्तये० छिन्नसंशयाय० उदीर्णाय० सर्वतश्चक्षुषे० ६२५ अनीशाय०
शाश्वतस्थिराय० भूशयाय० भूषणाय० भूतये० विशोकाय० शोकनाशनाय० अर्चिष्मते० अर्चिताय० कुंभाय० विशुद्धा
त्मने० विशोधनाय० अनिरुद्धाय० अप्रतिरथाय० प्रद्युम्नाय० अमितविक्रमाय० कालनेमिनिघ्ने० वीराय० शौरये० शूरज
नेश्वराय० त्रिलोकात्मने० त्रिलोकेशाय० केशवाय० केशिघ्ने० हरये० ६५० कामदेवाय० कामपालाय० कामिने० कांता
य० कृतागमाय० अनिर्देश्यवपुषे० विष्णवे० वीराय० अनंताय० धनंजयाय० ब्रह्मण्याय० ब्रह्मकृते० ब्रह्मणे० ब्रह्मणे०
ब्रह्मविवर्धनाय० ब्रह्मविदे० ब्राह्मणाय० ब्रह्मिणे० ब्रह्मज्ञाय० ब्राह्मणप्रियाय० महाक्रमाय० महाकर्मणे० महातेजसे० म
होरगाय० महाक्रतवे० ६७५ महायज्वने० महायज्ञाय० महाहविषे० स्तव्याय० स्तवप्रियाय० स्तोत्राय० स्तुतये० स्तोत्रे०
रणप्रियाय० पूर्णाय० पूरयित्रे० पुण्याय० पुण्यकीर्तये० अनामयाय० मनोजवाय० तीर्थकराय० वसुरेतसे० वसुप्रदाय०
वसुप्रदाय० वासुदेवाय० वसवे० वसुमनसे० हविषे० सद्गतये० सत्कृतये० ७०० सत्तायै० सद्भूतये० सत्परायणाय० शू
रसेनाय० यदुश्रेष्ठाय० सन्निवासाय० सुयामुनाय० भूतावासाय० वासुदेवाय० सर्वासुनिलयाय० अनलाय० दर्पघ्ने० दर्प
दाय० दृप्ताय० दुर्धराय० अपराजिताय० विश्वमूर्तये० महामूर्तये० दीप्तमूर्तये० अमूर्तिमते० अनेकमूर्तये० अव्यक्ताय०
शतमूर्तये० शताननाय० एकाय० ७२५ नैकाय० सवाय० काय० किमे० यदे० तदे० अनुत्तमायपदाय० लोकबंधवे० लो

कनाथाय० माधवाय० भक्तवत्सलाय० सुवर्णवर्णाय० हेमांगाय० वरांगाय० चंदनांगदिने० वीरघ्ने० विषमाय० शून्याय० घृताशिषे० अचलाय० चलाय० अमानिने० मानदाय० मान्याय० लोकस्वामिने० ७५० त्रिलोकधृषे० सुमेधसे० मेधजाय० धन्याय० सत्यमेधसे० धराधराय० तेजोवृषाय० द्युतिधराय० सर्वशस्त्रभृतांवराय० प्रग्रहाय० निग्रहाय० व्यग्राय० नैकशृंगाय० गदाग्रजाय० चतुर्मूर्तये० चतुर्बाहवे० चतुर्व्यूहाय० चतुर्गतये० चतुरात्मने० चतुर्भावाय० चतुर्वेदविदे० एकपदे० समावर्ताय० निवृत्तात्मने० दुर्जयाय० ७७५ दुरतिक्रमाय० दुर्लभाय० दुर्गमाय० दुर्गाय० दुरावासाय० दुरारिघ्ने० शुभांगाय० लोकसारंगाय० सुतंतवे० तंतुवर्धनाय० इंद्रकर्मणे० महाकर्मणे० कृतकर्मणे० कृतागमाय० उद्भवाय० सुंदराय० सुंदाय० रत्ननाभाय० सुलोचनाय० अर्काय० वाजसनाय० शृंगिणे० जयंताय० सर्वविज्जयिने० सुवर्णबिंदवे० ८०० अक्षोभ्याय० सर्ववागीश्वरेश्वराय० महाह्रदाय० महागर्ताय० महाभूताय० महानिधये० कुमुदाय० कुंदराय० कुंदाय० पर्जन्याय० पावनाय० अनिलाय० अमृताशाय० अमृतवपुषे० सर्वज्ञाय० सर्वतोमुखाय० सुलभाय० सुव्रताय० सिद्धाय० शत्रुजिते० शत्रुतापनाय० न्यग्रोधाय० उदुंबराय० अश्वत्थाय० चाणूरांध्रनिषूदनाय० ८२५ सहस्रार्चिषे० सप्तजिह्वाय० सप्तैधसे० सप्तवाहनाय० अमूर्तये० अनघाय० अचिंत्याय० भयकृते० भयनाशनाय० अणवे० बृहते० कृशाय० स्थूलाय० गुणभृते० निर्गुणाय० महते० अधृताय० स्वधृताय० स्वास्याय० प्राग्वंशाय० वंशवर्धनाय० भारभृते० कथिताय० योगिने० योगीशाय० ८५० सर्वकामदाय० आश्रमाय० श्रमणाय० क्षामाय० सुपर्णाय० वायुवाहनाय० धनु

धंराय० धनुर्वेदाय० दंडाय० दमयित्रे० दमाय० अपराजिताय० सर्वसहाय० नियंत्रे० नियमाय० यमाय० सत्ववते० सात्विकाय० सत्याय० सत्यधर्मपरायणाय० अभिप्रायाय० प्रियार्हाय० अर्हाय० प्रियकृते० प्रीतिवर्धनाय० ८७५ विहायसगतये० ज्योतिषे० सुरुचये० हुतभुजे० विभवे० रवये० विरोचनाय० सूर्याय० सवित्रे० रविलोचनाय० अनंताय० हुतभुजे० भोक्त्रे० सुखदाय० नैकजाय० अग्रजाय० अनिर्विण्णाय० सदामर्षिणे० लोकाधिष्ठानाय० अद्भुताय० सनात्नमः सनातनतमाय० कपिलाय० कपये० अव्ययाय० ९०० स्वस्तिदाय० स्वस्तिकृते० स्वस्तिने० स्वस्तिभुजे० स्वस्तिदक्षिणाय० अरौद्राय० कुंडलिने० चक्रिणे० विक्रमिणे० ऊर्जितशासनाय० शब्दातिगाय० शब्दसहाय० शिशिराय० शर्वरीकराय० अक्रूराय० पेशलाय० दक्षाय० दक्षिणाय० क्षमिणांवराय० विद्वत्तमाय० वीतभयाय० पुण्यश्रवणकीर्तनाय० उत्तारणाय० दुष्कृतिघ्ने० पुण्याय० ९२५ दुःस्वप्ननाशनाय० वीरघ्ने० रक्षणाय० संताय० जीवनाय० पर्यवस्थिताय० अनंतरूपाय० अनंतश्रिये० जितमन्यवे० भयापहाय० चतुरस्राय० गभीरात्मने० विदिशाय० व्यादिशाय० दिशाय० अनादये० भुवे० भुवोलक्ष्म्यै० सुवीराय० रुचिरांगदाय० जननाय० जनजन्मादये० भीमाय० भीमपराक्रमाय० आधारनिलयाय० ९५० धात्रे० पुष्पहासाय० प्रजागराय० ऊर्ध्वगाय० सत्पथाचाराय० प्राणदाय० प्रणवाय० पणाय० प्रमाणाय० प्राणनिलयाय० प्राणभृते० प्राणजीवनाय० तत्वाय० तत्वविदे० एकात्मने० जन्ममृत्युजरातिगाय० भूर्भुवःस्वस्तरवे० ताराय० सवित्रे० प्रपितामहाय० यज्ञाय० यज्ञपतये० यज्वने० यज्ञांगाय० यज्ञवाहनाय० ९७५ यज्ञभृते० यज्ञकृते० यज्ञिने० यज्ञभुजे० य

घाहनाय० दशवाहवे० अनिमिषाय० नीलकंठाय० उमापतये० विश्वरूपाय० स्वयंश्रेष्ठाय० वलवीराय० अवलाय० गणाय० गणकर्त्रे० १०० गणपतये० दिग्वाससे० कामाय० मंत्रविदे० परमाय० मंत्राय० सर्वभावकराय० हराय० कमंडलुधराय० धन्विने० वाणहस्ताय० कपालवते० अशनिने० शतघ्निने० खड्गिने० पट्टिशिने० आयुधिने० महते० स्रुवहस्ताय० सुरूपाय० तेजसे० तेजस्करनिधये० उष्णीषिणे० सुवक्त्राय० उदग्राय० १२५ विनताय० दीर्घाय० हरिकेशाय० सुतीर्थाय० कृष्णाय० सृगालरूपाय० सिद्धार्थाय० मुंडाय० सर्वशुभंकराय० अजाय० वहुरूपाय० गंधधारिणे० कपर्दिने० ऊर्ध्वरेतसे० ऊर्ध्वलिंगाय० ऊर्ध्वशायिने० नभस्थलाय० त्रिजटाय० चीरवाससे० रुद्राय० सेनापतये० विभवे० अहश्चराय० नक्तंचराय० तिग्ममन्यवे० १५० सुवर्चसाय० गजघ्ने० दैत्यघ्ने० कालाय० लोकधात्रे० गुणाकराय० सिंहशार्दूलरूपाय० आर्द्रचर्मांवरावृताय० कालयोगिने० महानादाय० सर्वकामाय० चतुष्पथाय० निशाचराय० प्रेतचारिणे० भूतचारिणे० महेश्वराय० वहुभूताय० वहुधराय० स्वर्भानवे० अमिताय० गतये० नृत्यप्रियाय० नित्यनर्ताय० नर्तकाय० सर्वलालसाय० १७५ घोराय० महातपसे० पाशाय० नित्याय० गिरिरुहाय० नभसे० सहस्रहस्ताय० विजयाय० व्यवसायाय० अतंद्रिताय० अधर्षणाय० धर्षणात्मने० यज्ञघ्ने० कामनाशकाय० दक्षयागापहारिणे० सुसहाय० मध्यमाय० तेजोपहारिणे० वलघ्ने० मुदिताय० अर्थाय० अजिताय० अवराय० गंभीराय० गभीराय० २०० गंभीरवलवाहनाय० न्यग्रोधरूपाय० न्यग्रोधाय० वृक्षकर्णस्थितये० विभवे० सुतीक्ष्णदशनाय० महाकायाय० महाननाय० विष्वक्सेनाय०

हरये० यज्ञाय० संयुगापीडवाहनाय० तीक्ष्णतापाय० हर्यश्वाय० सहाय० कर्मकालविदे० विष्णुप्रसादिताय० यज्ञाय०
समुद्राय० वडवामुखाय० हुताशनसहाय० प्रशांतात्मने० हुताशनाय० उग्रतेजसे० महातेजसे० २२५ जन्याय० विजय
कालविदे० ज्योतिषामयनाय० सिद्धये० सर्वविग्रहाय० शिखिने० मुंडिने० जटिने० ज्वालिने० मूर्तिजाय० मूर्धगाय०
वलिने० वेणविने० पणविने० तालिने० खलिने० कालकटंकटाय० नक्षत्रविग्रहमतये० गुणवुद्धये० लयाय० अगमाय०
प्रजापतये० विश्ववाहवे० विभागाय० सर्वगाय० २५० अमुखाय० विमोचनाय० सुशरणाय० हिरण्यकवचोद्भवाय०
मेंढ्रजाय० वलचारिणे० महीचारिणे० स्रुताय० सर्वतूर्यनिनादिने० सर्वातोद्यपरिग्रहाय० व्यालरूपाय० गुहावासिने०
गुहाय० मालिने० तरंगविदे० त्रिदशाय० त्रिकालधृषे० कर्मसर्ववंधविमोचनाय० असुरेंद्राणांवंधनाय० युधिशत्रुविना
शनाय० सांख्यप्रसादाय० दुर्वाससे० सर्वसाधुनिषेविताय० प्रस्कंदनाय० विभागज्ञाय० २७५ अतुल्याय० यज्ञभागविदे०
सर्वचारिणे० सर्ववासाय० दुर्वाससे० वासवाय० अमराय० हैमाय० हेमकराय० अयज्ञसर्वधारिणे० धरोत्तमाय० लोहि
ताक्षाय० महाक्षाय० विजयाक्षाय० विशारदाय० सर्वकामदाय० सर्वकालप्रसादाय० सुप्रवलाय० वलरूपधृषे० संग्रहाय०
निग्रहाय० कर्त्रे० सर्पचीरनिवासाय० मुख्याय० अमुख्याय० ३०० देहाय० काहलये० सर्वकामवराय० सर्वदाय० सर्व
तोमुखाय० आकाशनिर्विरूपाय० जिपातिने० अवशाय० खगाय० रौद्ररूपाय० अंशवे० आदित्याय० वहुरश्मये० सुव
र्चसिने० वसुवेगाय० महावेगाय० मनोवेगाय० निशाचराय० सर्ववासिने० श्रियावासिने० उपदेशकराय० अकराय०

मुनये० आत्मनिरालोकाय० संभग्नाय० ३२५ सहस्रदाय० पक्षिणे० पक्षरूपाय अतिदीप्ताय० विशांपतये० उन्मादाय० मदनाय० कामाय० अश्वत्थाय० अर्थकराय० यशसे० वामदेवाय० वामाय० प्राचे० दक्षिणाय० वामनाय० सिद्धयोगिने० महर्षये० सिद्धार्थाय० सिद्धसाधकाय० भिक्षवे० भिक्षुरूपाय० विपणाय० मृदवे० अव्ययाय० ३५० महासेनाय० विशाखाय० षष्टिभागाय० गवांपतये० वज्रहस्ताय० विष्कंभिने० चमूस्तंभनाय० वृत्तावृत्तकराय० तालाय० मधवे० मधुकलोचनाय० वाचस्पत्याय० वाजसनाय० आश्रमपूजिताय० ब्रह्मचारिणे० लोकचारिणे० सर्वचारिणे० विचारविदे० ईशानाय० ईश्वराय० कालाय० निशाचारिणे० पिनाकधृषे० निमित्तस्थाय० निमित्ताय० ३७५ नंदये० नंदिकराय० हरये० नंदीश्वराय० नंदिने० नंदनाय० नंदिवर्धनाय० भगहारिणे० निहंत्रे० कालाय० ब्रह्मणे० पितामहाय० चतुर्मुखाय० महालिंगाय० चारुलिंगाय० लिंगाध्यक्षाय० सुराध्यक्षाय० योगाध्यक्षाय० युगावहाय० वीजाध्यक्षाय० वीजकर्त्रे० अध्यात्मानुगताय० वलाय० इतिहासाय० संकल्पाय० ४०० गौतमाय० निशाकराय० दंभाय० अदंभाय० वैदंभाय० वश्याय० वशकराय० कलये० लोककर्त्रे० पशुपतये० महाकर्त्रे० अनौषधाय० अक्षराय० परब्रह्मणे० वलवते० शक्राय० नीतये० [illegible]तये० शुद्धात्मने० मान्याय० शुद्धाय० गतागताय० बहुप्रसादाय० सुस्वप्नाय० दर्पणाय० ४२५ अमित्रजिते० वेद[illegible]ाय० मंत्रकाराय० विदुषे० समरमर्दनाय० महामेघनिवासिने० महाघोराय० वशिने० कराय० अग्निज्वालाय० महा[illegible]ालाय० अतिधूम्राय० हुताय० हविषे० वृषणाय० शंकराय० वर्चस्विने० धूमकेतनाय० नीलाय० अंगलुब्धाय० शोभ

नाय० निरवग्रहाय० स्वस्तिदाय० स्वस्तिभावाय० भागिने० ४५० भागकराय० साधवे० उत्संगाय० महांगाय० महागर्भ
परायणाय० कृष्णवर्णाय० सुवर्णाय० सर्वदेहिनामिंद्रियाय० महापादाय० महाहस्ताय० महाकायाय० महायशसे० महा
मूर्ध्ने० महामात्राय० महानेत्राय० निशालयाय० महांतकाय० महाकर्णाय० महोष्ठाय० महाहनवे० महानासाय० महा
कंबवे० महाग्रीवाय० श्मशानभाजे० महावक्षसे० ४७५ महोरस्काय० अंतरात्मने० मृगालयाय० लंबनाय० लंवितोष्ठाय०
महामायाय० पयोनिधये० महादंताय० महादंष्ट्राय० महाजिह्वाय० महामुखाय० महानखाय० महारोम्णे० महाकेशाय०
महाजटाय० प्रसन्नाय० प्रसादाय० प्रत्ययाय० गिरिसाधनाय० स्नेहनाय० अस्नेहनाय० अजिताय० महामुनये० वृक्षा
कराय० वृक्षकेतवे० ५०० अनलाय० वायुवाहनाय० गंडलिने० मेरुधाम्ने० मेदिनीपतये० अथर्वशीर्षाय० सामास्याय०
ऋक्सहस्रामितेक्षणाय० यजुःपादभुजाय० गुह्याय० प्रकाशाय० जंगमाय० अमोघार्थाय० प्रसादाय० अभिगम्याय०
सुदर्शनाय० उपकाराय० प्रियाय० सर्वाय० कनकाय० कांचनच्छवये० नाभये० नंदिकराय० भावाय० पुष्करस्थपतये०
५२५ स्थिराय० द्वादशाय० त्रासनाय० आद्याय० यज्ञाय० यज्ञसमाहिताय० नक्ताय० कलये० कालाय० मकराय० काल
पूजिताय० सगणाय० गणकाराय० भूतवाहनसारथये० भस्मशयाय० भस्मगोप्त्रे० भस्मभूताय० तरवे० गणाय० लोक
पालाय० अलोकाय० महात्मने० सर्वपूजिताय० शुक्लाय० त्रिशुक्लाय० ५५० संपन्नाय० शुचये० भूतनिषेविताय० आश्र
मस्थाय० क्रियावस्थाय० विश्वकर्ममतये० वराय० विशालशाखाय० ताम्रोष्ठाय० अंबुजाय० सुनिश्चलाय० कपिलाय०

